शिशिरसुखमयूखैर्भक्तसन्तापहाऽलं
स विभुरखिलकालं मद्दृशां गोचरोऽस्तु ॥ १ ॥

नमामि श्रीमदाचार्यान् प्रभून् श्रीविट्ठलेश्वरान् ।
यद्दृशौ करुणापूर्णे मादृशां सर्वसिद्धिदे ॥ २ ॥

तत्पुत्रान् सह सूनुभिर्निजगुरून् श्रीकृष्णचन्द्राह्वयान्
भक्त्यानम्य पितामहं यदुपतिं तातं च पीताम्बरम् ।
संवीक्ष्योपनिषच्छ्रुतिस्मृतिगणं भाष्याणि सूत्राण्यपि
प्रस्थानैर्विविधैर्युतान्यथ मया वादावली तन्यते ॥ ३ ॥

---

अत्र यद्यपि प्रलयजलदजालपदस्यानुवाद्यसमर्पकत्वेन प्राथम्यमपेक्षितं तथाप्यमङ्गलस्य प्रलयपदस्य ग्रन्थारम्भे लिखितुमयुक्तत्वादविमृष्टविधेयांशस्य तदपेक्षया स्वल्पत्वात्सोऽङ्गीकृतः । वस्तुतस्तु ‘ वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते ’ इत्यादौ प्राथम्यस्य व्यभिचारात्सिद्धत्वस्यैवानूद्यलक्षणत्वेनानिश्चयान्नाविमृष्टविधेयांशदोषः । ‘ यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता । तच्छब्दयोग औत्तर्यं साध्यत्वं च विधेयता ’ इति लक्षणं तु प्रायिकमेव । भक्तसन्तापहेति । भक्तानां सन्तापं हन्ति हनिष्यति चेति तथा । ‘ब्रह्मभ्रूणवृत्रेषु किं ’बित्यत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूतकालाश्रयणाद्भाष्यकारमतेन कालान्तरे उपपदान्तरे च पुरुषं हन्ति हनिष्यतीति वा पुरुषहा, ‘ हरिहरयोरिह योगविचक्षण ’ इत्याद्युदाहरणपूर्वकं मनोरमायामङ्गीकाराद्, ‘ भृत्यवित्रासहासी ’ति पुराणे, ‘ अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहे ’ति लौकिके च प्रयोगप्राचुर्यान्नात्र चोद्यावकाशः । अखिलकालमिति । अत्यन्तसंयोगे द्वितीया । सदैवेत्यर्थः ॥ १ ॥

‘ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन ’ इति श्वेताश्वतरश्रुते ‘राचार्यं मां विजानीया’दिति भगवद्वाक्याच्च श्रीमदाचार्यान्नमस्करोति नमामीति । तृतीयस्कन्धे ‘ कृपया सम्परीतस्य प्रपन्नेऽर्पितया भृशम् ’ इति मैत्रेयवाक्याद्भगवतः कृपा प्रपन्नेष्वेवेति निश्चित्यात्र कृपापूर्णयोर्दृशोः स्वस्मिन्कार्यं ज्ञापयन् स्वस्य प्रपन्नतां सूचयति स्म ॥ २ ॥

मार्गप्रवर्तकान् गुर्वादीन् नमस्कुर्वन् लोकदृष्ट्यापि स्वस्य ज्ञानप्रकारस्य बोधनपूर्वकं ग्रन्थकरणं प्रतिजानीते तत्पुत्रानिति । भाष्याणीति, उपनिषदादीनाम् । सूत्राणीति, वैयासानि जैमिनीयानि च ॥ ३ ॥

---

१ स्वार्थे ष्यञिति टिप्पणं खपुस्तके । २ मुण्डकश्रुतेरिति खपाठः ।

**ये तत्त्वदीपभाष्यप्रभृतिषु सौक्ष्म्येण सुस्थिता वादाः ।**
**पद्ये तानवतार्य प्रकटीकुर्वेऽत्र युक्तिमद्वाक्यैः ॥ ४ ॥**

१. वेदान्ततात्पर्यनिरूपणम् ।

श्रुतिशिरसि यस्य महिमा निरुपधिरीशोऽपि यस्य खलु महिमा ।
तं कृष्णमादिमूर्तिं नमामि निरवद्यसद्गुणं ब्रह्म ॥ १ ॥

**ननु श्रुतिशिरसि निरुपधिरेव महिमा ब्रह्मणः प्रतिपाद्यत इति कथमवगम्यते ? इत्थं—भगवता बादरायणेन चतुर्लक्षण्यां प्रथमे सर्वेषां वेदान्तानां ब्रह्मणि समन्वयः प्रतिपादितः, द्वितीये चाविरोध इति सर्वे वेदान्ताः परस्प विरोधेन ब्रह्मपराः । कारणत्वान्तरत्वाऽत्तृत्वान्तर्यामित्वादिरूपं नानाविध-**

---

प्रकारमाह । ये तत्त्वेति ॥ ४ ॥

आद्यं वादमवतारयति श्रुतीत्यादि । अत्रावान्तरास्त्रयो वादाः । पूर्वं वेदान्ततात्पर्यनिरूपणरूपः । सर्वमूलत्वादस्य प्राथम्यम् । द्वितीयस्तु भ्रान्तशैवनिराकरणरूपः । तृतीयस्तु भगवतो मूलरूपनिर्धारकः । तदाह चरणत्रयेण । अस्य वादस्य निबन्धमूलकत्वज्ञापनायादिमूर्तिपदम् । 'आदिमूर्तिः कृष्ण एव सेव्यः सायुज्यकाम्यये'ति तत्र कथनात् । पूर्वस्तु भाष्यादिसिद्धः । यद्यपि तत्र भूयोविचारितमत्र स्वल्पं तथापि सङ्क्षेपतोऽपि तदर्थकथनं विनाग्रे न निर्वहतीत्यतोऽस्यात्र निबन्धनम् । अतो न प्रकारे दोषः । कासाश्चिन्नवीनयुक्तीनामुक्तेश्च । निरुपधिरिति । निष्क्रान्त उपाधेः, वास्तव इत्यर्थः । महिमेति विभूतिः । 'स्वे महिम्नी'त्यत्र परैरपि तथा व्याख्यातत्वात् । निरवद्यसद्गुणमिति । अवद्यं मायिकत्वं, अर्वाचीनप्रस्थानप्रतिपन्नं, लोकप्रतिपन्नं, साङ्गित्वादिकं च, तद्रहिताः निरवद्याः सन्तः प्रकाशाश्रयन्यायेन भिन्नाभिन्ना गुणाः स्रष्टृत्वसर्वज्ञत्वसर्वशक्तित्वदीनबन्धुत्वपतितपावनत्वादयो यस्य तत् । ब्रह्मेति । सच्चिदानन्दलक्षणं जगत्कर्तृत्वादिलक्षणं बृहद् बृंहणं बृहद्गुणं चेति । अत्र सर्वत्र 'कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'नित्यं विज्ञानमानन्दं ब्रह्म' 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति 'बृहत्त्वाद् बृंहणत्वाच्च ब्रह्म इत्यभिधीयते । बृहन्तोऽस्मिन् गुणा' इत्यादिश्रुतयः पुराणोक्तयश्चेदृश्योऽनुसन्धेयाः ॥ १ ॥

नन्वित्यादिनानुयुज्य वादमवतारयति इत्थमित्यादि । कारणत्वेत्यादि । कारणत्वे श्रुतिः पूर्वमुक्ता । तच्च कारणत्वं जन्माद्यधिकरणचतुष्टये विचारितम् । तत्र

'जन्माद्यस्य यतः शास्त्रयोनित्वा'दिति सूत्रे 'यतो वे'त्यादिकं वाक्यं विषयीकृत्य किं ब्रह्म कर्तृ उताकर्तृ इति सन्देहे 'सत्यं ज्ञानमनन्तं ब्रह्म' इति स्वरूपलक्षणश्रुतौ कर्तृत्वाकथनात्, परविवरणाय प्रवृत्तस्याग्रिमग्रन्थस्यान्यगतकर्तृत्वारोपेणापि सङ्गतेः शक्यवचनत्वात्, स्वरूपलक्षणोपजीवके कार्यलक्षणवाक्येऽप्यारोप एवादरणीयः, तस्मादकर्तृ इति पूर्वः पक्षः । **सिद्धान्तस्तु**, अस्य, प्रपञ्चस्य, 'यतो वा' इतिश्रुताविदमा निर्दिष्टस्य, जन्मादि, जन्मस्थितिप्रलयाः । यद्वा 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इति-तद्वाक्यविवरणश्रुतावाद्यस्याकाशस्य जन्म, यतो यस्मात्, तादृशं ब्रह्म । कुतः? शास्त्रयोनित्वात् । शास्त्रे योनिः शास्त्रयोनिस्तस्य भावः शास्त्रयोनित्वं तस्मात् । पूर्वकाण्डोक्तसृष्टिवाक्यसङ्ग्रहाय सामान्यग्रहणम् । काण्डद्वयेऽपि सृष्टिकारणत्वेन कथनादित्यर्थः । कार्यलक्षणस्य स्वरूपलक्षणोपजीवकत्वे स्वरूपलक्षणवाक्यशेषे कर्तृत्वादिनिषेधादर्शनात्प्रत्युत कारणत्वस्य कथनादस्थूलादिवाक्ये धर्मनिषेधेऽपि ब्रह्मणो विरुद्धधर्माश्रयत्वेन निषेधस्य च लौकिकरीतिककर्तृत्वादिनिषेधरूपत्वेन चोपपत्तौ लक्षणापादकस्यारोपस्य जघन्यत्वान्न श्रौतस्य कर्तृत्वस्य त्याग उचित इति सकलजगदादिकरणं ब्रह्मेति भावः । **समन्वयाधिकरणे** उपादानत्वं समर्थितम् । ईक्षत्यधिकरणे सच्चिद्रूपेण कारणत्वं चिन्तितम् । **आनन्दमयाधिकरणे** आनन्दरूपेण । आन्तरत्वमप्यत्रोक्तम् । अन्नमयप्राणमयमनोमयविज्ञानमयानुक्त्वा 'अन्योऽन्तर आत्माऽनन्दमय' इति तत्र प्रतिपादनात् ।

**शङ्कराचार्यमते** तु 'जन्माद्यस्य यत' इति भिन्नं सूत्रं, विषयवाक्यं तु तदेव । 'आनन्दो ह्येव खल्विमानी'ति निर्णयवाक्यं च । सूत्रार्थस्तु, अस्य, जगतो नामरूपाभ्यां व्याकृतस्यानेकभोक्तृसंयुक्तस्य मनसाप्याकलयितुमशक्यस्य, जन्मादि, जन्मस्थितिभङ्गं, यतः, सर्वज्ञात्सर्वशक्तेर्भवति, तन्नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म, बृहतेर्धातोरर्थानुगमात् जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्माङ्गीकृतं, तद्दृढयितुं द्वितीयसूत्रं शास्त्रयोनित्वादिति । शास्त्रस्य ऋग्वेदादेः सर्वज्ञकल्पस्य योनिः कारणं, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद' इत्यादिश्रुतेः । यद्वा, शास्त्रं योनिः प्रमाणमस्येति तथा । तत्त्वमतति प्राप्नोतीति शास्त्रयोनित्वाद्ब्रह्म । एवं सूत्रद्वयेन रूपनामकारणत्वं शास्त्रप्रमाणकत्वं च प्रतिज्ञाय समन्वयादिसूत्रेष्वेव हेतुवर्णनम् ।

**रामानुजभाष्ये** तु पूर्वोक्तैव श्रुतिर्विषयवाक्यम् । संशयस्तु, किमस्माद्वाक्याद्ब्रह्म

१ अत्र निर्वा(ह?)कसङ्गत्यादरेऽयमभिसन्धिः । आरोपापवादलक्षणसङ्गत्यपेक्षयेयं गरीयसी । व्याससूत्रेष्वङ्गीकारात् । ब्रह्मजिज्ञासां प्रतिज्ञाय स्वरूपलक्षणमनुक्त्वा कार्यलक्षणकथनात् । सन्दिग्धतत्परत्वानां श्रुतिवाक्यानां विषयत्वेऽपि मूलस्मारणे गौरवाभावात् ।

प्रतिपत्तुं शक्यं न वा? तत्र नेति प्राप्तम् । इदं लक्षणवाक्यत्वेनादृतं, तन्न । जन्मादीना ब्रह्मविशेषणत्वाभावात् । अथ कारणत्वं तथा, तदानेककार्यकारित्वेन ब्रह्मणोऽनेकत्वापत्तिः । न च 'श्यामो युवा मध्यमपरिमाणो देवदत्त' इत्यत्र विशेषणबहुत्वेऽपि देवदत्तैक्यवन्न दोष इति वाच्यम् । देवदत्तस्य प्रमाणान्तरेण प्रतिपन्न ऐक्ये तत्र सकलविशेषणोपसंहारस्य शक्यत्वेऽपि ब्रह्मणः शब्दैकसमधिगम्यत्वेन तत्र विशेषणबहुत्वे बहुत्वस्यावर्जनीयत्वेन तद्वैषम्यात् । नाप्युपलक्षणत्वेनैषां लक्षकत्वं युक्तम् । आकारान्तरेणाप्रतिपत्तेः । एकेनाकारेण प्रतिपन्नस्याकारान्तरेण प्रतिपत्तौ तत्सम्भवात् । 'यत्रायं सारसः स देवदत्तकेदार' इत्यादौ तथा दर्शनात् । प्रकृते च तद्वैलक्षण्यात् । न च 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति प्रतिपन्नस्य जगज्जन्मादीनामुपलक्षकत्वमिति वाच्यम् । अन्योन्याश्रयणात् । तस्मान्नानेन लक्षणेन प्रतिपत्तुं शक्यत इति पूर्वः पक्षः । सिद्धान्तस्तु जगज्जन्मादिभिरुपलक्षणैर्ब्रह्म प्रतिपत्तुं शक्यम् । बृहतेर्धातोर्बृहद्बृंहणार्थत्वेनानवधिकतादृशाकारस्योपलक्ष्यत्वात् । न चाप्रसिद्धिः । 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजते'त्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन प्रसिद्धत्वात् । अत्र हि 'सदेवेदमग्र एकमासी'दित्युपादानतां प्रतिपाद्याद्वितीयमित्यधिष्ठात्रन्तरं प्रतिषिध्य 'तदैक्षते—'त्यादिनैकमेव प्रतिपादितं, तेन जगज्जन्मस्थितिप्रलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति । जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वसर्वशक्तिमत्त्वाद्याकारं बृहत्त्वेन प्रतिपन्नं ब्रह्मेति नाकारान्तरानुपपत्तिः । जगज्जन्मादीनां विशेषणतया लक्षकत्वेऽपि न कश्चिद्दोषः । जन्मादीनां भिन्नकालकत्वेनाविरोधाद्भेदापादाने वैषम्याभावात् । नाप्यन्योन्याश्रयः । द्वितीयलक्षणेन ब्रह्मस्वरूपाभिधानादित्याद्युक्तम् ।

**मध्वभाष्ये** तु सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा यतः । 'उत्पत्तिस्थितिसंहारा नियतिज्ञानमावृतिः । बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडि'ति स्कान्दात् । पूर्वोक्तश्रुतौ 'य उ त्रिधा नु पृथिवीमुत द्याम्' इत्यादिश्रुत्यन्तरे कारणत्वस्य तत्रैव निश्चयनादित्युक्तम् ।

**भट्टभास्करभाष्ये** तु इदमुपादानलक्षणमित्युक्तम् ।

**भिक्षुभाष्ये** तु ब्रह्मणोऽधिष्ठानकारणत्वमत्र स्वीकृतम् । तच्च समवाय्यसमवायिभ्यामुदासीनं निमित्तकारणेभ्यश्च विलक्षणं चतुर्थम् । प्रकृतिपुरुषादिशक्तिगणाधारं चिन्मात्रस्वरूपमिति स्वीकृतम् ।

---

१ ब्रह्मविशेषणम् । २ समेत्यपि पाठः खपुस्तके ।

शङ्कराचार्यप्रतिपन्नं ब्रह्मणो निर्विशेषत्वं च सर्वैरेव स्वस्वप्रस्थानरीत्या दूषितम् । अत्र यद्यपि नीलकण्ठशैवाचार्यभाष्यमतं लिखितं नास्ति, तथापि तद्विशिष्टाद्वैतमतानुसारीति रामानुजमतादेव गतार्थप्रायं बोध्यम् । एवमिदं व्युत्पत्त्यर्थं दिङ्मात्रं प्रदर्शितम् ।

आन्तरत्वं तु 'अन्तस्तद्धर्मोपदेशा'दित्यत्र विचारितम् । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्यधिदैवतमथाध्यात्ममथ य एषोऽक्षिणि पुरुषो दृश्यत ' इत्यादि छान्दोग्ये श्रूयते । किमत्राधिष्ठातृदेवताशरीरमुत ब्रह्मशरीरमुत ब्रह्मेति? तत्र विकारवाचि हिरण्मयपदात्केशादीनां देहधर्माणां च कथनात्परिच्छेदाच्चाक्षुषत्वादिन्द्रियवत्त्वादसभ्यदृष्टान्ताच्चाधिकारिणो जीवस्यैव तच्छरीरम् । अथापहतपाप्मत्वादिब्रह्मधर्मश्रावणविरोध उद्भाव्यते, तर्हि पूर्वदोषस्यापि विद्यमानत्वात्केनचिन्निमित्तेन परिगृहीतं ब्रह्मण एव शरीरमस्तु । तस्य शरीरस्य कर्मजन्यत्वाभावादपहतपाप्मत्वमपि सङ्गच्छते । शरीरवदिन्द्रियस्यापि परिग्रहदृष्टान्ते वर्णमात्रपरिग्रहेण दोषाभावाच्चेति प्राप्ते प्रतिवदति, आदित्याद्यन्तर्दृश्यमानः परमात्मैव । कुतः? तद्धर्मोपदेशात्, उदित्यादेर्ब्रह्मधर्मस्योपदेशात् । अयमर्थः, कारणं ब्रह्म, कार्यं जगदिति स्थितम् । तत्र यथा कार्यासाधारणधर्मा विकारितादयो न कारणे गच्छन्ति, तथा कारणासाधारणधर्मा अपि कार्ये । कारणधर्माश्चोपजीव्यत्वाद्बलिष्ठाः, अतोऽपहतपाप्मत्वादीनां ब्रह्मधर्माणामत्रोपदेशाद्ब्रह्मैव । हिरण्मयशब्दस्तु न विकारे, प्रकृतिभूतहिरण्यशब्दस्य त्र्यच्त्वात् । केशादयस्तु नाममात्रेण तुल्या न वस्तुतः । परिच्छेदस्तु ब्रह्मधर्म एव, ' अणोरणीया'नित्यादिश्रुतेः । चाक्षुषत्वं तु भगवदिच्छया, न त्विन्द्रियसामर्थ्यात् । ' तस्यैष आत्मा विवृणुते तनुं स्वा'मित्यादिश्रुतेः । अस्थूलादिवाक्ये स्थूलत्वादिनिषेधस्तु लौकिकानामेव तेषाम् । अतो ब्रह्मैवेति ।

अत्तृत्वं च समन्वयद्वितीयपादे ' अत्ता चराचरग्रहणा'दित्यत्र विचारितम् । कठवल्लीषु पठ्यते, ' यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः, मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स ' इति । अत्रौदनोपसेचनाभ्यां सूचितः कश्चिदत्ता प्रतीयते । स किमग्निरुत जीव उत परमात्मेति संशये ' अग्निरन्नाद ' इति श्रुतिप्रसिद्धिभ्यामग्निर्वा ' तयोरन्यः पिप्पलं स्वाद्वत्ती'ति श्रुत्या जीवो वा भवतु, न तु परमात्मा, ' अनश्नन्नन्योऽभिचाकशीती'ति श्रुतेरिति पूर्वपक्षः । सिद्धान्तस्तु परमात्मैव । न हि ब्रह्मादिपदोक्तानां चराचरमृत्यूनामत्तृत्वं अग्नेर्जीवस्य वा सम्भवति । अनशनं तु प्रकृतत्वात्कर्मफलस्य, न तावता विकारजातसंहारकत्वं निषेद्धुं शक्यते । सृष्टिस्थितिसंहाराणां ब्रह्मधर्मत्वनिश्चयादिति ।

**महिमानमेव प्रतिपादयन्ति, नानाविधरूपाणि च तत्र तत्र वदन्तीत्येकस्यैव ब्रह्मणोऽनन्तरूपस्य महिमनिरूपणद्वारैव ब्रह्मपरा इति तावदविवादम् ।**

**स च महिमा वास्तविक एव भवन् स्वाधिकरणे ब्रह्मणि निरतिशयं परत्वं पर्यवसाययेत् । अन्यथा तूपाधौ पर्यवसाययन् स्वप्रतिपादकानां ब्रह्मपरत्वमेव प्रतिरुन्ध्यात् ।**

**न प्रतिरुन्ध्यात् । ब्रह्मप्रतीतीच्छयोच्चारितत्वस्य ब्रह्मपरपदार्थत्वेनोपाधि-**

---

अन्तर्यामित्वं च तत्रैव 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशा'दित्यत्र चिन्तितम् । 'य इमं च लोकं परं च लोकं सर्वाणि भूतान्यन्तरो यमयती'ति प्रकृत्य वाजसनेयके श्रूयते 'यः पृथिव्यां तिष्ठन् यः पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, एष त आत्मान्तर्याम्यमृत' इति । अत्राधिदैवादिष्वन्तर्यामी किं पृथिव्याद्यभिमानी देवताविशेष उत योगप्राप्ताणिमाद्यैश्वर्यो जीव उत परमात्मेति संशये, अन्तर्यामिशब्दोऽन्तर्यमननिबन्धनोऽत्र पृथिव्याद्यभिमानिनीं देवतां प्रकाशयति, योगप्राप्तसिद्धिं जीवान्तरं वा, न तु परमात्मानम् । तत्रास्याः सञ्ज्ञायाः अप्रसिद्धत्वाद् इति प्राप्तम् । तत्राह परमात्मैव । कुतः? तद्धर्मव्यपदेशात् । सर्वनियमनशक्तेस्तत्रैवोपपत्तेः । आत्मत्वामृतत्वयोस्तत्रैव मुख्यत्वात्। जडस्य ज्ञानाभावः प्रत्यक्षसिद्धोऽतो 'यं पृथिवी न वेदेत्या'दिना तत्तदभिमानिदेवताया एव चेतनाया ज्ञानाभावः प्रतिपाद्यत इति सोऽपि देवताभेदं बोधयति । तस्मात्परमात्मैवेति ।

आदिपदेनादृश्यत्वादिगुणकत्वसर्वप्रसिद्धत्वव्यापकत्वसार्वात्म्यसर्वाधारत्वादयः श्रौताः ज्ञेयाः ।

**महिमानमिति** । माहात्म्यं परमोत्कर्षमिति यावत् । **नानाविधरूपाणीति** । 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' 'सहस्रपादेकमूर्धा' 'नृकेसरिविग्रहम्' 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्' 'हिरण्मयः पुरुषो दृश्यते' 'त्रिलोचनं नीलकण्ठं प्रशान्त'मित्यादीनीत्यर्थः । **अनन्तरूपस्येति** । 'यदेकमव्यक्तमनन्तरूप'मिति श्रुतेरित्यर्थः । **अविवादमिति** । सर्ववैदिकवादिसम्मतम् ।

विवादविषयमाह **स चेत्यादि** । **पर्यवसाययन्निति, स्वात्मानं प्रापयन्नित्यर्थः। पर्यवस्यन्निति वा पठनीयम् ।**

प्रत्यवतिष्ठते **मायावादी न प्रतिरुन्ध्यादित्यादि** । **ब्रह्मप्रतीतीच्छयेत्यादि** । यत्तु, एवमुच्चारितत्वं न ब्रह्मपरत्वपदार्थः, **वेदान्तपरिभाषायां** तत्प्रतीतीच्छयोच्चारितत्वस्य तात्पर्यलक्षणस्य दूषितत्वात् । तथाहि यदिदं लक्षणं, तर्हि अर्थज्ञानरहितपुरुषोच्चारि-

---

१ पर्यवस्यन्निति कखपाठः ।

**द्वारापि तत्प्रतीतौ तदप्रतिरोधात् । न चात्र विनिगमकाभावः । 'यतो वाचो निवर्तन्त' इति वाङ्निवृत्तिश्रुतेरेव गमकत्वात् । न चौपनिषदश्रुतिविरोधः । तात्पर्यवृत्त्यापि तत्सम्भवात् । अभिधानवृत्त्यपेक्षया तात्पर्यवृत्तेर्बलिष्ठत्वात् ।**

---

तवेदवाक्यादर्थप्रत्ययो न स्यात् । शाब्दबोधं प्रति तात्पर्यज्ञानस्य कारणत्वेन तादृशवाक्ये च तदभावेन तद्विषयकज्ञानस्याप्यभावात् । न च तात्पर्यभ्रमादुपपत्तिः । अयमध्यापकोऽव्युत्पन्न इति विशेषदर्शनेन तदुदयस्यैव प्रतिबन्धात् । यथाकथञ्चिदुदयेऽपि तेनैव तन्नाशाच्च । न चेश्वरतात्पर्यज्ञानमेव तत्र कारणमिति वाच्यम् । ईश्वरानङ्गीकर्तुरपि तद्वाक्यादर्थज्ञानदर्शनात् । तस्मान्नेदं लक्षणम् । किं तु तत्प्रतीतिजननयोग्यत्वं तात्पर्यम् । अत एव गेहे घट इति वाक्यं गेहे घटसंसर्गप्रतीतिजननयोग्यत्वाद् घटसंसर्गपरमित्युच्यते । न च लवणानयनप्रतीतीच्छया प्रयुक्ते 'सैन्धवमानये'ति वाक्येऽप्यश्वप्रतीतिजननस्वरूपयोग्यतासत्त्वात्ततोऽश्वानयनप्रतीत्यापत्तिरिति वाच्यम् । तदितरप्रतीतीच्छयानुच्चारितत्वस्य तद्विशेषणस्य विवक्षितत्वात् । अत एव शुकादिवाक्येऽव्युत्पन्नोक्ते वेदवाक्यादौ च नाव्याप्तिः । नाप्युभयप्रतीतीच्छयोच्चारिते सा[1] । तदितरेत्यत्र विवक्षितेतरत्वस्य विवक्षितत्वादिति कश्चिदाह, तन्न। पूर्वोक्तलक्षणेन निर्वाहे गुरुशरीरस्यास्यानादरणीयत्वात् । अनर्थज्ञोक्तवेदवाक्यस्थल ईश्वरवादिनामीश्वरतात्पर्यज्ञानेनैव निर्वाहात् । अनीश्वरवादिमतेऽपि 'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकं वेदाध्ययनसामान्यादधुनाध्ययनं यथे'ति न्यायेनाध्ययनस्यानादितया यत्र क्वापि वेदार्थवेत्तरि विश्रान्त्यैव निर्वाहात् । शुकादिवाक्येऽप्येतन्न्यायस्य सुवचत्वादिति दिक् । **अत्रेति** । औपाधिकमहिमनिरूपणद्वारा ब्रह्मपरत्वे । **गमकत्वादिति** । वास्तविककारणत्वादिरूपमहिमसद्भावे वाग्गोचरत्वसौकर्यात्तन्निवृत्तिं न ब्रूयात् । ब्रूते तु निवृत्तिं, तेनास्या एव वास्तविकतदभावाक्षेपकत्वेऽपरिशेषादन्यत्रोपाधिकृतान्निरूपणमियमेव गमयति तस्मादित्यर्थः । ननु सर्वथा वागप्राप्यत्वे श्रुतिस्थप्रोक्तार्थकाऽणो विरोधाद्वागगम्यस्य विद्वत्प्रश्नायोग्यत्वाच्च 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति प्रश्नलिङ्गका श्रुतिर्विरुध्येतेत्यत आह **न चेत्यादि** । **तत्सम्भवादिति** । सम्बन्धितद्धिताङ्गीकारेऽपि औपनिषदत्वस्य तद्विषयकप्रश्नस्य सम्भवादित्यर्थः । ननु पक्षद्वयेऽपि रूपतौल्यात्तात्पर्यगोचरत्वेनैवोपनिषदत्वे का युक्तिरित्यत आह **अभिधानेत्यादि** । 'सैन्धवमानये'त्यादावनेकार्थप्रयोगस्थलेऽभिधानस्य लवणहयसाधारण्येऽपि तात्पर्यज्ञानेनैवैकतरार्थस्य निर्णीयमानत्वाद् 'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्ष्वे'त्यादौ तात्पर्यनिर्णयेनैवाभिहितार्थत्यागदर्शनाच्च तस्या एव बलिष्ठत्वमिति सैव युक्तिरित्यर्थः।

---

[1] एकतरप्रतीत्यापत्तिरित्यव्याप्तिः ।

न चात्र बहूनामनुग्रहो न्याय्यः । अनेकसावकाशापेक्षया निरवकाशस्यास्यैव बलिष्ठत्वात् । अत एव 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्राप्यसत्यजडसान्तव्यावृत्तं ब्रह्म लक्ष्यते इति सिद्धान्तितम् । एवं च 'निष्कलं निष्क्रियं शान्तम्' 'साक्षी चेता केवलो निर्गुणश्च' 'न तस्य कार्यं करणं च विद्यते' 'अस्थूलमनणु' 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितं' 'अरूपवदेव हि तत्प्रधानत्वात्' 'प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः' इत्यादयः श्रुतिस्मृतिन्याया अप्येतमेवार्थमुपोद्बलयन्तीति वेदान्तानामवास्तविकब्रह्ममहिमप्रतिपादनेऽपि न ब्रह्मपरत्वप्रतिरोध इति चेत्,

अत्रोच्यते—

इदं हि दर्शनं श्रौतं श्रौतः श्रुत्या विनिर्णयः ।
युक्तिभिस्त्वविरुद्धाभिर्विरुद्धप्रतिषेधनात् ॥ २ ॥

व्यासेन हि सन्दिग्धतत्परत्वानां सर्वत्र शब्दप्राधान्येनैव ब्रह्मपरत्वनिर्णयः क्रियते । 'शास्त्रयोनित्वाद्' 'अन्तस्तद्धर्मोपदेशात्' 'ज्योतिश्चर-

---

नन्वस्तु तात्पर्यस्य बलिष्ठत्वं, तथापि वास्तविकमहिमप्रतिपादनद्वारैव ब्रह्मपरत्वं ज्यायः, बहुवाक्यानुग्रहसिद्धेरित्यत आह न चात्र बहूनामित्यादि । उपहितनिरूपणेन तेषां वाक्यानां सावकाशत्वात्तथेति भावः । अत एवेति । 'यतो वाच' इति श्रुतेर्बलिष्ठत्वादेव । सिद्धान्तितमिति । शङ्कराचार्यैर्भाष्ये सिद्धान्तितम् । निर्विशेषब्रह्माङ्गीकारपक्षे गुणमाह एवं चेत्यादि । 'निष्कल'मित्यादिश्रुतित्रयं श्वेताश्वतरस्थम् । 'अस्थूल'मिति बृहदारण्यकस्था । 'सर्वेन्द्रिये'ति वाक्यं गीतास्थं, श्वेताश्वतरे च । 'अरूपे'त्यादि सूत्रं साधनाध्यायद्वितीयपादे ।

एवं पूर्वपक्षं सङ्गृह्य समाधातुमारभते अत्रोच्यत इत्यादि ।

इदमिति, वैयासम् । श्रौतमिति, श्रुत्यनुसारि । ननु केवलश्रुत्या निर्णयो न वक्तुं शक्यः, व्यासचरणैरपि न्यायानां दर्शितत्वाद्युक्तयोऽपि वक्तव्या एवेत्यत आह—युक्तिभिरित्यादि । विरुद्धप्रतिषेधनादिति । 'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठे'ति काठकश्रुतेस्तर्काप्रतिष्ठानस्य व्याससूत्रगोचरत्वात् । जन्मादिसूत्रे अनुमानोपन्यासं निराकृत्य सूत्राणां वेदान्तवाक्यकुसुमग्रथनार्थत्वस्य प्रतिवादिमतेऽप्यङ्गीकाराच्च तथेत्यर्थः ॥२॥

श्रुत्या तदविरुद्धयुक्तिभिर्निर्णयं वैयासदर्शनगोचरत्वेन दर्शयति व्यासेनेत्यादि । सूत्रद्वयं पूर्वमेव व्याख्यातम् । ज्योतिश्चरणाधिकरणे तु 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठे सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वा व तद्यदिदमस्मिन्नन्तः पुरुषे

**णाभिधानात्' 'श्रुतेस्तु शब्दमूलत्वात्' 'शब्दादेव प्रमित' इत्यादिषु श्रुतिसिद्धानां हेतूनां श्रुतेश्च निर्देशदर्शनात् । श्रौतश्च निर्णयस्तदनुयायिभिः श्रुत्यैव कार्यो न तु कुयुक्तिभिः । एवं सत्युपाधिपक्षस्तदा स्याद्यदि श्रुतिरुपोद्वलयेत् ।**

---

ज्योति'रिति छन्दोगाः समामनन्ति । तत्र संशयः, किमत्र ज्योतिःपदेन ज्योतिरन्तरमभिधीयत उत परमात्मेति ? तत्र द्युसम्बन्धादीपनलिङ्गाच्चादित्याज्ज्योतिरेवोच्यत इति प्राप्ते, परमात्मैवेति सिद्धान्तः । कुतः ? चरणाभिधानात्, पादाभिधानात् । पूर्ववाक्ये निर्दिष्टस्य चतुष्पादस्य ब्रह्मणः 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः, पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवी'ति मन्त्रेण चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसम्बन्धि निर्दिष्टमिति द्युसम्बन्धस्तस्यैव । दीप्तिरपि तस्यैव धर्मः, 'येन सूर्यस्तपति तेजसेद्ध' इति श्रुत्यन्तरात् । अतः पूर्ववाक्ये भूतपृथिवीशरीरहृदयाख्यपादनिर्देशाद्ब्रह्मैवेति । द्वितीयस्य प्रथमे 'कृत्स्नप्रसक्तिनिरवयत्वशब्दकोपो वे'ति सूत्रेणैकस्य ब्रह्मण उपादानत्वाङ्गीकारे यदि कृत्स्नं ब्रह्म कार्यरूपेण परिणमति, तदा कृत्स्नस्य कार्यरूपताप्रसक्त्या ब्रह्माभावप्रसङ्गः, यद्यंशेन परिणमति तदा निरवयवत्वबोधकनिष्कलादिशब्दव्याकोप इत्याशङ्क्य समाहितम् । श्रुतेस्तु शब्दमूलत्वादिति । तुः पूर्वपक्षनिरासे । उक्तो दोषो नेत्यर्थः । कुतः ? श्रुतेः । 'सदेव सौम्ये-'त्यादौ ब्रह्मणो जगदुत्पत्त्यादिश्रवणवत् 'सेयं देवतैक्षते'त्यादौ विकारव्यतिरेकेणावस्थानस्यापि श्रवणान्न कृत्स्नप्रसक्तिदोषः । नापि द्वितीयः । निरवयवत्वस्याप्युपगमात् । तत्रापि श्रुतेरित्येव हेतुः । 'निष्कलं निष्क्रिय'मित्यादिश्रावणादित्यर्थः । नन्वेवं विरुद्धं कथमुपगन्तव्यं ? तत्राह शब्दमूलत्वादिति । ब्रह्मणः शब्दप्रमाणत्वादित्यर्थः । तथा च 'यथाशब्दमभ्युपगन्तव्यं, शब्दश्चोभयमपि वक्ति, अकृत्स्नप्रसक्तिं निरवयवत्वं च, अतस्तथैव तन्मन्तव्यमिति' । लोकेऽपि मणिमन्त्रौषधीनामचिन्त्यप्रभावो दृश्यते, तत्र तर्कः पराहन्यते । किं पुनरलौकिकस्य ब्रह्मणस्तादृशत्वे ? 'अचिन्त्या खलु ये भावा न तांस्तर्केण योजये'दिति पुराणाच्चेति । प्रथमस्य तृतीये **शब्दादेव प्रमित** इति । 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य स एवाद्यः स उ एव एतद्वै तदि'ति काठके श्रूयते । तत्राङ्गुष्ठमात्रो जीवः परमात्मा वेति संशये परिमाणविशेषनिर्देशाज्जीव इति प्राप्तम् । तत्राह प्रमितोऽङ्गुष्ठमितः परमात्मैव, तत्र हेतुः-शब्दादेवेति । 'ईशानो भूतभव्यस्येति' वाक्यादेव । न ह्यन्यो भूतभव्यस्य निरङ्कुशमीशिता भवति । एतद्वै तदिति पूर्वपृष्टं स्मारयति, 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताः कृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे'ति शब्दादेव, ईशानश्रुतेरेव चाङ्गुष्ठमात्रः परमात्मैवेति । **तदनुयायिभिरि**ति । श्रुतेर्व्यासस्य चानुयायिभिः । नन्वस्त्वास्माभिरपि श्रुतिसूत्राण्यनुगम्यन्त इत्यत आह **एवं सती**त्यादि । श्रुत्यनु-

तदेव तावदसम्भवि । यस्माद् 'यतो वाच' इति श्रुतौ न वाङ्मात्राप्राप्यत्वमुच्यते, किन्तु लौकिकवागप्राप्यत्वं, मनःसहभावोक्तेः । वेदस्यापौरुषेयत्वे, ईश्वरनिःश्वासत्वे वा मनःसहभावाभावात् । 'दूतीरिव त्वं मनसोऽसी'ति श्रुत्या लौकिकवाच एव तथा कथनात् । 'अनृतं वै वाचा वदति' 'अनृतं मनसा ध्यायती'त्यादावपि तथा दर्शनात् । अनिरुक्तश्रुतिविरोधाच्च । इदमित्थतया कथितस्य निरुक्तपदार्थत्वेन तद्भिन्नस्यानिरुक्तत्वात् । सर्वथानुक्तत्वस्य तेनैव निरासात् । अतो न वाङ्निवृत्तिश्रुत्या तदुपोद्बलनम् ।

किञ्च, लौकिकवाचोऽप्राप्यैव निवर्तन्ते, श्रुतयोऽपि स्वशक्त्यनुसारेणैव वदन्तीत्यौपनिषदत्वमेवमेव सङ्गतं भवति, न तु तथा । अब्रह्मपरत्वापादकत्वात् । उक्तश्रुत्योर्विवादकवलितत्वेन तत्साधकयुक्त्यन्तरं विना तदर्थानिश्चये ताभ्यामन्यासां श्रुतीनां तात्पर्यान्तरस्याशक्यवचनत्वात् । न च तौल्यमिति

---

यायित्वे सतीत्यर्थः । ननूक्तं 'यतो वाच' इति श्रुतिरुपोद्बलयतीति तत्राह यस्मादित्यादि । ईश्वरनिःश्वासत्व इति । 'एतस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद' इत्यादिश्रुतेरित्यर्थः । मनःसहभावाभावादिति । प्राणस्यानस्तमितदेवतात्वेन श्वसितमिति सङ्कल्पपूर्वकत्वाभावाल्लोके निःश्वासस्य बुद्धिपूर्वकत्वाभावनिश्चयेन वेदस्य सुतरां तथात्वादित्यर्थः । ननु 'मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठ' इत्येकादशस्कन्धे मनोमयशरीरपरिग्रहोत्तरमेव वेदवाणीप्रादुर्भावोक्तेर्नेदं साधीय इत्यत आह अनिरुक्तेत्यादि । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये अनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवतीति तैत्तिरीयश्रुतिविरोधादित्यर्थः । विरोधमुपपादयति इदमित्यादि । इदमित्थतयेति, यावत्प्रकारविशिष्टतया ।

एवमेवेति, 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतौ शब्दाभ्यासार्थकप्रयोगात्प्रणवं प्रकृत्य 'स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मन' इति पुराणेऽपि स्वनिष्ठब्रह्मवाचकत्वकथनात्सर्ववेदान्तप्रत्ययानां ब्रह्मपरत्वस्य 'दर्शयति चेति' सूत्रे साक्षाद्व्यासोक्तेश्च प्रोक्तार्थकतद्धितान्तत्वेनैवेत्यर्थः । न तु तथेति, न सम्बन्धादितद्धितान्तत्वेन त्वदभिमतरीत्या । अब्रह्मपरत्वापादकत्वादिति । कारणत्वादिबोधकेषु उपासनाबोधकेषु च वाक्येष्वध्यारोपापवादाद्यप्रतीत्या निर्विशेषब्रह्मणस्तदसम्बन्धात्तेषां तत्प्रतीतीच्छयानुच्चारितत्वेन त्वद्रीत्या सम्बन्धितद्धितस्य तेषां तथात्वापादकत्वादित्यर्थः । ननु तत्राप्रतीतोऽपि वागप्राप्यत्वश्रुत्यनुरोधेन कल्पनीयोऽध्यारोपणपक्ष इत्यत आह उक्तेत्यादि । तौल्यमिति, वाक्ये शक्त्य-

वाच्यम् । एवं च वृत्तेर्द्वैगुण्यात् । न च सर्वेषां वैदिकशब्दानां[1] ब्रह्मवाचकत्वाभावाद् वाक्येषु शक्तेरनङ्गीकाराच्च न वृत्तेर्द्वैगुण्यमिति शङ्क्यम् । अग्रेऽथर्वशिखाविचारे उपपादयिष्यमाणत्वात् । वाक्ये शक्तेर्वैयाकरणसिद्धान्तसिद्धत्वाच्च । एवं सर्वश्रुत्यविरोधाच्च । अत एव 'सत्यं ज्ञान'मित्यत्र लक्षणाप्यनुपपन्नैव, प्रमाणाभावात् । वाक्येन यावद्व्यावर्त्यज्ञानाभावात्तद्व्यावृत्तब्रह्मणोऽपि ज्ञानाभावे वाक्यस्याबोधकताप्रसक्तेश्च । लक्ष्[2]यत्वस्य वाच्यत्वव्याप्तत्वेन प्रत्युत वाच्यत्वस्यापरिहार्यत्वाच्च । ननु लक्ष्यत्ववाच्यत्वयोर्न व्याप्तिः, हेतोरुपहितत्वात्, लक्ष्यत्वे सधर्मकत्वस्योपाधित्वादिति चेत्, न । तल्लक्षणानाक्रान्तत्वेनोपाधितत्वस्याशक्यवचनत्वात् । न च शुद्धे ब्रह्मणि लक्ष्यत्वसधर्मकत्वयोः[3] साहचर्याभावादस्त्युपाधिलक्षणाक्रान्तत्वमिति वाच्यम् । साह[4]चर्याभावस्याभ्युपगमैकशरणत्वेन प्रतिवाद्यनादरणीयत्वात् । अत[5]स्तेनैव सधर्मकत्वस्यानुमानसम्भवात् । ततः सिद्धे तस्मिंस्तेन च वाच्यत्वे, सत्यज्ञानादिपदानां तात्पर्यानुपपत्त्यभावाल्लक्षणया बीजाभावेनाशक्यवच[6]नत्वात् । लक्षणायाः शक्यसम्बन्धरूपत्वेन द्विनिष्ठत्वाद्धर्मापत्त्या घट्टकुट्यां प्रभाताच्च । न चोक्तहेतोरप्रयोजकत्वं शङ्क्यम् ।

---

भावादौपनिषदत्वोपपादने तौल्यम् । द्वैगुण्यादिति, पदशक्तिवाक्यशक्त्यङ्गीकारात् । एवं सर्वेत्यादि । वृत्तिद्वैगुण्येन वक्ष्यमाणरीत्या विरुद्धधर्माश्रयत्वेन च लक्षणादोषाग्रासात्सुखेन सर्वश्रुत्याविरोधादित्यर्थः । अत एवेति । उक्तरीत्या सर्वश्रुत्याविरोधात्तात्पर्यानुपपत्त्यभावादेव । लक्षणापक्षे दूषणान्तराण्याह प्रमाणेत्यादि । वाच्यत्वव्याप्तत्वेनेति । ब्रह्मणो लक्ष्यत्वं वदता । ब्रह्म वाच्यं लक्ष्यत्वादित्यनुमानमुत्थापितम् । तथा सति यल्लक्ष्यं तद्वाच्यं तारादिवदिति व्याप्तिः स्फुटति । हेतुश्चायं केवलान्वयी, प्रतिवादिमतेऽन्वयव्यतिरेकी सिद्ध्यति । तथा सति लक्षत्वस्याप्यसिद्धिरिति चकारेण सङ्गृहीतम् । तल्लक्षणानाक्रान्तत्वेति । लक्ष्यत्वसधर्मकत्वयोरव्यभिचारितत्साहचर्यदर्शनात् । 'साध्यव्यापकत्वे सति साधनाव्यापक उपाधि'रिति तल्लक्षणेन सधर्मकत्वस्यानाक्रान्तत्वेनेत्यर्थः । ननु यत्राह्लादकारित्वादिना चन्द्रत्वं लक्ष्यते तत्र चन्द्रत्वस्य लक्ष्यत्वात्तस्मिन् धर्मान्तराभावेन सधर्मकत्वाभावाच्चास्ति लक्षणमिति चेत्तथापि न ब्रह्मणि सधर्मकत्वहानिरित्याह लक्षणया इत्यादि । किं नाम धर्मत्वमिति चेत्, अखण्डोपाधिरिति बुध्यस्व । तथा च विशेषनिवृत्त्यर्थं लक्षणया धर्मेभ्यः पलायमानस्य लक्षणाङ्गीकारेऽपि धर्मापत्त्यविशेषसिद्धिरिति भावः । अप्रयोजकत्वमिति । हेतुतानिश्चायक-

---

१ पदानामिति खपाठः । २ निरुपाधिकत्वं व्याप्तिरिति मुख्यव्याप्तिलक्षणमादाय । ३ सधर्मकत्वयोरसाहचर्यादस्तीति खपाठः । ४ असाहचर्यस्येति खपाठः । ५ वस्तुतस्त्विति पाठः इति गपुस्तके । ६ अशक्यवचनत्वमिति खपाठः ।

व्याप्तेः सार्वजनीनत्वात् । तर्ह्यस्तु मायिकत्वस्यौपाधिकत्वमिति चेत्, न[1] । जगति मायिकत्वस्यासिद्धत्वेन साध्याव्यापकत्वात् । किञ्च, ओमिति ब्रूमः । परं सत्यज्ञानादिपदलक्ष्यत्वं कुतोऽवगतं ? न श्रुतेः, अप्रसिद्धत्वात् । नापि श्रुतार्थापत्तेः, परिहृतत्वात् । नाप्यन्यतः, लौकिकानां ब्रह्मधर्मविचारेऽप्रामाण्यात् । अलौकिकानामभावाच्च । अत[2] उक्तवाक्ये लक्षणानुपपन्नैवेति दिक् । विशेषो भाष्यविभागे प्रसाधित इति नेह वितन्यते ।

न चाद्वितीयादिश्रुतिविरोधः, तयैव धर्माणामपि ब्रह्माभेदस्याभ्युपगन्तुं शक्यत्वात् । न चैवं धर्मधर्मिभावहानिः । 'विश्वतश्चक्षुः' 'सहस्रशीर्षा' 'सर्वतः पाणिपादान्त'मित्यादौ बहुव्रीहिविग्रहे षष्ठ्या तस्याप्युक्तत्वात् । प्रकाशाश्रयन्यायेन तत्सिद्धेः । न च निष्कलादिश्रुतिविरोधः । लौकिककलाक्रियासत्त्वादिगुणजन्यशरीरविकारीन्द्रियजडधर्मनिषेधपरत्वेनाविरोधात् । न चात्र सामान्यनिषेधः शक्यवचनः, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति' कलायाः, 'आसीनो दूरं व्रजति शयानो याति सर्वतः' इत्यादौ क्रियायाः, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवल' इत्यादिभिर्गुणानाम्, 'उता-

---

प्रमाणाभावात्तथात्वमित्यर्थः । स्वमतमालम्ब्योपाध्यन्तरेण हेतुं दूषयति तर्ह्यीत्यादि । अत्र यद्यपि मायावाच्यत्वेन मायिकत्वाभावेन च वाच्यत्वमायिकत्वयोर्व्याप्यव्यापकभावाभावान्नोपाधिलक्षणाक्रान्तत्वं मायिकत्वे, तथाप्यनास्थया 'तुष्यतु दुर्जन'न्यायेनोपगम्य दूषयति ओमितीत्यादि । एतेनैव मिथ्यात्वव्यवहार्यत्वादयोऽपि व्याख्याता इति भावः । दूषणाभावादिदमुपसंहरति विशेष इति । प्रकारान्तरोत्थापितः स इत्यर्थः ।

धर्माङ्गीकारे प्राप्तं दोषं परिहरति न चाद्वितीयेत्यादि । तयेति, अद्वितीयादिश्रुत्या । प्रकाशाश्रयन्यायेनेति, साधनाध्यायद्वितीयपादे 'प्रकाशाश्रयवद्वा तेजस्त्वा'दित्यत्र यथा प्रकाशः सावित्रस्तदाश्रयश्च सविता नात्यन्तभिन्नौ, उभयोरपि तेजस्त्वाविशेषात्, अथ च भेदव्यपदेशभाजौ भवत एवमिहापीत्युक्तं तेनेत्यर्थः । मायावादिमत इदं सूत्रं पूर्वाधिकरणस्य शेषः । सिद्धान्ते त्वधिकरणान्तरम् । तत्र धर्माः किं ब्रह्मणः सकाशाद्भिन्ना ब्रह्मैव वेति संशये, भिन्नाभिन्ना इति सिद्धान्तितम् । तदग्रे तैत्तिरीयोपनिषद्विचारे प्रदर्शयिष्यामः । ननु 'निष्कल'मित्यादिश्रुतिर्धर्माङ्गीकारपक्षे विरुध्येतेत्यत आह न च निष्कलेत्यादि । मात्रामिति, मात्रा, कला, अंश इति पर्यायाः । श्रुत्यविरोधं व्युत्पाद्य स्मृत्यविरोधं

---

१. 'ने'त्यारभ्य 'किञ्चा'न्तः पाठो नावलोक्यते खपुस्तके । २. तस्मादुक्तेत्यपि खपाठः ।

मृतत्वस्येशान' इत्युक्त्वा, सर्वतः पाणिपादादिकथनादजन्यशरीरस्याविकारीन्द्रियाणां, 'अणोरणीयान्महतो महीयान्' इत्यादावणुत्वादिधर्माणां च श्रावणात्। एतेषां सोपाधिपरत्वस्य पूर्वमेव मानाभावनिरस्तत्वात्। 'सर्वेन्द्रियगुणाभासं' इत्यत्र सर्वेन्द्रियगुणा इवाभासः सर्वेन्द्रियगुणाभास इत्युपमानसमासेन ब्रह्मण एव सर्वरूपकथनेन 'प्राणन्नेव प्राणो भवति वदन् वाग्'इतीन्द्रियकार्याणां ब्रह्मकार्यत्वश्रावणेन 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः, ते निचिक्युर्ब्रह्मपुराणमग्र्यं मनसैवाप्तव्यं नेह नानास्ति किञ्चने'ति प्राणाद्याधिदैविकत्वबोधनेन, इह ब्रह्मणि नानात्वनिषेधेन च ब्रह्मणः सर्वेन्द्रियगुणरूपत्वपोषणाच्च। अरूपवत्सूत्रे च मतुपा रूपवद्विलक्षणत्वस्यैव बोधनेनान्यथा तद्वैयर्थ्येन चोपाधिपक्षानुपष्टम्भात्। प्रकृतैतावत्त्वसूत्रेऽपि प्रकृतं यदेतावत्त्वमिति व्याख्याने, प्रकृतपदैतावत्पद-

व्युत्पादयति सर्वेन्द्रियेत्यादि। न्यायविरोधं व्युत्पादयति। अरूपेत्यादि। अत्र मायावादिभिर्व्याख्यायते। साकारनिराकारवादिनीषु श्रुतिषु सतीषु कथं निराकारमेव ब्रह्म प्रतिपत्तव्यं? न साकारमित्याकाङ्क्षायामिदं सूत्रं पठति अरूपवदिति। रूपाद्याकाररहितमेव ब्रह्म प्रतिपत्तव्यं, कुतः? तत्प्रधानत्वात्। 'अस्थूलमनणु ह्रस्वमदीर्घ'मिति, 'अशब्दमस्पर्शमरूपमव्ययं, 'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे'ति, 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यज'इति, 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभू'रित्यादीनां निष्प्रपञ्चब्रह्मनिरूपकाणां ब्रह्मस्वरूपमात्रप्रधानत्वात्। एतेषां स्वरूपमात्रपरत्वं 'तत्तु समन्वयादि'त्यत्र निरूपितं तस्मादित्यर्थः। साकारविषयकाणां तूपासनाविषयत्वान्न तत्प्रधानत्वं, किं त्वौपाधिकपरत्वमिति न साकारं प्रतिपत्तव्यमिति, तदिदं दूषयति अरूपेत्यादि। तथा च यद्येतासु रूपाभाव एव ब्रह्मणि प्रतिपाद्य इति व्यासोऽभिप्रेयान्मतुपं विनाऽपि बहुव्रीहिणा अरूपशब्दादेव तादृक्प्रतीतिसौकर्याच्छ्रुतिसामानाधिकरण्याच्चारूपमित्येव ब्रूयात्। अत एवं वदता श्रुतौ रूपवद्वैलक्षण्यमेवार्थिकं बोध्यते, तस्मात्तथेति भावः। अस्थूलादिवाक्यान्यत्रैवाग्रे विरुद्धधर्माश्रयत्वबोधकतया व्याख्येयानि। 'आकाशो वै'ति वाक्यमग्रिमे वादे अर्थान्तरत्वादिव्यपदेशाधिकरणोपपादने। वस्तुतस्तु तत्र नञभावान्नाकारनिषेधकत्वमित्यपि बोध्यम्। 'दिव्यो ह्यमूर्त' इत्यत्रापि मूर्तवैलक्षण्यमेव बोध्यते, पुरुषत्वादिकथनाच्च नाकारनिषेध इति च। द्वितीयसूत्राविरोधं प्रदर्शयति। प्रकृतेत्यादि। विषयवाक्यं तु बृहदारण्यके मूर्तामूर्तब्राह्मणेऽस्ति। 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं

१ मानाभावेति गपुस्तके नास्ति।

च मर्त्यं चामर्त्यं च स्थितं च यच्च सच्च त्यच्चे'त्युपक्रम्य मूर्तामूर्तभेदेन द्विविधानि, पुनरधिदैवताध्यात्मभेदेन द्विविधानि पञ्चभूतान्युक्त्वा तयो रसं चोक्त्वा अध्यात्मामूर्तरसस्य दक्षिणाक्षिपुरुषस्य माहारजनादिसदृशं रूपं चोक्त्वाग्रे पठ्यते 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्य-' मिति । मायावादिनां सूत्रव्याख्यानं तु 'अस्ती'त्यन्तां श्रुतिमुपन्यस्य, अत्र विचार्यते, कोऽस्य प्रतिषेधस्य विषय इति । तत्रेतिशब्दस्य 'सन्निहितावलम्बनत्वमिति ह सोपाध्याया ऊचु-' रित्यादिषु दृष्टं, प्रकृते च मूर्तामूर्तलक्षणं रूपद्वयं, तद्रूपवद्ब्रह्म चेति त्रयं सन्निहितम् । तत्र किं रूपरूपिणोरुभयोरपि प्रतिषेध उतैकस्य ? यद्येकतरस्य तदापि कस्येति । तत्र प्रतिषेधद्वयस्य विद्यमानत्वाद्द्वयोरपि, अथवा ब्रह्मण एव प्रतिषेधः ? तस्य वाङ्मनोगोचरातीतत्वेनासम्भाव्यसद्भावत्वात् । अभ्यासस्त्वादरार्थ इति प्राप्ते, ब्रूमः । न तावदुभयनिषेधः सम्भवति, शून्यवादप्रसङ्गात् । नापि ब्रह्मणः प्रतिषेधः, 'ब्रह्म ते ब्रवाणी'त्याद्युपक्रम्य 'असन्नेव स भवति, असद्ब्रह्मेति वेद चे'दिति निन्दायाः, 'अस्तीत्येवोपलब्धव्य' इति आद्यवधारणस्य च विरोधात्, सर्ववेदान्तकोपप्रसङ्गाच्च । वाङ्मनसागोचरत्वमपि ब्रह्मणो नानाभावाभिप्रायेण, 'ब्रह्मविदाप्नोति पर'मित्यादिना महता प्रबन्धेन ब्रह्म प्रतिपाद्य पुनस्तदभावकथनस्यायुक्तत्वात् । तथा सति प्रक्षालनपङ्कन्यायेन तदकथनस्यैव ज्यायस्त्वात् । किन्तु प्रतिपादनप्रक्रियोपक्रमे यथा गवादयोऽर्थाः शृङ्गाग्राहिकयोच्यन्ते प्रतीयन्ते च, न तथा ब्रह्मेति । तस्मात्प्रत्यग्भूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म पारिशेष्यप्रपञ्चात्मकमविद्याकार्यं रूपं प्रतिषेधतीति रूपस्यैवात्र प्रतिषेधः । तथा चायं सूत्रार्थः । प्रकृतैतावत्त्वं, प्रकृतं यदेतावता परिच्छिन्नं मूर्तामूर्तलक्षणे ब्रह्मणो रूपं, तत्प्रतिषेधति, 'नेति नेती'ति शब्दो निषेधति । 'द्वे वा व ब्रह्मणो रूप'[1] इत्यादिना रूपस्यैवारम्भप्रपञ्चनयोर्दर्शनेन तस्यैव प्रकृतत्वनिश्चयात् । तज्जनितस्य वासनालक्षणस्यामूर्तरसभूतस्य पुरुषशब्दोदितस्य लिङ्गशरीराश्रयस्य माहारजनपाण्ड्वाविकाद्युपमाभिरूपस्य दर्शितत्वात्सन्निहितावलम्बनेनेतिशब्देन निषेधप्रतियोगितया तस्यैव रूपस्योपनयाच्च अमूर्तरसरूपस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्त्या तन्निषेधौचित्याच्च । न च ब्रह्मणोऽपि प्रकृतत्वं शङ्क्यं, षष्ठ्या रूपविशेषणत्वेन तस्य[2] निर्दिष्टतया अप्रधानत्वात् प्रपञ्चितरूपद्वयस्य ब्रह्मणः स्वरूपजिज्ञासायां कल्पितरूपद्वयप्रत्याख्याने निषेधस्य ब्रह्मस्वरूपावेदनफलकत्वेन निर्णयाच्च । रूपद्वयस्य कार्यत्वेन वाचारम्भणशब्दादिभ्योऽसत्यत्वात्तन्निषेधस्य युक्तत्वाच्च । न च रूपद्वयं वक्तव्यत्वेन प्रतिज्ञाय कथं शास्त्रं निषेधतीति वाच्यम् । लोकप्रसिद्धयोरेतयोः प्रतिपाद्यत्वेनानिर्दिष्टत्वात् ।

१ द्वे वा ब्रह्मण इति पष्ठ्या । २ ब्रह्मणः ।

**योरन्यतरेणैव विषयवाक्योक्तमूर्तामूर्तलक्षणरूपद्वयप्राप्तेरेकतरवैयर्थ्यात् । तत्रापि प्रकृते ब्रह्मणि प्रकृतस्य वा ब्रह्मणो मूर्तामूर्तमात्रतानिषेधस्यैव सूत्रकारानुशयगोचरत्वेन व्याख्येयत्वात् । 'अथात आदेशो नेतिनेती'त्यत्रा-**

---

ब्रह्मस्वरूपप्रतिपादनाय निषेध्यत्वाय च निर्दिष्टत्वात् । अत्र च द्वौ निषेधौ मूर्तामूर्तरूपद्वयं भूतराशिवासनाराशी वा निषेधतः । अथवा, वीप्सया उत्प्रेक्षितं सर्वमेव वा निषेधतः । यदि मूर्तामूर्तलक्षणं रूपं रूपद्वयमेव निषेधेदितरस्य ब्रह्मता जिज्ञासिता स्यात् । वीप्सायां सर्वनिषेधे प्रत्यगात्मा ब्रह्मैवेति सिद्ध्यतीति ब्रह्मेतरसर्वविषयकोऽयं निषेध इति 'प्रकृतैतावत्त्वं हि प्रतिषेधती'ति भागेनोक्तम् । किञ्च, हेत्वन्तरादपि पूर्वोक्तं निर्णयमाह 'ततो ब्रवीति च भूय' इति । ततो निषेधात्, ल्यब्लोपे पञ्चमी । निषेधानन्तरं भूयो ब्रवीति अन्यत्परमस्तीति । यदि ब्रह्म न परिशेषयेत्तदाभावावसाने निषेधेऽन्यत्परमस्तीति न ब्रूयात् । तस्मादपि ज्ञायते ब्रह्मातिरिक्तस्य विषयजातस्यैवायं निषेधो न तु ब्रह्मण इति । श्रुत्यक्षराणि त्वेवं योजनीयानि । पूर्वं 'नेति नेती'त्यनेन ब्रह्मादिश्य तमादेशं 'न ह्येतस्मादिति 'नेती'ति, तस्माद् ब्रह्मणो व्यतिरिक्तं नास्तीति नेत्यस्यार्थो, न तु ब्रह्म स्वयमेव नास्तीति, तदेव दर्शयति अन्यत्परमस्तीति । अन्यत्परमप्रतिषिद्धं ब्रह्मास्तीत्यर्थः । यद्वा न ह्यस्मादिति नेति । न हि एतस्मात्प्रपञ्चनिषेधरूपादादेशनादन्यत्परमादेशनं ब्रह्मणोऽस्तीति । अस्मिन्पक्षे ततो ब्रवीति च भूय इति सूत्रांशो नामधेयविषयतया योजनीयः । तथा च प्रपञ्चनिषेधात्मकब्रह्मादेशनानन्तर'मथ नामधेय'मित्यादिना ब्रह्मनाम तन्निर्वचनं च ब्रवीति, तस्मादपि ज्ञायते ब्रह्मावसानोऽयं निषेध इति । एतद्व्याख्यानं दूषयन्पूर्वभागव्याख्यानस्यासामञ्जस्यं सूचयति प्रकृतेत्यादि । एतावत्त्वपदस्यैतावता परिच्छिन्नं मूर्तामूर्तरूपद्वयमित्यर्थ उक्तः । स तु मूर्तामूर्तयोः प्रकृतत्वात्परिच्छिन्नत्वाच्चैकतरेणैव लभ्यत इत्यस्मिन् व्याख्यानेऽन्यतरवैयर्थ्यस्य दुर्वारत्वादिदमसमञ्जसं, तस्मात्तत्रापि 'प्रकृतैतावत्त्वं प्रतिषेधती'ति सूत्रभागेऽपि प्रकृते ब्रह्मणीत्यादिनोक्तस्यैवार्थस्य व्याससम्मतत्वात्तदनुरोधेन 'अथात' इत्यादिश्रुतेरर्थमाह अथात इत्यादि । अक्षरयोजना तु, अथ, अमूर्तरसात्मकपुरुषरूपज्ञानकथनोत्तरम् । अतः पुरुषस्यैवं नानारूपत्वात् । आदेश उपदेशः, नेति नेति । ननु कोऽत्रोपदेशार्थ इत्यतो व्याकरोति न ह्येतस्मादिति । नेत्यन्यत्परमस्तीति । हि, निश्चयेन, एतस्मात्प्रकारात्, न, एतमेव प्रकारं प्राप्य वर्तमानं कार्यप्रकारं नेति यावत् । इति, अयं प्रथमं नेतिपदार्थः । एवं कार्यप्रकारनिषेधे कारणमात्रं भविष्यतीति प्राप्तम् । तन्निवृत्तये द्वितीयं विवृणोति नेतीति । एतावदेव न, किं तर्हि अन्यत्कारणात् परं फल-

---

१ प्रकृतैतावत्पदयोरेकतरेण ।

**पीतिशब्दस्य प्रकारवाचित्वेन पूर्वस्य 'नेती'त्यस्य कार्यप्रकारनिषेधपरतायाः, द्वितीयस्य तस्यैव तावता निषेधपरतायाश्च, 'न ह्येतस्मा'दिति नेत्यन्यत्परम-**

रूपमस्तीति द्वितीयनेत्यस्यार्थः । तथा चोभयत्रापि नञा समभिव्याहृतस्यैतैः प्रकारवाचित्वमेव सिध्यति । प्रकारश्च भिन्नाभिन्नोऽस्तीति द्वयोरपि निषेधाय द्विरुक्तिः । एतस्यैवार्थस्य पोषाय ब्रह्मणो नामोक्त्वा निर्वक्ति अथ **नामधेयमि**त्यादि । प्राणा वै निश्चयेन मूर्तामूर्तमहाभूताभिन्नतया सत्यभूतास्तेषां सत्यं ब्रह्म तद्रसभूतं, तस्मात्सत्यस्य सत्यमिति ब्रह्मणो नामधेयमिति । तथा च ब्रह्मणस्तद्रसरूपवत्त्वेन तत्प्रकारस्यैव निषेधोऽयमिति ब्रह्मनामार्थविचारेणापि बोध्यमित्यर्थः । एतेनैव परोक्तं श्रुतिव्याख्यानमपि निरस्तम् । किञ्च, यदुक्तं ब्रह्मणो न प्रकृतत्वमिति, तत्तु स्वोक्तमेव विरुणद्धि । 'ब्रह्म ते ब्रवाणी'ति वेदान्ते ब्रह्मण एवोपक्रान्तत्वस्य स्वयमेवाङ्गीकारात् । ननु तथापि विषयवाक्ये रूपमेव प्रकृतमिति न विरोध इति चेत्, तर्हि ब्रह्मवदेव निषेधानर्हत्वमिति विभाव्यताम् । न च तन्निषेध्यत्वायैव प्रकृतमिति वाच्यम् । निषेध्यत्वगमकस्यात्राभावात् । न चात्रानुक्तत्वेऽपि वाचारम्भणवाक्यसिद्धमसत्यत्वमेव निषेध्यत्वगमकमिति वाच्यम् । तत्रापि तथार्थाभावात् । यथा 'सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति कार्यैकदेशनिदर्शनेन कार्यजातस्य कारणावस्थाविशेषात्मकत्वं बोधयित्वा, विकारस्य वागारब्धत्वान्नाममात्रत्वं, कारणरूपेणैव तु तस्य सत्यत्वमिति बोधनात् । अवस्थानामवस्थावदभिन्नत्वात् । भगवता सूत्रकृतापि 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति सूत्रयता कारणाभिन्नत्वस्यैव प्रतिपादनात् । न च तत्र भेदव्यासेध एव क्रियते न त्वभेदो बोध्यत इति वाच्यम् । विनिगमकाभावात् । व्यासिद्धे भेदे तदभेद एव पर्यवसानाच्च । अन्यथा तदसत्यमित्येव ब्रूयात् । भङ्ग्या कथनस्य प्रयोजनाभावात् । न च भवत्वेवं तथाप्यविद्याया एव कारणत्वान्नानुपपत्तिरिति वाच्यम् । उपक्रमविरोधात्, सत एवोपक्रान्तत्वात् । न च सत्पदेन शबलमेवोच्यत इति वाच्यम् । विनिगमकाभावात् । न च ब्रह्मणोऽस्तसमस्तविशेषत्वमेव गमकमिति वाच्यम् । अभ्युपगमैकशरणत्वात् । अवाङ्मनोगोचरत्वस्यानिरुक्तश्रुतिसामानाधिकरण्येन निर्विशेषेऽपर्यवसानात् । गवादिवच्छृङ्गग्राहिकया निर्देष्टुमशक्यत्वस्याङ्गीकारेण भवन्मतस्याप्यनिरुक्तसरणावेव प्रवेशाच्च । तस्माद्रूपस्य ब्रह्ममाहात्म्यबोधनायैवात्र प्रकृतत्वं, न निषेध्यत्वायेति निश्चयः । एतेनैवामूर्तरसभूतपुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्त्या महारजनादिरूपस्य निषेधार्हत्वमित्यपि निरस्तम् । तस्यापि विरुद्धधर्माश्रयत्वबोधनार्थत्वेन वासनामयत्वाभावात् । एवं च 'प्रकृतैतावत्त्व'मित्यत्रापि प्रकृतेन रूपद्वयादिना कृतं यदेतावत्त्वं,

१ प्रकारयोः ।

स्तीति तद्व्याख्यानश्रुत्या बोधनात्। कार्ये प्रकारकारणमात्रतानिषेधयोरेव स्फूर्ते-रुपादेयकार्यस्योपादानात्मकत्वे मूर्तामूर्तयोर्भगवद्रूपत्वाप्रतिषेधाच्च।

ननु मास्त्वेवं उपाधिपक्षसिद्धिः, प्रकारान्तरेणैव भवित्री। तथा हि, महिमनिरूपका वेदान्ता ब्रह्मस्वरूपसापेक्षत्वात्तदुपजीवका बहिरङ्गाः। स्वरूपनि-रूपकास्तु तेषामुपजीव्या अन्तरङ्गाः। तथा च यथा पूर्वतन्त्रे उत्पत्तिशिष्टः पदार्थो यागस्वरूपघटक इति तद्बोधकं वाक्यमुत्पन्नशिष्टपदार्थबोधकेन न बाध्यते, अपि तूत्पत्तिवाक्येनैवेतरद्बाध्यते, तथात्रापि स्वरूपपरैर्निर्विशेषवाक्यै-र्धर्माकारादिनिरूपकाणि बाधिष्यन्ते। ततो बाध्यमानानि तान्यगत्या औपा-धिके पर्यवस्यन्ति। उत्तरतन्त्रे पूर्वतन्त्रोक्तहेतूनामभ्यासादीनामादरेणैवं साध-नेऽप्यदोषादिति चेत्,

उच्यते। स्यादेवं यदि महिमनिरूपका धर्ममात्रं निरूपयेयुर्न स्वरूपम्। न त्वेवं, किन्तु, यथा अस्थूलादिवाक्यानि धर्मनिषेधमुखेन स्वरूपं निरूपयन्ति

---

उत्तरपदलोपी वा, तृतीयासमासो वा, तत्प्रकृतैतावत्त्वं, हि निश्चयेन, प्रतिषेधति, 'नेती'ति श्रुतिर्निषेधति। तत्र हेतुः, ततो निषेधोत्तरं भूयस्तद्व्याख्यानेन नामनिर्वचनेन च ब्रवीति, सर्वोत्कृष्टत्वमाधिदैविकत्वं रसरूपत्वं वक्तीत्यर्थोक्तावपि बाधकाभावः। तदेतदुक्तम् उपादे-यकार्यस्येत्यादिना। एतस्यैव विषयवाक्यत्वे नियामकाभावाद्वास्तवसूत्रार्थस्त्वग्रे वाच्य इति मूलेऽयमर्थो नोक्तः। एवं श्रुतिस्मृतिसूत्रविचारेणोपाधिपक्षो दूषितः।

अतः परं पूर्वतन्त्रमाश्रित्य प्रकारान्तरेणोत्थापयति ननु मास्त्वित्यादि। पूर्वतन्त्र इत्यादि। अत्रोदाहरणमामिक्षाधिकरणम्। तच्च द्वितीयस्य द्वितीये पादे 'गुणश्चापूर्वसंयोगे वाक्ययोः समत्वा'दिति सूत्रे सिद्धम्। तत्र 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वा-जिभ्यो वाजिन'मिति श्रुतम्। अत्र घनीभूतः पिण्ड आमिक्षा। जलं वाजिनम्। अत्रामिक्षायो-गाद्वाजिनयागो भिन्न उत तस्मिन्नेव गुणान्तरविधिरिति संशयः। तत्रामिक्षाद्रव्यभाजो ये विश्वे-देवा उक्तास्त एव वाजिपदेनानूद्यन्ते। 'वाजोऽन्नमामिक्षारूपमेषा'मिति यागस्य तत्राप्युपपन्न-त्वात्। एवंताननूद्य वाजिनद्रव्यरूपो गुणस्तस्मिन् यागे विधीयते, ततश्च तद्द्रव्यं वाजिनमा-मिक्षया समुच्चीयतां विकल्पतां वेति प्राप्तम्। तत्र ब्रूमः। उत्पत्तिशिष्टमामिक्षाद्रव्यं यागस्वरू-पघटकं, तेनावरुद्धो यागो द्रव्यान्तरापाते स्वरूपाद् हीयेत, फलाश्रवणाच्च गुणत्वेनापि तन्निवेशः। एवं तत्र प्रवेशमलभमानं वाजिशब्दोदितानां देवतान्तरत्वमापादयति। द्रव्यदेवते च यागस्य रूपम्। द्रव्यदेवताभेदेन रूपस्य भिन्नत्वाद्यागे भेद इति सिद्धान्त इति। तदेतदुक्तं यथा पूर्वतन्त्र इत्यादि। निर्विशेषवाक्यैरिति, अस्थूलादिवाक्यैः। दूषयति उच्यत इत्यादि।

तथा 'विश्वतश्चक्षुरा'दीनि धर्मविधिमुखेन । अत उभयेषां स्वरूपपरत्वान्न पूर्वोक्तन्यायसञ्चारः ।

कश्चित्तु अस्थूलादिवाक्ये नञः क्रियान्वयाभावात्पर्युदास एवेति । तेन सदृशग्रहणात् 'समो मशकेन समो नागेन' इति श्रुत्यन्तराचात्रापि सर्वाकारतैव फलतीति वृथैवेयं विरोधाभावचिन्तेत्याह ।

अन्यस्तु, नात्र पर्युदासः शक्यवचनः, 'असङ्ग'मित्यत्रानन्वयात्, 'अचक्षुष्क'मिति कप्रत्ययविरोधात्, यथासम्भवमुभयस्वीकारे प्रायःपाठविरोधाच्चेति न पर्युदासं सेहे ।

नेदम्।"असङ्ग"मित्यत्र सङ्गभिन्नस्य सङ्गसदृशस्य प्रदेशद्वयस्वरूपसम्बन्धस्य सत्त्वेन तद्रूपताबोधनेऽन्वयसम्भवात्स्वार्थे कप्रत्ययस्यापि सम्भवात्पर्युदासबाधाभावात् । किन्तु, 'स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान् न जन्तुः । नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेष' इत्यादिषु पुराणस्योपबृंहणेषु निषेधशेषत्वकथनात्तदनुरोधेनात्र प्रसज्यप्रतिषेधस्यापि सम्भवदुक्तिकत्वाद्युक्ता विरोधाभावचिन्तेति ।

नन्वेवं सति श्रुत्युक्ताणुत्वादीनामपि निषेधान्नात्र जडजीवधर्ममात्रनिषेध इति सिद्धम् । तथा च विरोधः, स च धर्मविरोधः, स्वाश्रयं भेत्स्यतीति धर्माः सोपाधिके एव पर्यवस्यन्तीति चेत्,

नैतत् । ब्रह्म हि श्रुत्येकसमधिगम्यम् । तत्र च 'तदेजति तन्नैजति' 'तद्दूरे तद्वदन्तिके' 'आसीनो दूरं व्रजति' 'शयानो याति सर्वतः' 'अणो-

---

अत्रैकदेशिमतमाह कश्चिदित्यादि । पर्युदासप्रतिषेधयोर्लक्षणं त्वेवं, पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञन्वयः । यथा अब्राह्मणः, अधर्मः । अयं च सदृशे पर्यवस्यति । प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञन्वयः । सोऽपि 'नेक्षेतोद्यन्तमादित्यं' 'न स्त्रियमुपेया'दित्यादिभिरुदाहरणैर्ज्ञेयः ।

उक्तमतदूषकं भिक्षुमतमाह अन्यस्त्विति । भिक्षुमतं दूषयति नेदमिति । तर्हि सिद्धे पर्युदासे एकदेशिनः प्राबल्यान्न सिद्धान्तसिद्धिरित्यतस्तां साधयति किन्त्वित्यादि । एवं प्रसज्यप्रतिषेधमङ्गीकृत्य विरुद्धधर्माश्रयत्वं समर्थयितुं विरोधमुत्थापयन्नाह नन्वित्यादि । दूषयति नैतदिति । न पर्यवस्यन्तीत्यर्थः । अत्र 'तदेजती'ति ईशावास्यवाक्यं,

---

१ प्रसज्यप्रतिषेधस्यैवाङ्गीकार्यत्वाद्युक्तेत्यपि पाठः खपुस्तके

रणीयान् महतो महीयान्' 'विश्वतश्चक्षुः' 'अचक्षुष्कमश्रोत्र'मित्यादिभिर्विरुद्धनानाधर्मा एकस्मिन्नेव ब्रह्मणि प्रतिपाद्यन्त इति तथैव मन्तव्यम् । न चापवादार्थं धर्मारोपः शक्यवचनः । विनिगमकाभावात् । अपोद्यानामविरोधे विरोधे वा विशेषाभावात्सूत्रेषु सविशेषनिरूपकश्रुतीनां परस्पराविरोधचिन्तनस्याप्रयोजनकत्वापातात् । अतो विरोध एव नास्ति, धर्मिग्राहकमानसिद्धत्वात् । अन्तर्यामिब्राह्मणे 'यः पृथिव्यां तिष्ठन्पृथिवीमन्तर' इत्यादिभिस्तदन्तःस्थितत्वतदन्तःस्थापकत्वयोर्वैश्वानरविद्यायां प्रादेशमात्रत्वाभिमानत्वयोः श्रवणाच्च । 'न हि विरोध उभयं भगवत्यपरिगणितगुणगणे ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणदुरवग्रहवादिनां विवादानवसर' इति श्रीभागवतषष्ठस्कन्धवाक्याच्च । लोकविरुद्धयोरप्येकप्रपञ्चप्रतियोगिकनिमित्तत्वोपादानत्वयोरेकस्मिन्नेव शबले श्रुतिबलेन भवताप्युपगमाच्च । तर्हि शबल एव तथात्वमङ्गीकार्यमिति चेत्, न । कुलधर्मत्वाभावात् । उपाधिपक्षस्य विद्वन्मण्डने महता प्रपञ्चेन दूषितत्वाद्दिङ्मात्रमिहापि प्रदर्श्यते ।

---

द्वितीयं कठवल्ल्याः । ततो द्वयं तैत्तिरीयम् । ततो बृहदारण्यकस्थम् । एकस्मिन्निति विरुद्धधर्माश्रयवादस्य बलिष्ठत्वाय व्यासाशयगोचरत्वं दर्शयति । अपोद्यानामित्यादि । शुद्धे ब्रह्मण्यपोद्यानां स्रष्टृत्वं च सर्वज्ञत्वं सर्वशक्तित्वादीनां स्रष्टृत्वादीनां प्रसक्तानां हिताकरणादीनां च परस्परं विरोधेऽविरोधे वा सति विशेषाभावात्तस्य विरोधस्याविरोधस्य च त्वन्मते मोक्षशास्त्रोपयोगाभावात्सूत्रेषु द्वितीयाध्यायस्थेषु 'अधिकं तु भेदनिर्देशात्' 'श्रुतेस्तु शब्दमूलत्वात्' 'सर्वोपेता च तद्दर्शना'दित्यादिषु, सविशेषनिरूपकश्रुतीनां 'सदेव सौम्येदमग्र आसीत्' 'तत्त्वमसि' 'एष उ एवासाधु कारयति तं यमधो निनीषती'त्यादीनां परस्पराविरोधचिन्तनस्य 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यः' 'सता सौम्य तदा सम्पन्नो भवती'त्यादिषु कर्तृकर्मभावेन भेदनिर्देशात् । जीवापेक्षया आधिक्यसाधनेनाविरोधचिन्तनस्य उपादानत्वे श्रुत्यादिना अविरोधचिन्तनस्य विचित्रविचारप्रपञ्चकरणे साध्ये 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सत्यकामः सत्यसङ्कल्पः यः सर्वज्ञः स सर्ववित्' 'एतस्यैवाक्षरस्य प्रशासने गार्गी सूर्याचन्द्रमसौ विधृते तिष्ठत' इत्यादिश्रुतिदर्शनात्तत्कर्तरि परदेवतायां विचित्रप्रशक्त्युपेतत्वसाधनेनाविरोधचिन्तनस्य सूत्रान्तरस्थस्यान्यस्य च तस्य अत्राप्रयोजनकत्वापातात्, काकदन्तविचारसादृश्येन मूर्खविचारत्वापातादित्यर्थः । सिद्धमाह अत इत्यादि । युक्तिभिरुपाधिपक्षदूषणे स्वाशक्तिं परिहरति दिगित्यादि ।

तथा हि, या तावदविद्या ब्रह्मोपाधिरुच्यते, सा सादिरनादिर्वा ? नाद्यः । त्वन्मत उपहितस्येश्वरत्वेन, तस्याः सादित्वे, ईश्वरस्यापि तथात्वापत्तौ, साङ्ख्यमतीयकार्येश्वरवादप्रसक्त्या वेदान्तसिद्धान्तभङ्गप्रसङ्गात्। नान्त्यः। अनादिभावस्यानन्तत्वनियमादनिर्मोक्षप्रसङ्गेन जीवापेक्षयापीश्वरस्य जघन्यत्वापातात्। न च जघन्यत्वप्रयोजकस्य नियम्यत्वादेरभावान्न तथेति वाच्यम्। तथापि बद्धत्वाविशेषान्मुमुक्षूणां तस्यानुपास्यत्वापत्तेः । न चेष्टापत्तिः । तथा सतीक्षत्यधिकरणस्थानां 'गौणश्चेन्नात्मशब्दात्' 'तन्निष्ठस्य मोक्षोपदेशात्' 'हेयत्वावचनाच्चे'ति हेतूनां विरोधात्। अथानादिसान्तत्वमिष्यते, तदापि तत्र सर्वज्ञताङ्गीकारस्यावश्यकत्वात्तस्य च हिरण्यगर्भादिगुरुत्वेन सर्ववेदवेत्तृत्वात्तदपेक्षयोत्कृष्टाधिकारिणोऽन्यस्याभावाद्वाक्यादपरोक्षवादिमते ईश्वरस्य ब्रह्मसाक्षात्कारस्यावश्यकत्वात्तन्मुक्त्यापत्तौ प्रपञ्चाभावप्रसक्तेः। तस्य मुक्त्यभावेऽन्यस्य ततो जघन्यत्वाद् वाक्यापरोक्षहानिप्रसङ्गोऽन्यमुक्त्यङ्गीकारे च तेभ्यो जघन्यतेश्वरे स्यात्, तथा सति पूर्वोक्तसौत्रहेतुविरोधतादवस्थ्यं च ।

किञ्च, सा जीवगता ब्रह्मगता वा, यत्कल्पिता विशेषाः । नाद्यः, तस्या ब्रह्मगतधर्मकल्पने सामर्थ्याभावात्। शुद्धस्य ब्रह्मणो मनोवागविषयत्वेनाधिष्ठानज्ञानाभावेन जीवस्य तस्याः सम्बन्धस्याशक्यवचनत्वात्सम्बन्धाभावे कल्पनाया अयोगात् । अथ ज्ञानिजीवानां ब्रह्मद्रष्टृत्वात्तदविद्यायाः कल्पकत्वमिति चेन्न। 'यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः' इति स्मृतेर्द्रष्टृषु तस्या अयोगात्। ज्ञाने सत्यनाशे पुनर्नाशायोगादनिर्मोक्षप्रसङ्गाच्च।

---

भङ्गप्रसङ्गादिति। तथा च तवावेदान्तित्वापत्तिरिति भावः । ईक्षत्यधिकरणस्थानामिति । स्वसिद्धान्तानुसारेणेदमुक्तम्। तन्मते तु जन्माद्यधिकरणस्था एव। तथापि नार्थे कोऽपि विशेष इत्येवमुक्तम् । नन्वनादिः सान्ता सा ईश्वरे न प्रभवतीतीश्वरस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वमतो न पूर्वोक्ता दोषाः। वाक्यादपरोक्षं तु येषु प्रभवति तत्परं, अतो न तस्यापि भङ्गः। तथा च यत्र प्रभवति तान् बध्नाति। यत्र न प्रभवति तत्रेश्वरे विशेषमात्रं कल्पयतीत्याकाङ्क्षायां तदधिकरणविकल्पनेनेमं पक्षं दूषयति किञ्चेत्यादि। सामर्थ्याभावं व्युत्पादयति शुद्धस्येत्यादि । तस्या अयोगादिति। तस्याः गुणात्मकत्वेनायोगात्। ननु तस्या न गुणात्मकत्वमपि तु तत्साम्यात्मकत्वमिति नष्टेष्वपि गुणेषु तस्या अनाशात्सुखेन विशेषकल्पनासिद्धिरित्यत आह ज्ञानेत्यादि । तादृश्यपि सा ज्ञाननाश्या न

---

१ साक्षात्कारावश्यकत्वादिति घपाठः। २ असम्भवाच्चेदिति खपाठः।

अविद्यया ब्रह्मणि विशेषकल्पनायां दृश्यत्वं, दृश्यत्वे च सत्यधिष्ठानज्ञाने तत्कल्पनमित्यन्योन्याश्रयेण तस्याः कल्पकत्वायोगाच्च । निर्विशेषविषयकदर्शनस्याङ्गीकारे च दृश्यत्वधर्मसिद्धेर्निर्धर्मकसिद्धान्तव्याघातः । अनङ्गीकारे च तन्निरूपकाणां 'ब्रह्म वेद ब्रह्मैव भवती'त्यादीनां व्याकोप इति च । न द्वितीयः, 'अनादिभावे'त्यादिनैव दत्तोत्तरत्वात् ।

किञ्च, सा सती, असती, सदसती, सदसद्विलक्षणा वा ? नाद्यः, दत्तोत्तरत्वात् । न द्वितीयः, कल्पकत्वायोगात्, खपुष्पवत् । न तृतीयः, तथा सति शुक्तिरजतवत्कल्पितैव वाच्येति । तस्या एव कल्पकायोगादसम्भवात् । ब्रह्मणो निर्विशेषत्वात्तदानीं जीवानामप्यभावात् । तादृश्या एवानादित्वे पूर्वोक्तदूषणापत्तेः । अथानादिसान्तत्वे न कश्चिद्दोष इति चेद्विभाव्यते, तदप्यसङ्गतम् । जीवगतब्रह्मगतत्वविचारेण विकल्पासहत्वाद् दत्तोत्तरत्वाच्च । न तुरीयः, तथा

---

वा ? आद्यश्चेत्कल्पकत्वायोगो द्वितीये त्वनिर्मोक्षप्रसङ्ग इत्यर्थः । ननु ज्ञाननाश्यत्वेऽपि चरमवृत्तिनाश्या सा, नेतरवृत्तिनाश्येत्युभयसामञ्जस्यान्न दोष इत्यत आह अविद्ययेत्यादि । चरमवृत्तिरूपमविज्ञानमस्मदादिष्वातिप्रसङ्गभङ्गाय साधनाधीनं वाच्यं, साधनं च श्रवणमननादिकमेव । तथा च तैर्यश्चरमः साक्षात्कारः स दृश्यत्वमन्तरेणाघटमानो दृश्यत्वमाक्षिपति । तच्च विशेषाधीनम् । ते च कल्पनाधीनाः । कल्पिका पुनरविद्यैव । तत्र त्वेवमन्योन्याश्रयो मालाचक्रकं वा । तेन तथात्वादित्यर्थः । न तु विशेषं विनैव दर्शनमस्माभिरङ्गीक्रियत इत्यत आह निर्विशेषेत्यादि । एवं जीवाविद्या ब्रह्मगतविशेषकल्पिकेति पक्षो निरस्तः । अतः परं ब्रह्मगताविद्यैव ब्रह्मगतविशेषकल्पिकेति पक्षं दूषयति न द्वितीय इति । तत्र हेतुः अनादीत्यादि । अनाद्यनन्तत्वपक्षे निर्मोक्षणनिर्विशेषस्यैवासिद्धौ सविशेषनिर्विशेषादिविभागासङ्गतिः । अनादिसान्तत्वपक्षे च तन्नाशकनिर्वचनाशक्तिः । ईश्वरज्ञानस्य नित्यस्यैकत्वेन तत्र प्रथमचरमभावस्य वक्तुमशक्यत्वात्तेन नाशे प्रपञ्चाभावप्रसक्तेः । तेनानाशे सान्तत्वपक्षस्यासम्भवश्चेति तेनैव तथात्वादित्यर्थः । वस्तुतस्तु जीवाविद्याकल्पितमेव तन्मते बिम्बत्वमीश्वरस्य । सर्वमुक्तौ सर्वांशेनाविद्यानाशे ईश्वरस्य बिम्बत्वनिवृत्त्या शुद्धचैतन्यरूपेणावस्थानमिति तन्मतम् । तच्च जीवगतदूषणपक्षेण दूषितप्रायम् । इदं तूद्भावितं, तेन ब्रह्मगतत्वदूषणे विशिष्य युक्तयोऽत्र नोक्ताः ।

अतः परं तत्स्वरूपविचारेण दूषयति किञ्चेत्यादि । दत्तोत्तरत्वादिति । अनादिभावस्यानन्तत्वेन द्वैतापत्तेर्निर्विशेषासिद्धेश्च । सान्तत्वपक्षेऽपि पूर्वोक्तरीत्या प्रपञ्चाभावप्रसक्तेश्चेत्यर्थः । असम्भवं व्युत्पादयति ब्रह्मण इत्यादि । तदानीमिति, सृष्ट्यारम्भकाले । पूर्वोक्तदूषणापत्तेरिति, अनन्तत्वेन निर्विशेषब्रह्मासिद्धेरित्यर्थः । दत्तोत्तरत्वादिति । चरम-

सति ब्रह्मानतिरेकात् । 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' इति स्मृतेः । उक्तदूषणग्रासाच्च । अतोऽयमुपाधिपक्षो न सङ्गतः । श्रुतौ विशेषनिरूपणावसरे क्वापि तदनुक्तेश्च । न 'चेन्द्रो मायाभिः पुरुरूप ईयते' इत्यत्रास्ति तदुक्तिरिति वाच्यम् । किं तावता ? तत्रापि पुरुरूपज्ञानकारणतयोल्लेखाद्भवदभिमतार्थासिद्धेः । तथा हि, इदं हि वाक्यं मधुब्राह्मणस्थं, तत्र च मैत्रेयीब्राह्मणप्रतिपादितस्यात्मनः पृथिव्यादिषु विद्यमानत्वममृतब्रह्मसर्वात्मकत्वं चोपक्रमे प्रतिपाद्य, तद्द्रष्टा ऋषिर्मन्त्रः पुरां करणं पक्षिरूपेण तासु प्रवेशं चोक्त्वा सर्वस्य तत्संवृतत्वमनुवाद । तेन प्राप्ते भेदे पूर्वप्रतिपादितसर्वरूपत्वहानिमालोक्य तन्निरासेन सर्वरूपत्वसमर्थनाय 'रूपं रूप'मिति मन्त्रः पठ्यते । 'अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि चे'त्यनेन विव्रियते च । ततो यस्यैवं हर्यादिरूपतात्रोक्ता ब्राह्मणोपक्रमे चामृतब्रह्मसर्वरूपतोक्ता तस्यैव 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्य'मित्यनेन स्वरूपमुक्त्वा 'अयमात्मा ब्रह्म सर्वानुभू'रित्यनुशासनमित्युपसंहृतम् । तत्रोपक्रमोपसंहाराभ्यां ब्रह्मणः सर्वरूपता मायां विनैव बोधिता । मन्त्रव्याख्याने च तथैव हर्यादिरूपतेत्यात्मन एव [२]सर्वरूपताभ्यासेन 'सर्वानुभू'रित्युपपत्त्या च ब्रह्मणः स्वरूपबहुत्वे मायायाः कारणत्वाभावात् । अन्यथा पूर्वार्धे एव 'मायया पुरुरूपो बभूवे'ति वदेत्तथा विवृणुयाच्च, अतो न किञ्चिदेतत् ।

---

ज्ञाननाश्यत्वेन ब्रह्मगतपक्षे प्रपञ्चाभावप्रसक्त्या जीवगतपक्षेऽन्योन्याश्रयादिना च कल्पकत्वायोगे ताभ्यामेव तथात्वादित्यर्थः । चकारस्त्वप्रामाणिकत्वसमुच्चयार्थः । एवं युक्त्या दूषिते उपाधिवादे तत्समर्थनायोपाधेः प्रामाणिकत्वे वादी प्रयतेत, तदर्थं तेषामाभासत्वं बोधयिष्यन्नाह श्रुतावित्यादि । **भवदभिमतार्थासिद्धेरिति** । विशेषकल्पकोपाधित्वासिद्धिरित्यर्थः । **पृथिव्यादिष्वित्यादि** । पृथिव्यबग्न्याकाशवाय्वादित्यचन्द्रदिग्विद्युत्स्तनयित्नुधर्ममत्यमानुषात्मसु । 'इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधुयश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व'मित्येवंविधैर्वाक्यैः प्रतिपाद्येत्यर्थः । **तद्द्रष्टेत्यादि** । 'तदेतदृषिः पश्यन्नवोच'दित्येवम् । 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः परः स पक्षी भूत्वा पुरः पुरुष आविश'दिति, 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृत'मित्यनेनोवादेत्यर्थः । **इत्युपपत्त्येति** । सर्वमनुभवतीति सर्वानुभूः । सर्वस्य

---

१ निर्विशेषेति गघपाठः । २ रूपताभ्यासेनेति घपाठः ।

**न च 'यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत' इत्येवंजातीयकेषु तलवकारवाक्येषु, उपास्यस्याब्रह्मत्वोक्तेराकाराणां मायिकत्वमुच्यत इति वाच्यम्। तत्रापि तथार्थाभावात् । तथा हि, तत्र हि 'केनेषित'मित्यनेन मनःप्रभृतिप्रेरकं जिज्ञास्यत्वेनोपक्षिप्य 'श्रोत्रस्य**

---

मिथ्यात्वे किमनुभवेदतोऽनुभवितत्वकथनादेव सर्वस्य सत्यत्वमुपपाद्यत इति तयोपपत्त्यर्थः । वस्तुतस्तु मायापदमत्रेन्द्रियवृत्तिवाचकम्। 'स्यान्माया शाम्बरी क्रिया' 'दम्भो बुद्धिश्चे'त्यनेकार्थकोशे बुद्धिवाचित्वेनाभिधानात्। तथा च रूपं रूपं रूपयित्वा रूपयित्वा, आभीक्ष्ण्ये णमुल्। एवं पुरः कृत्वा कृत्वा प्रतिरूपः, तदुपलक्षितमूलरूपो बभूव । यथैकस्य पुस्तकस्योपरि पुस्तकान्तरे लिखिते पूर्वस्य तत्प्रतिरूपत्वं, तद्वत् । कार्याभावे मूलमूलिभावाभावात्कार्यस्य तदुपलक्षकत्वम् । तत्करणप्रयोजनमाह । तद्, रूपितम् । अस्य रूपं प्रतिचक्षाणाय, मूलरूपात्मयाथात्म्यज्ञानाय । ज्ञानप्रकारमाह—इन्द्रः परमेश्वरः, मायाभिरस्मदादीन्द्रियवृत्तिभिः श्रौतसाधनसाधिताभिः, पुरुरूपः, सर्वज्ञत्वसर्वकर्तृत्वादिविविधोत्कृष्टरूप ईयते ज्ञायते । यदि विविधा बाह्याभ्यन्तरपुरो न कुर्यात्तदेन्द्रियाद्यभावेन करणरहितैरस्मदादिभिः कथं ज्ञायेत ? सिद्धमाह–हि निश्चयेन, यतो हेतोर्वा अस्य दशशता अयुतसङ्ख्याका अनन्ता इति यावत् । ईदृशा हरयो मनोहरणसमर्थाः । शक्तयस्तनवो वा, युक्ता उचिताः । ज्ञानजनका इन्द्रियवृत्तयो वा युक्ता इत्यर्थः । यत्तु परैर्व्याकृतं–" रूपं रूपं प्रतिशरीरमयमीश्वरः प्रतिरूपः प्रतिबिम्बरूपो बभूव । अवच्छेदपक्षे–अनुरूपो घटाकाशवद्बभूवेत्यर्थः । किमर्थं प्रतिबिम्बभाव इत्यत आह–तद् बिम्बत्वमस्य निरुपाधिकस्यात्मनो रूपं स्वरूपं प्रतिचक्षाणायात्मयाथात्म्यज्ञापनाय । प्रतिबिम्बाभावे अनाद्यविद्यापरावृत्तस्य प्रकाशानुपपत्तेः । नन्वसङ्गादिलक्षणस्य प्रतिबिम्बे को हेतुरित्यपेक्षायामात्माज्ञानमेव प्रतिबिम्बोपादानमित्याह— इन्द्रः परमेश्वरः, मायाभिः बहुविधनामरूपविषयमिथ्याज्ञानात्मना परिणतया मायया, पुरुरूपो बहुरूप, ईयते ' जलसूर्यवन्मिथ्यैव प्रतीयते । तथापि परस्य बहुरूपत्वे किं निमित्तमत आह युक्ता इति । अस्य प्रतीचो रथस्थानीये शरीरे युक्ता योजिता हरयो विषयग्रहणसमर्था इन्द्रियाणि दशशताः सन्ति । तदेव निमित्तमित्यर्थ इति " । एतस्यासङ्गतत्वं मूलोपपादितरीत्या बोध्यम् । एवमन्यत्रापि प्रकरणानुरोधेन मायाशब्दः सामर्थ्यार्थकत्वेन प्रथमकार्यार्थकत्वेन च व्याख्येयः । ' दितेः प्रविष्ट उदरं योगेशो योगमायया । तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभवद् बृह'दित्यादौ तत्प्रयोगदर्शनात् । यत्र पुनरसत्कार्यजनकेऽर्थे मायापदप्रयोगस्तत्रापि कार्यस्यैवासत्यत्वं नृसिंहोत्तरतापनीयादौ, न तु मायास्वरूपस्येति, स्वरूपासत्यत्वे " खपुष्पवत् कार्यजनकत्वायोगात्, सदसत्त्वे च तत्कल्पकत्वायोगा"दित्युक्तमेव । तस्मादुक्त एवार्थ इति दिक् ।

**वाक्यान्तरस्याभासत्वमुपपादयिष्यन्नाह–न च यदित्यादि । पूर्वोक्तामृतभाव इति,**

श्रोत्र'मित्यादिना सर्वाधिदैविकत्वं जिज्ञास्यस्य लक्षणं, जीवस्य श्रोत्रादिभावत्यागे सति मोक्षं, उक्तलक्षणकस्य देवस्य चक्षुराद्यगम्यत्वादननुशास्यत्वं विदिताविदितान्यत्वं तस्योक्त्वा, पूर्वोक्तामृतभावे हेत्वपेक्षायां ब्रह्मज्ञानस्य हेतुत्वं हृदिकृत्य ज्ञेयं ब्रह्म कार्यद्वारा परिचाययन्नाह 'यद्वाचे'त्यादि । तथा च, यद्वागाद्यगम्यं तत्प्रेरयितृ विदिताविदितेतरं तदेव ब्रह्मत्वं विद्धि, नेदं, अतादृशं प्रत्यङ्मात्रं, न विद्धि । मन आदिप्रेरकत्वेऽपि विदिताविदितेतरं हि परं ब्रह्म त्वेतावदेव, प्रेर्यत्वात् । तर्हि कथं तस्य वेदनमत आह, यदिदं श्रुतिप्रसिद्धं उपासते वैदिकोपासका इति वाक्यशेषः । तथा चोपास्यत्वेन श्रुतौ सिद्धत्वात्तया तद्वेदनमिति भावः । विदिताविदितेतरत्वं चानिरुक्तश्रुत्यैव सिद्धमिति न कोऽपि शङ्कालेशः । यद्युपास्यस्याब्रह्मत्वमभिप्रेयात्पुनरिदङ्कारं न ब्रूयात् । 'नेदं यदुपासते' इत्येतावतैवाब्रह्मत्वसिद्धेः । एतेनैव परोक्तव्याख्यानमपि परास्तं ज्ञेयम् । अतस्तत्स्वरूपपरिचायनार्थमेवैवमुच्यते, अतो नानेनाकाराणां मायिकत्वसिद्धिः ।

न च नृसिंहोत्तरतापिनीयात्तत्सिद्धिः, तस्यानुपदमुपपाद्यत्वात् । श्रुत्यन्तरैः सिद्धे वास्तविके आकारे, ततः प्रतिबिम्बन्यायेन मायिकाकारसिद्धेरौचित्याच्च । अनन्तरूपत्वे तस्यापि सङ्ग्राह्यत्वाच्च । आकारादिबाधकानामन्येषां हेत्वाभासानां विद्वन्मण्डनादौ दूषणान्नेह विस्तरः । अत एवोभयलिङ्गाद्यधिकरणे 'न स्थानतोऽपि परस्योभयलिङ्गं' इति सूत्रांशेन परस्योभयलिङ्गं पक्षं तत्र

---

'श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीरा प्रेत्यास्माल्लोकादमृता भवन्ती'ति मन्त्रोक्ते मोक्षे । मन्त्रार्थस्तु—यद्ब्रह्म, वाचा वर्णपदवाक्यरूपया, अनभ्युदितमनभ्युक्तमप्रकाशितम्, येन ब्रह्मणा वाग् अभ्युद्यते विवक्षितेऽर्थे प्रकाश्यत इति । शेषस्तु मूल एव व्याख्यातः । न कोऽपीति । अनभ्युदितपदेऽपि न अभित उदितं, किन्तु यथाकथञ्चिदित्यर्थादस्मादपि नेत्यर्थः । परोक्तव्याख्यानमिति । यदुपासते तद्ब्रह्म न विद्धि, किन्तु वागादिप्रेरकं प्रत्यग्रूपं विद्धीत्येवमर्थकं तदित्यर्थः ।

पञ्चदशप्रकरण्यादिषु प्रमाणत्वेन स्थापितस्याभासीकरणे पुरःस्फूर्तिकमर्थं सङ्गृहीष्यामीत्याशयेनाह—न चेत्यादि । अनुपदमिति । अग्रेऽपेयमतखण्डने । एवं विरुद्धधर्माश्रयत्वमनन्तरूपत्वं श्रुतिभिः साधयित्वास्यार्थस्य न्यायसिद्धत्वं व्युत्पादयति अत एवेत्यादिना । अत एवेति, यतः श्रुतौ विरुद्धधर्माश्रयमेव ब्रह्म सिद्धं, तथैव च व्यासाशयगोचरं, तस्मादेवेत्यर्थः । सूत्राणि तु ' न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ' ' न भेदादिति

तत्र स्थितितः, अपिनावच्छेदभेदतः, नेति साध्यं चोक्त्वा 'सर्वत्र ही'त्यंशेनोभयलिङ्गस्य सर्वत्र श्रूयमाणत्वादित्येवंरूपहेतुसूचनाद्विविधवाक्येषु न कस्याप्यनुवादकत्वं श्रौतत्वाद्ब्रह्मण इति बोधयित्वा, द्वितीये च 'न भेदादिति चे'दित्यंशेनोपहितानुपहितयोर्भेदाङ्गीकारे उभयसमर्थनं भविष्यतीति न वस्तुत उभयलिङ्गं ब्रह्मेति तन्मतोपपत्तिमाशङ्क्य, 'न प्रत्येकमतद्वचना'दित्यंशेन 'अपि चैवमेक' इत्यग्रिमेण च 'अयमेव स योऽय'मिति मधुविद्योक्ते'र्नेह नानास्ति किंचने'ति काण्वोक्तेश्च विरोधाद्भेदो न शक्यवचन इति तां निरस्य, एवं त्रिसूत्र्या ब्रह्मैकमेवोभयलिङ्गमिति विषयं विमृश्य, कथं तर्ह्यविरोध इति शङ्कायां, 'अरूपवदेव ही'त्यादिपञ्चसूत्र्या एकदेशिमतेन समाधत्ते । तत्र प्रथमेन प्रपञ्चस्य ब्रह्मकार्यत्वेऽपि ब्रह्मणः कारणत्वेन कार्यविलक्षणत्वात् सालक्षण्येऽपि, प्रकरणित्वेन ब्रह्मधर्माणामेव मुख्यत्वादितरे ब्रह्मण्युपचर्यन्त इति निर्धारिते सर्वव्यवहारातीतत्वे शास्त्रवैफल्याद्याशङ्क्य, 'प्रकाशवच्चावैयर्थ्या'दिति द्वितीयेन सूर्याधीनसौरप्रकाशवद्ब्रह्माविर्भावाधीनो ब्रह्मणि तद्धर्मवत्त्वव्यवहार इति न तद्वैफल्यमिति शास्त्रबलान्निश्चीयते इत्युक्त्वा 'आह च तन्मात्र'मिति तृतीयेन 'स यथे'ति श्रुतौ प्रज्ञानघनमात्रत्वनिरूपणान्नालौकिकेन्द्रियकल्पना कार्या, क्रिया त्वस्त्येव । न चात्र श्रुतौ धर्ममात्राभावोक्तिः, येन क्रि-

---

चेन्न प्रत्येकमतद्वचनात्' 'अपि चैवमेके' 'अरूपवदेव हि तत्प्रधानत्वात्' 'प्रकाशवच्चावैयर्थ्यात्' 'आह च तन्मात्रं' 'दर्शयति चाथोऽपि स्मर्यते' 'अत एव चोपमा सूर्यकादिवत्' 'अम्बुवदग्रहणात्तु न तथात्वं' 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं' 'दर्शनाच्च' 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय' इति 'प्रत्येकमतद्वचना'दिति । 'इयं पृथिवी सर्वेषां भूतानां मध्वि'त्यादौ मधुविद्यायां प्रति पृथ्व्यादिभेदं ब्रह्माभेदवचनादित्यर्थः । 'अपि चैवमेक' इति हेत्वन्तरं च । एवं भेदाभावं साक्षादेके शाखिनोऽधीयत इत्यर्थः । प्रथमेन, अरूपवत्सूत्रेण । अर्थस्तु—ब्रह्म अरूपवदेव, रूपवद्विलक्षणमेव । कुतः ? तत्प्रधानत्वात्, तेषां ब्रह्मधर्माणां प्रधानत्वात् । ब्रह्मप्रकरणे मुख्यत्वादिति । 'प्रकाशवच्चावैयर्थ्या'दिति । साधनशास्त्रस्याध्ययनविध्युपात्तस्य ब्रह्मप्रापकं साधनं वदतः, अवैयर्थ्यादतो ब्रह्मधर्माः प्रकाशवन्मन्तव्या इति सूत्रार्थः । स यथेति । श्रुताविति । 'एतस्यैव महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद' इत्याद्युक्त्वा पठ्यते 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेवं वा । अरे इदं महद्भूत-

---

१ न चोक्तश्रुताविति खपाठः ।

याऽपि नास्तीत्युच्येत । 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यती'ति वेदनिःश्वासायनस्य ब्रह्मणः क्रियाद्वयस्योक्तत्वात् । अत इन्द्रियाण्येव न सन्ति, आकारप्रतीतिस्तु ब्रह्मणः सर्वाकारत्वादेवोपपन्ना । 'कृत्स्नः प्रज्ञानघन' इत्यत्र कृत्स्नपदेन सर्वाकारत्वलाभात् । अन्यथा तद्वैयर्थ्यापातात् (सर्वाकारत्वाभावे अकृत्स्नत्वबुद्ध्यनुदयेन तन्निरासार्थकृत्स्नपदवैयर्थ्यापातात् ।) अतो 'यथा सैन्धवः सर्वः परिदृश्यमानो रसघन' एवं ब्रह्मापि यावद् दृश्यते तावत्सर्वं प्रज्ञानघनमेव, न तु किञ्चिदपि कार्यरूपं तत्रास्तीत्युक्त्वा, 'दर्शयती'ति चतुर्थेन, अत एव 'नेति नेती'ति श्रुतौ कार्यप्रकारनिषेधो 'न सत्तन्नास'दुच्यते इति स्मृतौ च सदसत्पदेन मूर्तामूर्तक्षेत्रनिषेध इति श्रुतिस्मृतिभ्यां प्रपञ्चधर्मनिषेधादेव ते धर्मा भगवत्यौपचारिका एवेति निर्णीय, 'अत एव चोपमे'ति पञ्चमेनेममेव प्रापञ्चिकधर्मोपचाररूपं निर्णयमाश्रित्य, 'समो मशकेने'त्यत्रोपमीयते, नोचे'न्न तत्सम' इति श्रुतिर्विरुध्येत । 'समो न तत्सम' इत्यनयोर्विरोधो जलचन्द्रदृष्टान्तादेव निरस्तत्वान्न दोषावहः, इदमेकदेशिमतं पञ्चसूत्र्या निरूप्य ततो'म्बुवदग्रहणा'दिति सूत्रेण अस्वच्छत्वधर्मत्वाभ्यामाधारस्य भगवत्प्रतिबिम्बग्राहकत्वाभावेन, तद्व्युदस्य वृद्धिह्राससूत्रेण तत्तदनुप्रवेश-

---

मनन्तमपारं कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय स तान्येवानु विनश्यती'ति श्रुताविर्त्यथः । अत एव चोपमा सूर्यकादिवदिति । अत एव प्रापञ्चिकधर्माणां ब्रह्मण्यौपचारिकत्वादेव उपमा । 'समो मशकेन समो नागेन समः प्लुषिणा सम एभिस्त्रिभिर्लोकै'रित्यत्रोपमोच्यते । ननु 'न तत्समश्चाभ्यधिकश्च दृश्यत' इत्यत्रोपमा निषिद्धा, कथं श्रुत्यन्तर उच्यते ? इत्यतो दृष्टान्तमाह–सूर्यकादिवदिति । सूर्येण सहितं कं जलं सूर्यकं, आदिपदेन चन्द्रकं तद्वत् । 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छ'न्निति । 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवद्' इति स्मृतिश्रुत्युक्तत्वादित्यर्थः । चकार एकदेशिमताधिकरणसमाप्तिद्योतकः । अम्बुवदग्रहणात्तु न तथात्वमिति । अम्बुवत् जलवत् । अग्रहणात् मशकनागादीनां जडानामाधाराणामस्वच्छत्वेन जीवानां च धर्मत्वेन प्रतिबिम्बाग्रहणात् । यदि धर्मे धर्मिप्रतिबिम्बे तत्प्रकाशे सूर्योऽपि प्रतिबिम्बेत, तस्मात् न तथात्वं, नौपचारिकधर्मवत्त्वं, तस्मात्सर्वकामत्वादयो धर्माः सहजा एवेत्यर्थः । वृद्धिह्रासेति । ननु धर्माः सहजाश्चेत्सर्वत्र तुल्या एव प्रतीयेरन्, न तु क्वचन केचनान्यत्रान्ये इति । तस्माद्धर्माणां साहजिकत्वमपि न साधीय इत्याकाङ्क्षायां

---

१ कृत्स्नपदाचेति खपाठः । २ एतन्मध्यस्थः पाठो नावलोक्यते गपुस्तके ।

निमित्तप्रतीतिकत्वेऽपि भगवद्धर्मत्वमेव तेषां घृतद्रवत्वाकाशाल्पत्वमहत्त्वादिवदिति स्थापयित्वा, 'दर्शनाच्चे'ति सूत्रेणोलूखलबन्धनादौ विरुद्धधर्माश्रयत्वदर्शनादनुपपत्तिं परिहृत्य, प्रकृतैतावत्त्वसूत्रेऽनुकूलयुक्त्याऽपि विरोधं परिजहार । 'प्रकृतैतावत्त्वं हि प्रतिषेधति' । प्रकृते ब्रह्मणि यदेतावत्परिदृश्यमाना यावन्तो लौकिकाः पदार्थास्तत्त्वं, तेषामेव धर्मान्निषेधति, प्रतीतस्य प्रतिषेधात् । अतो जगद्वैलक्षण्यमेवास्थूलादिवाक्यैः प्रतिपाद्यते, न तु वेदोक्तधर्मा निषेद्धुं शक्यन्ते । कुत एत दवगम्यते ? तत्राह 'ततो ब्रवीति च भूयः' । यत्रैव वाक्ये पूर्वं निषेधति तस्मिन्नेव वाक्ये पुनस्तमेव विधत्ते । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'आनन्दं ब्रह्मणो विद्वान्' इति । तथा अस्थूलवाक्येऽपि 'एतस्यैव प्रशासने' 'एतद्विदित्वा' 'आकाश ओतश्च प्रोतश्चेति, चकारादेकवाक्योपाख्यानभेदौ सङ्गृहीतौ । सर्वत्र लौकिकं प्रतिषेधत्यलौकिकं विधत्ते इति युक्त्या निर्णयः । तस्माद्युक्त्याप्यविरोधः ।

यत्तु 'सर्वकामः सर्वगन्धः सर्वरस' इति 'अस्थूलमनणिव'त्युभयलिङ्गश्रुतिदर्शनादुभयलिङ्गं ब्रह्म प्रतिपत्तव्यमिति पूर्वपक्षीकृत्य, निर्विशेषत्वसविशेषत्वयोः परस्परविरोधेनोभयोः स्वाभाविकत्वायोगादेकस्य स्वाभाविकत्वमन्यस्यागन्तुकत्वं वाऽपारमार्थिकत्वं वा वाच्यम् । तत्रागन्तुकत्वे ब्रह्मणः परिणामित्वविकारित्वप्रसक्तेरपारमार्थिकत्वमेव ज्यायः । श्रुतीनां निर्विशेषताप्रतिपादनार्थत्वादित्याहुः ।

---

पठति वृद्धीत्यादि । नैष दोषः, धर्माणां वृद्धिह्रासभाक्त्वम् । अन्तर्भावात् तत्र जडे जीवे चानुप्रवेशेनान्तर्विद्यमानत्वात् । कुत एवमत आह उभयसामञ्जस्यादेवमिति । एवं, तत्तदनुप्रवेशनिमित्तप्रतीकत्वेऽपि घृतद्रवत्वाकाशाल्पत्वमहत्त्वादिवद्भगवद्धर्मत्वस्वीकारे उभयविधश्रुतीनां सामञ्जस्यात् । यथाश्रुतयोजनेनाविरोधादित्यर्थः । स्फुटमग्रिमम् । प्रशासने इति । 'एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत' इत्यादि । एतद्विदित्वेति । 'एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मण' इति । आकाश इति । 'कस्मिन्वा आकाश ओतप्रोतश्चे'ति प्रश्ने 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्व'मित्यादि ।

एवं सिद्धान्तवर्त्मना अधिकरणार्थमभिधाय मायावादिमतीयमर्थं दूषयितुं तन्मतमनुवदति यत्त्वित्यादि । इति पूर्वपक्षीकृत्येति । उभयलिङ्गश्रुतिदर्शनाद् उभयलिङ्गं प्रति-

---

१ वाक्योपासनेति घपाठः ।

तन्न । श्रुतीनां निर्विशेषताप्रतिपादनार्थत्वस्य प्रागेव निरस्तत्वात् । न च परिणामो दोषः । अविकारित्वे परिणामित्वस्याप्यदुष्टत्वात् । 'आत्मकृतेः परिणामा'दिति भगवता सूत्रकृताऽप्यनुमतत्वात् । सुवर्णादेरविकृतपरिणामदर्शनाच्च । ब्रह्मण औपनिषदत्वेन युक्तिविरोधस्यात्र भूषणत्वात् । अन्यथा निर्विषयकज्ञानरूपताया अप्यसिद्धेः । इत एव नानात्वापत्तेरपि निरासाच्च । न च नानात्वस्य प्रमाणान्तरसिद्धत्वात्तद्बोधकश्रुतीनामनुवादकत्वान्नैर्बल्यं शङ्क्यम् । श्रुत्या एकत्वस्येव ऐच्छिकनानात्वस्यापि बोधने श्रुतीनां प्रमाणान्तरानधिगतार्थगन्तृत्वानपायेनानुवाददोषासंसर्गात् । अन्यथा निर्विषयकज्ञानरूपत्वेश्वरत्वैकत्वादेर्योगसाधितान्तःकरणगोचरत्वस्य शक्यवचनत्वेन तद्बोधकश्रुत्यं-

---

पत्तव्यमुतान्यतरलिङ्गं ? अन्यतरलिङ्गपरिग्रहेऽपि किं सविशेषमुत निर्विशेषमिति संशये, उभयश्रुतिदर्शनात्पूर्वपक्षीकृत्येत्यर्थः ।

दूषयति–तन्नेत्यादि । ननु सूत्रकृतोक्तमपि लोकविरोधे कथं ग्राह्यमित्यत आह सुवर्णादेरिति । आदिपदेन चिन्तामण्यादिसङ्ग्रहः । ननु श्रुतौ मृत्पिण्डदृष्टान्तस्यापि कथनात्कथमेकान्ततोऽविकृतपरिणामनिश्चय इत्यत आह ब्रह्मण इत्यादि । तथा चोभयदृष्टान्तानुरोधाद् विकृतमविकृतं चेत्येवं युक्तिविरुद्धमप्यङ्गीकार्यमित्यर्थः । अत्र प्रतिबन्दीमाह अन्यथेत्यादि । ननु युक्तिविरुद्धं तदाङ्गीकार्यं यदि श्रुतिर्न विरुध्यते, न तु तथा, परिणामेन नानात्वे जाते 'नेह नानास्ति किंचने'ति श्रुतिविरोधादित्यत आह इत एवेति । ब्रह्मणः श्रौतत्वादेव । यथा परिणमदपि ब्रह्म न विक्रियते, तथा परिणमन्न नाना भवतीत्यपि श्रुतिबलादङ्गीकार्यमित्यर्थः । ननु श्रुतिषु ब्रह्मण एकत्वोपदेशान्मास्तु नानात्वं, तथाऽपि प्रतिविद्यं चतुष्पाद्ब्रह्म, षोडशकलं ब्रह्म, सहस्रपादेकमूर्धा त्रैलोक्यशरीरं वैश्वानरशब्दवाच्यं ब्रह्मेत्येवं नानाकारोपदेशादाकारनानात्वं तु स्वीकार्यमेव । तत्र निरंश एकस्मिन्नानाकारत्वं वास्तवमवास्तवं चेति विमर्शे क्रियमाणे नानात्वस्य प्रत्यक्षादिसिद्धत्वादाकारोपदेशमुखेन नानात्वबोधिकानां श्रुतीनां लौकिकानुवादित्वेन नैर्बल्यान्न तदनुरोधेन तेषां वास्तवत्वाङ्गीकारो युक्त इत्यत आह न चेत्यादि । तथा चानुवादकत्वाभावान्न नैर्बल्यमित्याकारनानात्वं वास्तवमेवेत्यर्थः । ऐच्छिकनानात्वस्यापि प्रमाणान्तरसिद्धत्वाग्रहे प्रतिबन्दीमाह अन्यथेत्यादि । तथा च सर्वश्रुत्युपप्लव इत्यर्थः । न चैकत्वादिकं योगिप्रत्यक्षसिद्धं नानूद्यते, श्रुतीनां नित्यत्वात्, योगिप्रत्यक्षस्य च जन्यत्वादतो न दोष इति वाच्यम् । ईश्वरेच्छाया नित्यत्वेन लोकापेक्षया प्राचीनत्वेन चैच्छिकनानात्वेऽपि तौल्यात् । नन्वाकारनानात्वं वास्तवं चेत्स्या'त्तदैकधा बहुधे'ति श्रुतौ प्रतिबिम्बो न दृष्टान्तीक्रियेत । सूत्र-

शस्याप्यनुवादकत्वप्रसक्त्यैकत्ववाक्यानामप्यप्रमाणत्वापत्तेश्च । 'एकधा बहुधे'त्यादिश्रुतावपि चन्द्रादिदृष्टान्तेनांशानुप्रवेशादेवांशिधर्मास्तत्र प्रतीयन्ते, न तु तेन विना। तेषु च केचन धर्मा मुखवदपारमार्थिका इति तथात्वस्य सूत्रकृतैव दूषणात्तत्र चैकस्य नानात्वमेव दृष्टान्तार्थो न प्रतिबिम्बत्वमित्यर्थाद्, दृष्टान्ते विवक्षितांशसारूप्यग्रहणस्यैवोभयवादिसम्मतत्वेन चन्द्रदृष्टान्तेनास्मदुक्तार्थस्यैवोपोद्बलनाच्च । एवं च 'यन्न स्थानतोऽपी'ति सूत्रे उभयलिङ्गत्वं पूर्वपक्षीकृत्य, एकस्य वस्तुनः स्वतो रूपादिमत्तायास्तद्विपरीततायाश्चावधारयितुमशक्यत्वात्, स्थानतस्तथात्वाङ्गीकारे चौपाधिकत्वेन स्वाभाविकत्वायोगादुपाधीनामविद्याकृतत्वादन्यतरलिङ्गपरिग्रह एव ज्यायान्। तत्रापि निर्विकल्पकपरिग्रह एव। तथा सर्वत्र स्वरूपप्रतिपादनपरेषु'अशब्दमस्पर्श'मित्यादिवाक्येषु ब्रह्मणोऽस्तसमस्तविशेषत्वेनैवोपदेशादिति व्याकृतम्। तदपि न रोचिष्णु । उक्तवाक्ये 'महतः पर'मिति महन्नियामकत्वस्य तत उत्कर्षस्य वा उपदेशदर्शनात्। अस्थूलादिवाक्ये प्रशासनादीनां 'तदेतद्ब्रह्मा पूर्वमनपर'मित्यत्र 'सर्वानुभू'रिति सर्वानुभवितृत्वस्य तथात्वाच्च । निर्विशेषमात्रलिङ्गोपदेशस्य हेतुताया अशक्यव्याकरणत्वात्। अत एव स्वभावत उभयलिङ्गाभावस्य साध्यताया अपि निरासात्। द्वितीयसूत्रेऽपि नेत्यनेनैकलिङ्गत्वनिषेधोऽप्यत एव, तथा असिद्ध्या

---

कृता ' चोपमा सूर्यकादि'वदिति नोच्येतेति चेत्तत्राह एकधेत्यादि। दूषणादिति। ' अम्बुव'त्सूत्रे दूषणात्। भाष्यकारोक्तं दूषयित्वा भामतीनिबन्धोक्तविषयवाक्येष्वप्युभयलिङ्गमेव ब्रह्म सिध्यति, न त्वस्तसमस्तविशेषमिति बोधयितुं तन्मतमाह एवं चेत्यादि। एवं चेत्यस्य तदपि न रोचिष्णु इत्यनेनान्वयः। एवमिति, वक्ष्यमाणरीत्या। चोऽवधारणे। आगन्तुकत्वनिरासायोक्तमाविद्यकत्वादिति । दूषयति तदपि नेत्यादि। उक्तवाक्य इति । ' अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत'इति काठकवाक्ये । अतः परं नभेदसूत्रे यद्भाष्यकृतोक्तं, ब्रह्म निर्विशेषमेकलिङ्गमेवेति न, कुतः ? भेदात्, प्रतिविद्यमाकारभेदोपदेशाद् इति व्याख्यायते, उभयलिङ्गत्वं ब्रह्मणो न सम्भवतीत्याशङ्क्य आकारभेदस्योपाधिकृतत्वादविरोधः। एवमनङ्गीकारे भेदशास्त्रवैयर्थ्यापत्तिरिति चेन्न । प्रत्युपाधिभेदं ब्रह्माभेदश्रवणादित्युक्तम्। तत्र व्याख्यानांशं दूषयति द्वितीय इत्यादि। अत एव तथेति। उक्तवाक्ये निर्विशेषमात्रसिद्ध्यभावेन एकलिङ्गत्वसिद्धान्तसिद्ध्यभावादेव न पूर्वपक्षिमतियत्नः। असि-

---

१ आविद्यकत्वाच्चान्यतरेति खपाठः। २ यद् व्याकृतमितीति गपाठः।

दूषणहेतोरप्यैलिङ्गत्वापत्तिश्च । अरूपवत्सूत्रे रूपाद्याकारराहित्यप्रतिपादनमपि तथा । विषयवाक्येषु पर्युदासेन रूपवद्वैलक्षण्यमात्रस्यैव स्फोरणात् । अन्यथा मतुब्वैयर्थ्यापत्तेश्चेत्युक्तम् । प्रकाशवत्सूत्रे दृष्टान्तबलेनाकाराणामौपाधिकत्वस्थापनमप्ययुक्तम् । न भेदसूत्रे औपाधिकोभयलिङ्गत्वाभावः, समर्थनभागविरोधापत्तेः । उपाधिनिमित्तस्यावास्तविकत्वोक्तिरपि तथा । घृतद्रवत्वादौ व्यभिचारात् । दर्शयतिसूत्रेऽपि बाष्कलिवाक्यसंवादे 'स होवाचाधीमहि भो इति स ह तूष्णीं बभूव, तं ह द्वितीये तृतीये वचन उवाच, ब्रूमः खलु त्वं तु न विजानास्युपशान्तोऽयमात्मे'त्यत्राप्यवचनेन वचनमनिरुक्तत्वादेवोपपद्यमानं नास्तसमेस्तविशेषतां प्रतीक्षते, अन्यथोपशान्तत्वमपि नेति ब्रूयात् । 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां द्रष्टुमर्हसि' इति मोक्षधर्मीये विश्वरूपधरनारायणवाक्येऽपि सर्वभूतगुणयोगस्यैव मायिकत्वात् तद्युक्तदर्शनस्यैव निषेधः, न तु सर्वात्मकत्वेन सर्वाकारत्वेन च तस्येत्यतोऽपि न सिद्धिः । अम्बुवत्सूत्रस्य पूर्वपक्षरूपत्वसूचनमप्यपेशलम् । तुशब्दस्य सिद्धान्तव्यतिरिक्तपक्षनिरासकताया एव सर्वत्र दर्शनाच्छ्रौतदृष्टान्तस्यान्याभिप्रायकत्वेन ततोप्याग्रहस्यानुचितत्वादुक्तदोषैः प्रतिबिम्बपक्षस्य सिद्धान्तत्वायोगाच्च । अत एव

---

ङ्ग्येति । निर्विशेषत्वासिद्ध्या प्रत्युपाधिभेदं ब्रह्माभेदश्रवणाद्ब्रह्माभेदासिद्धिर्न त्वेकस्य निर्विशेषैकलिङ्गत्वस्य, 'तेजोमयोऽमृतमय' इत्यादिकथनादित्यर्थः । विषयवाक्येष्विति । पूर्वोक्तेष्वस्थूलादिवाक्येषु । प्रकाशवत्सूत्रे यथ सौरश्चान्द्रमसो वा प्रकाशो वियद्व्याप्य वर्तमानोऽङ्गुल्याद्युपाधिसम्बन्धादृजुवक्रादिभावं प्रापितेषु तेषु देशादिषु तदाकारतामापद्यत एवं पृथिव्याद्युपाधिसम्बन्धाद्ब्रह्मापि नानाकारतां प्राप्नोतीत्यत आकारबोधकशास्त्रस्यावैयर्थ्यमिति यदुक्तं तद्दूषयति प्रकाशेत्यादि । औपाधिकेत्यादि । सौरादिप्रकाशदृष्टान्तेन सिद्ध औपाधिकाकारे तत एवोभयलिङ्गत्वे तथात्वादित्यर्थः । ननु तत्र स्थापयित्वा पुनरौपाधिकस्य वस्तुधर्मत्वं नेति निर्णीतमतो न दोष इत्यतस्तदपि दूषयति उपाधीत्यादि । आदिपदेन न प्रकाशोऽपि सङ्गृहीतुं शक्यः । व्याप्यवर्तमानस्योपाधिना परिच्छेदे तन्निमित्तस्य प्रकाशीयाकारस्यैव तत्र व्यक्तेरवास्तवत्वस्य वक्तुमनुचितत्वात् । जलादौ तथा निश्चयात् । उदकचषकशरावादौ हिममहिमबद्धेऽम्बुनि चषकादिभङ्गेऽपि तादृगाकारस्य सर्वजनदर्शनगोचरत्वात् । श्रौतदृष्टान्तस्येति, जलचन्द्रवदित्यस्य । उक्तदोषैरिति । अग्रहणप्रयोजकैरस्वच्छत्वादिभिरग्राह्यत्वप्रयोजकैररूपत्वादिभिश्चेत्यर्थः । अत एवेति । दृष्टान्तासामञ्जस्यादेव । एक-

---

१ असङ्गत्वादिति गपाठः ।

वृद्धिह्राससूत्रे, उभयसामञ्जस्यपदे, उक्तदृष्टान्तदार्ष्टान्तिकसामञ्जस्यव्याख्यानमपि तथैव। तस्मात्पूर्वोक्तरीतिरेव साधीयसीत्युक्तश्रुतिषु कल्पनोपदेशाभावे सिद्धे प्रतीयमानं गृहीत्वोपासनापरत्वेऽपि तदपवादाभावादुभयलिङ्गत्वेऽपि लिङ्गानां ब्रह्मानतिरेकाद्ब्रह्मणो नानात्वाभावेन ब्रह्मणश्चैतन्यैकरसस्य सत एव सिद्धेर्वर्णादिषु विद्यमानस्यैव कत्वगत्वादेर्नैत्रदर्पणाधानेन व्यक्तिवद्भगवदिच्छया तत्तदुपासनया तत्तद्धर्मव्यक्तेर्वस्तुतः परिणामाभावाच्चोभयलिङ्गं यथाश्रुतमेव ब्रह्म प्रतिपत्तव्यमिति निश्चयः। इममेवार्थमपि संराधनोभयव्यपदेशाधिकरणाभ्यां प्रमेयबलविचारेणापि दृढीचकार। तत्र प्रथमे ताव'न्न चक्षुषा गृह्यते' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत' 'नापि वाचा' 'सर्वे वेदा यत्पदमामनन्ति' 'तं त्वौपनिषदं पुरुषं' 'अप्राप्य मनसा सह' 'मनसैवाप्तव्यम्' 'अस्पर्शमगन्धमरसं' 'सर्वगन्धः सर्वरसः' 'अपाणिपादः' 'विश्वतश्चक्षुः' 'निर्गुणः' 'सर्वज्ञः सर्ववित्' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी'त्यादिष्वितरेतरविरुद्धवाक्येषु प्रत्याय्यमानस्यैकस्य वस्तुनो द्विरूपत्वासम्भवात्प्रमाणान्तरेण दृश्यादर्शनेन तदनुग्राहिकया 'नेति नेति' 'न गृह्यो न हि गृह्यते' इत्यादिकया श्रुत्या च धर्मवाचकश्रुतीनामुपचारितार्थत्वं 'तदव्यक्तमाह ही'त्यनेनाशङ्क्य 'अपि संराधने प्रत्यक्षानुमानाभ्या'मित्यनेन समाहितम्। तत्रापि, हिः पूर्वपक्षिगर्हायां, मूर्खः पूर्वपक्षीति यतः, संराधने सम्यगाराधने, सेवायां तोषे जाते दृश्यते। 'श्रद्धाभक्तिज्ञानयोगादवैहि' 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा'मिति श्रुत्या, तदनुगृहीतया 'भक्त्या त्वनन्यया' इत्यादिस्मृत्या, 'सुदुर्दर्शमिदं रूपं दृष्टवानसी'ति स्मृत्यनूक्तेन संराधनदर्शनेन चैवमवसीयते, अतो न तासामुपचारितार्थत्वं नाप्यन्यासाम्। ततस्तु 'पश्यते निष्कलं ध्यायमानः' 'अनेकबाहूदरवक्त्रनेत्रं पश्यामी'ति द्विधाप्यनुभवोक्तेः। ध्रुवादीनां चानुमापकत्वम्। तथा च तादृशप्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां वा साकारमनन्तगुणपूर्णं ब्रह्म, न त्वव्यक्तमेवेति। एवमेवाग्रिमेऽधिकरणे, यथा सूर्यचन्द्रमणिप्रकाशेषूष्णशीतानुभवस्पर्शानुभवेऽपि न तेजसि तावन्तः स्पर्शा अङ्गीक्रियन्ते,

---

देशिमते 'दर्शनाच्चे'त्यन्तमधिकरणं, सिद्धान्ते तु प्रकृतैतावत्त्वसूत्रान्तम्। तदव्यक्तमित्यारभ्य द्वितीयमिति सिद्धान्तमतेनाह इममित्यादि। दृश्यादर्शनेनेति, योग्यानुपलब्ध्या। अग्रिमाधिकरणे 'प्रकाशादिवच्चावैशेष्यं' 'प्रकाशश्च कर्मण्यभ्यासात्' 'अतोऽनन्तेन तथा हि लिङ्गम्' इति सूत्रद्वयेन पूर्वपक्षः। अर्थस्तु, प्रकाशवत् सूर्यचन्द्रमणिप्रकाशजलसुवर्णा-

**न वा स्थानविशेषेण जलेऽनुभवेऽपि, तेन च सुवर्णे वर्णभेदप्रतीतावपि ते। एवं ब्रह्मण्यपि निर्विशेषत्वे प्रसिद्धे, स्वरूपविरोधेनान्यथा नेतुं शक्याभ्यां श्रुतिप्रत्यक्षाभ्यां निर्णयानौचित्यं 'प्रकाशादिवच्चावैशेष्य'मित्यादिसूत्रद्वयेनाशङ्क्य, 'उभयव्यपदेशात्त्वहिकुण्डलव'दिति सूत्रे द्विविधश्रुत्यनुरोधेनाहिकुण्डलन्याय आदृतः। शास्त्रस्यास्य श्रौतत्वात्। लौकिकदृष्टान्तस्याप्रयोजकत्वात्। ततश्च यथा सर्पं ऋजुरनेकाकारः कुण्डलश्च भवति तथा ब्रह्म स्वेच्छया सर्वाकारं भवतीति न स्वरूपविरोधोऽपीति निर्धारितम्।**

---

दिवत्, अवैशेष्यं ब्रह्मणो निर्विशेषत्वम्। नन्वेवं सति पूर्वोक्तदर्शनानुमानयोः श्रुतिस्मृत्योश्च विरोधस्य का गतिः?तत्राह **प्रकाशश्च कर्मण्यभ्यासा**दिति। कर्मणि तपःप्रणिधानादिरूपे, अभ्यासात् पौनःपुन्यात्। कर्माभ्यासमनुरुध्य प्रकाशः स्वरूपसाक्षात्त्वं, तथा च यद्येकवारमाविर्भवेदेकधैवाविर्भवेच्चेत्तदनुरोधेन विशेषाः अङ्गीक्रियेरन्नपि, न तु तथा। किन्तु तत्तद्भक्ततत्तत्समयाद्यनुरोधेन नानाविधः साक्षात्कारः, पूर्वोक्तश्रुत्यादिकं च तदनुरोधेनान्यथा नेतुं शक्यमित्यर्थः। तदेतदभिसन्धाय द्वितीयं सूत्रमाह **अतोऽनन्तेन तथा हि लिङ्गम्।** अतः कर्माभ्यासजदर्शनानुरोधेनोक्तश्रुतिस्मृत्योरन्यथा नेतुं शक्यत्वात्। अनन्तेनानन्तरूपेणाविर्भावः। तथा तेन प्रकारेण, हि निश्चयेन, 'यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय' इति स्मृतेर्लिङ्गशरीरमेव तत्, न तु तद् ब्रह्म, तस्मान्निर्विशेषमेवेति प्राप्तम्। सिद्धान्तसूत्रार्थस्तु मूल एवोक्तः। एतदग्रे 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति सूत्रम्। तदर्थमग्रे दर्शयिष्यामः। तदग्रे 'पूर्ववद्वा' 'प्रतिषेधाच्चे'ति सूत्रद्वयम्। तदर्थस्तु—वा अथवा, पूर्ववत्। 'अरूपव'दिति पञ्चसूत्र्या यथा प्रतिपादितं तथाङ्गीकार्यम्। प्रपञ्चविलक्षणं निधर्मकं सर्वाकारं ब्रह्मैव, न तु धर्माः ब्रह्मणः सकाशाद् भिन्नाभिन्ना अङ्गीकार्याः। अतो ब्रह्मणि प्रपञ्चधर्मा औपचारिका एवेति। अत्रोपपत्तिस्तु 'आह च तन्मात्रं दर्शयति च' 'अथोऽपि स्मर्यते' इति सूत्राभ्यामुक्ता। अन्यामप्याह **प्रतिषेधाच्चे**ति। 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय'मिति श्रुतावेकमेवेत्यवधारणेनैव द्वितीयाभावे सिद्धे पुनरद्वितीयमिति पदेन पर्यवसानतो धर्मस्यैव निषेधात्। चकारेणैक्षतेति वचनात्तदुत्पत्तिः। एकविज्ञानेन सर्वविज्ञानोपक्रमश्च सङ्गृहीतः। अम्बुवत्सूत्रेण तूपाधिपक्षस्यैव दूषणम्। तेन पूर्वं निर्विशेषमेव ब्रह्म इच्छारूपेण, ततो धर्मरूपेण, ततः प्रपञ्चरूपेणाविर्भवतीति न ब्रह्मण्युभयलिङ्गत्वविरोध इति सिद्धमिति। इदं उत्पत्त्योपपत्त्या च विचारद्वयम्। तत्रोपपत्त्या निर्विशेषश्रुतीनां विरुद्धधर्माश्रयत्वे पर्यवसानं व्याससिद्धान्त इति तुशब्दोपबन्धादवगम्यते। उत्पत्त्या सविशेषश्रुतीनां सर्वाकारत्वेनाविर्भावान्निर्विशेषत्वे पर्यवसानमित्येकदेशिमतम्। श्रुतिविरोधाभावादुभयमपि सूत्रकारस्य सम्मतम्। तदुभयमपि लीलापरिकरस्य प्रपञ्चसृष्टेश्च स्वरूपनिर्णायकत्वेन सार्थकं भवति।

यत्तु—उभयव्यपदेशसूत्रं पूर्वपक्षत्वेनाहुः, तत्तु तुशब्दस्य सर्वत्र सिद्धान्तविरुद्धपक्षनिरासार्थत्वदर्शनादिह सिद्धान्तनिरासकत्वेन वदन्तः स्वचातुर्यद्योतनायैव तथाहुरिति दिक्। विशेषतस्तु भाष्यविभागे प्रतिविहितमिति नेह प्रपञ्च्यते। तस्माद्वास्तविकरूपाणि महिमानं च तादृशमेव वेदयन्तो वेदान्ता ब्रह्मपरा इति सिद्धम्। विद्यान्तरविचारश्च प्रसङ्गानुप्रसङ्गापतित इति च। तस्माच्छ्रुतिशिरसि निरुपधिरेव ब्रह्मणो महिमा प्रतिपाद्यत इति सूपपन्नम्।

इति वेदान्ततात्पर्यनिरूपणरूप आद्यो वादः।

---

तदेतत्सर्वं हृदि निधायाह विशेषत इत्यादि।

इत्येवं श्रीमदाचार्यचरणाब्जप्रसादतः।
आद्यं वादं निजकृतौ व्यावृणोत्पुरुषोत्तमः ॥ ४ ॥

॥ इति प्रहस्तविवृतौ वेदान्ततात्पर्यनिरूपणाख्याद्यो वादः ॥



## २. भ्रान्तशैवनिराकरणम् ।

अथेदं विचार्यते । अनन्तरूपस्य ब्रह्मणः सर्वाण्येव रूपाणि तुल्यानि, उतैकं मुख्यं, इतराणि गुणभूतानीति ।

तत्र केचिद्वस्तुतो ब्रह्म निराकारं मायया नानाकारं भवतीति तेषां तुल्यत्वे न्यूनाधिकभावे वा स्वरूपपराणां न कश्चिद्विशेष इति प्रतिपेदिरे ।

अपरे तु मायिकाकारेषु विष्णवाकारमुत्कृष्टमाहुः ।

इतरे तु शिवाकारम् ।

भेदवादिनस्तु ते ते, तस्य तस्यैव ब्रह्मत्वमन्यस्य जीवत्वमाहुः ।

वस्तुतस्तु, ब्रह्म त्रिगुणातीतं, मायानियामकमौपनिषदं, विरुद्धधर्माश्रयत्वाद्वस्तुत एव सर्वाकारं, कर्तृ चाकर्तृ च, अत एव सर्ववादानवसरमस्तसमस्तदोषं, अन्धहस्तिन्यायेन नानावादानुरोध्यपि लीलया तत्तदुपासकेषु तत्तत्फलदानार्थं[1] तेषु तेषु रूपेषु तरतमभावयुक्तमिति सिद्धान्तः ।

तत्रोपाधिपक्षनिरासेनैव मायापक्षस्य निरस्तत्वाद्भेदवादस्य च श्रुत्यनभिप्रेतत्वाद्रूपाणां तारतम्यादिकमेव विचार्यते । तत्र महामाहात्म्यमेव परं, इतरत्तु विभूतिरूपं, अन्यत्तु ततोऽपि न्यूनमिति महामहिमयुक्तत्वं कुत्रेति विचारणीयम् ।

---

२. भ्रान्तशैवनिराकरणम् ।

शिरोधृतकरोदितप्रथितमृत्युभीतित्वरा-
तिरोहितसुरोहिते पशुपतौ पराधावति ।
वृकं हतवतस्ततः कपटचाटुकारैर्बटु-
स्वरूपधरणे पटोर्भगवतस्त्वरायै नमः ॥ १ ॥

पूर्ववादेन ब्रह्मणो विरुद्धधर्माधारत्वमनन्ताकारत्वं च स्थापयित्वा तदाकारविषयकं विचारान्तरं कर्तुं प्रतिजानीते अथेत्यादि ।

भेदवादिन इति । चैतन्यभेदवादिनः ।

श्रुत्यनभिप्रेतत्वादिति । 'यश्चायं पृथिव्यां यश्चायमध्यात्म्यं शारीरोऽयमेव स योऽय'मित्यादिश्रुतौ सर्वत्र चैतन्यैक्यस्यैव प्रदर्शनादित्यर्थः ।

---

१ फलदानायेति खगछपाठः ।

तत्र शिवतत्त्वविवेके त्रयोदशे[1] श्लोकेऽप्ययदीक्षिताः—" ब्रह्मोपनिषदि तावत्–' अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति । नाभिर्हृदयं कण्ठं मूर्धा च । तत्र चतुष्पादं ब्रह्म विभाति । जागरिते ब्रह्मा, सुप्ते विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरं स आदित्यो विष्णुश्चेश्वरश्चे'[2]ति । ब्रह्मादिभ्यः परममक्षरशब्दं सर्वदेवात्मकं[3] तत्त्वान्तरं दर्शितम् । तस्यैव पुन'र्न तत्र देवा ऋषयः पितर ईशत ' इत्यनन्येश्वरत्वं, 'एको देवः सर्वभूतेषु गूढ' इत्यादिना सर्वान्तर्यामित्वं, सकलकर्म[4]फलप्रदत्वं च दर्शितम् । तापनीयोपनिषदि च–'अकारं ब्रह्माणं नाभौ उकारं विष्णुं हृदये, मकारं रुद्रं भ्रूमध्ये ' इति नाभिहृदयभ्रूमध्येष्वकारादि-मात्रात्रयवाच्यानां ब्रह्मविष्णुरुद्राणामुपासनाविधानानन्तरं ' ओङ्कारं सर्वेश्वरं द्वादशान्त ' इति समष्टिप्रणववाच्यं द्वादशान्तोपास्यं सर्वैश्वर्यशालितेभ्यः परं तत्त्वान्तरं दर्शितम् । मैत्रेयोपनिषदि च ' तमो वा इदमेकमास ' इत्यारभ्य ' तत्परेणेरितं विषमत्वं प्रयात्येतद्वै रजसो रूप'मित्यादिना तमोऽधिष्ठातुः परस्य सङ्कल्पेनाविद्याख्यस्य तमसो गुणविभागं निरूप्य, तस्य प्रागुक्ता अग्न्यास्तनवो ब्रह्मा रुद्रो विष्णुरित्यथ यो ह खलु वा वास्य राजसोंऽशो योयं ब्रह्माथ यो ह खलु वा वास्य तामसोंऽशो योऽयं रुद्रोऽथ यो ह खलु वा वास्य सात्त्विकोंऽशोऽसौ यो-ऽयं विष्णु'रिति, तमोऽधिष्ठातुः परस्य रजोगुणाद्युपहिता अंशभेदा ब्रह्मादय इति प्रतिपादनेन तेभ्यः परं तत्त्वान्तरं दर्शितम् । योगियाज्ञवल्क्येन प्रणवे तन्मात्रा-दैवतनिरूपणे ' अक्षरत्रयमेतत्तु कारणत्रयमिष्यते । त्रयाणां कारणं ब्रह्म भा-रूपं सर्वकारणम् । एकाक्षरं परं ज्योतिस्तदाहुः प्रणवं बुधाः । इति मात्रीय-देवताभ्य ' अहं ब्रह्मा च शर्वश्च जगतः कारणत्रयं ' इत्यादिभागवतपठितभ-गवद्वचनादिभिः कारणत्रयमिति प्रसिद्धेभ्यो गुणमूर्तिभ्यः परं प्रणवदैवतं त-त्त्वान्तरं स्फुटीकृतम् । भागवतविष्णुपुराणादिषु च–' सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादयो हरिविरञ्चिहरेति सञ्ज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ' ' ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तय ' इत्यादिवचनैर्मूर्तित्रयातीतं परं ब्रह्म विभावितम् । अपि

---

त्रयोदशे श्लोक इति । एतेनेतः प्रथमेषु श्लोकेषु न तथा प्रमेयमुपपादितम्, तेन

---

१ ' त्रयोदशे श्लोक ' इत्यधिकः पाठो मूलग्रन्थादर्शेषु यद्यपि नावलोक्यते, तथापि ग्रन्थकृद्भिरेव विवृत्यां विवृतश्चेति मूले निवेश्यते । २ विष्णुश्चेतीति खपाठः । ३ ' सर्ववेदात्मकमित्यपि पाठ ' इति गपुस्तके । ४ सर्व-कर्मेति गपाठः ।

च, जगत्कारणं ब्रह्म तावन्मायोपधिकचैतन्यमित्यविवादम् । ब्रह्मविष्णुरुद्रास्तु तदीयगुणविशेषोपाधिचैतन्यरूपा इत्युदाहृतं मैत्रेयोपनिषद्वाक्ये। ' सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्नाङ्कुरेष्वपि । गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी'ति तापनीयोपनिषदि, सकलपुराणादिषु चाविवादेन प्रतिपन्नम् । ततश्चोपाधिभेदे उपहितभेदस्यौचित्यात्, गुणमूर्तिभ्यः परं मायोपाधिकं जगत्कारणं ब्रह्मेति वज्रलेपायते । तस्य चोमासाहित्यमुक्तरूपं वपुश्च, 'उमासहायं परमेश्वरं प्रभुं ऋतं सत्यं परं ब्रह्मे'त्यादिकैवल्योपनिषदादिमन्त्रेभ्यः प्रतिपन्नम् । शिवशम्भुरुद्रेशानमहेश्वरमहादेवादिशब्दवाच्यत्वं चाथर्वशिरःशिखादिदृष्टप्रयोगनिर्वचनाभ्यां निर्णीतम् । न चोदाहृतोपनिषन्निकुरम्बप्रतिपाद्यो गुणी रुद्र इति शङ्कनीयम् । तत्र सर्वत्रापि विभूतिषु ब्रह्मनारायणयोरिव गुणरुद्रस्यापि पाठात् । न च तत्र विभूतिमध्याम्नातरुद्रपरः शब्दो गुणिरुद्रांशभूतरुद्रान्तरपरोऽस्त्विति वाच्यम् । ब्रह्मविष्णुसान्निध्याम्नातरुद्रशब्दस्य संहर्तृमूलपरत्वस्यौचित्यात् । ' यत्प्रायेण श्रूयते यच्च तत्तादृगवगम्यते ' इत्यादिन्यायात् । ननु तथापि कैवल्यादिमन्त्राणामुपासनापरत्वादारोपितविग्रहेणाप्युपासनोपपत्तेर्न परस्य वर्णितविग्रहसिद्धिरिति चेन्न । उपासनापरेभ्योऽप्यविरोधे देवताधिकरणन्यायेन प्रतीयमानार्थसिद्धेरनिवार्यत्वात् । न ' चापाणिपाद ' इति श्रुतिविरोधोऽस्तीति शङ्कनीयम् । एवं हि निर्गुणश्रुतिविरोधात्सत्यकामा-

---

तन्नोपक्षिप्यत इति बोधितम् । देवताधिकरणन्यायेनेति । समन्वयतृतीयपादे 'तदुपर्यपि च बादरायणः सम्भवाद्' इत्यत्र मनुष्याद्युपरिष्ठानां देवानामपि मोक्षशास्त्रेऽधिकार इति सिद्धान्तितम् । तत्र जैमिनिमते मन्त्रमय्येव सा न तु विग्रहवती । विग्रहवत्त्वेन यज्ञादिकरणे प्राप्ते इन्द्रादिभिरिज्यैर्दर्शादियागे ' ऐन्द्रेण दध्ना पयसा च को वा इन्द्र इज्येत ' तस्मान्मन्त्रमय्येव देवता । विग्रहनिरूपणं त्वर्थवाद इति पूर्वतन्त्रे नवमस्य प्रथमपादे व्यवस्थापितम् । तन्न युक्तम् । ' अहल्यायै जारः ' ' तस्य वज्रमादाय शीर्षाण्यच्छिनत् संवर्तमरुत्तीयेन ते वाचं रोचयते मरुत्त्य ' इत्यग्निवाक्यमिन्द्रं प्रति, ' स वज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गव ' इति लोकेऽपीन्द्रादयो यैर्दृष्टास्त ऋषय इदानीं सन्तीति मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवानां विग्रहो निश्चितः । न च तत्प्रतिषेधो दृश्यते । ' इन्द्रप्रजापतावेकाधिकशतं वर्षाणि ब्रह्मचर्यमुवासे'ति छान्दोग्ये श्रूयते । ' भृगुर्वै वारुणिः, वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मे'ति तैत्तिरीये श्रूयते । तेनास्ति देवानां मोक्षशा-

---

१ देवतेति खपाठः ।

दिगुणानामप्यनभ्युपगमापत्तिः । इष्टापत्तिरिति वदतां यथाध्यानार्थेऽपि सत्यकामादिगुणोपदेशो तद्गुण ईश्वरः सिध्यतीति व्यतिहाराधिकरणभाष्यविरोधः । मायाकल्पिता गुणास्तत्त्वतो निर्गुणत्वं न विघ्नन्तीति समाधानन्यायस्त्विहापि तुल्यः । यत्तु 'रूपोपन्यासाचे'ति सूत्रे विग्रहोपन्यासपरत्वेन सूत्रव्याख्यानानन्तरं ब्रह्मणो विग्रहाभावात्तद्व्याख्यानमयुक्तम्मन्यमानानां परेषामन्यथा व्याख्यानमुपन्यस्तं भाष्यकारैः—तु तन्मूलश्रुतौ निर्विशेषब्रह्मपरोपक्रमविरोधान्न विग्रहोपन्यासः सङ्गच्छते इत्यभिप्रायेण, उक्तश्च तैरेवान्यत्र विग्रहसद्भावः, स्यात् परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थमिति, सूत्रकारेण च 'भोगमात्रसाम्यलिङ्गाचे'त्यहङ्ग्रहोपासकानां ब्रह्मणश्च भोगसाम्यं वदता स्पष्टीकृतं, शरीरसापेक्षे वैषयिकानन्दे भोगशब्दप्रसिद्धेरित्यादिना । किञ्च शिवराघवसंवादे 'य एकः शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः । त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः । जाता सिसृक्षा तस्याथ वीक्ष्यात्मस्थं गुणत्रयम् । वेदत्रयमिदं ज्ञेयं गुणत्रयमिदं हि यत् । पृथक्कृत्यात्मनस्तद्धि तत्र सारं विभज्य च । दक्षिणेनासृजत्पुत्रं ब्रह्माणं वामतो हरिम् । पृष्ठदेशे महेशानं त्रीन्पुत्रानसृजत्प्रभुः' इति कथनाद्यद्यपि मूर्तित्रयतौल्यमुक्तं, तथापि सूतसंहितायां 'तप्तायःपिण्डवद्विप्रा रुद्रमूर्तिः परस्य तु । मूर्त्या तुल्यान्य-

---

त्रेऽधिकार इति । अनेन न्यायेनेत्यर्थः । यथा ध्यानेत्यादि सिध्यतीत्यन्ता शाङ्करभाष्य फक्किका । इहापीति । श्रुत्यन्तराद्यविरोधादुपासनापरेभ्योऽपि प्रतीयमानविग्रहस्वीकारेऽपीत्यर्थः । रूपोपन्यासाचेत्यादि, भाष्यकारैरित्यन्तम् । मुण्डके—'अक्षरात्परतः पर' इत्यनन्तरं 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'ति प्राणादीनां सृष्टिमुक्त्वा, 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे'ति भूतयोने रूपमुपन्यस्यते । न चैतद्रूपं शारीरस्य । अल्पमहिमत्वात् । नापि प्रधानस्य । तस्य सर्वभूतान्तरात्मत्वासम्भवात् । तस्मात्परमात्मन एवेदं रूपमिति व्याख्यानानन्तरं, 'यत्तद्दृश्यमग्राह्य'मित्युपक्रमानुरोधेनोक्तव्याख्यानमयुक्तम्मन्यमानानां व्याख्यानमुपन्यस्तम् । अयं रूपोपन्यासो हिरण्यगर्भस्यैव । परमेश्वरस्य तु प्रतिपत्तिहेतुरिति व्याख्येयं तदित्यर्थः । भोगमात्रसाम्यलिङ्गाचेति । फलाध्यायोपान्त्यमिदं सूत्रम् । अर्थस्तु—परमेश्वरस्य रूपं विकारावर्ति निर्विकारं नित्यमुक्तमित्यर्थः । तत्र हेतवः पूर्वसूत्रद्वये उक्ताः । तृतीयमत्राह भोगमात्रसाम्यलिङ्गादिति । परमेश्वरेण सह भोगमात्रमेव समानमुपासकानां श्रूयते तस्माल्लि-

मूर्तिभ्यो लक्षणैर्मुनिसत्तमाः । परतत्त्वस्य नामानि प्रत्यासत्त्या मुनीश्वराः । त्रिमूर्तीनां तु रुद्रस्याप्यभिधानानि सुव्रता ' इति शिवपुराणेऽपि संहाररुद्रमाहात्म्यं प्रस्तुत्य ' स एष भगवानीशस्तेजोराशिरनामयः । अनादिनिधनो धाता भूतसङ्कोचको विभुः । परमैश्वर्यसंयुक्तः परमेश्वरभावितः । तच्छक्त्याधिष्ठितः शश्वत्तच्चिह्नैरपि चिह्नितः । तन्नामनामस्तद्रूपस्तत्कार्यकारणक्षमः । तत्तुल्यव्यवहारश्च तदाज्ञापरिपालक ' इत्यादिभिश्च तस्य ब्रह्मनारायणाभ्यामाधिक्यमप्युक्तम् । एवं च यत्तैः प्रतिपादितः स तु भवत्येव परमेश्वरपरममहिमरूपः । अत एव ब्रह्मनारायणयोस्ततो निकर्षोऽपि । यस्तु क्वचित्क्वचिच्छ्रुतौ क्वचित्पुराणे च विष्णोरुत्कर्षः प्रतिपाद्यते, स तु प्रतर्दनाख्यायिकायामिन्द्रस्येव तदन्तर्यामिण्येव परे शिवे पर्यवस्यतीति स एव पर " इत्याहुः ।

तन्न विचारचारु । शिवतत्त्वविवेकलिखितैर्ब्रह्मोपनिषत्तापनीयमैत्रायणीयोपनिषद्योगियाज्ञवल्क्यश्रीभागवतविष्णुपुराणादिवाक्यैस्तत्सदृशैरपरैश्च यत्तुरीयं तत्त्वान्तरं मूर्तित्रयात्रीतं प्रतिपादितं, तन्न परं ब्रह्म, मायोपहितत्वाङ्गीकारात् । परब्रह्मणस्तथात्वाभावात् । तदुक्तेषु प्रमाणेषु मायानुपहितस्यैव परममहिमशालित्वेन परत्वप्रतिपादनात् । मायोपहितस्तु ब्रह्मणो नान्तरीयकः पादो देवतान्तररूप इति न तत्र निर्व्याजमहिम्नः सिद्धिः ।

तथा हि ब्रह्मोपनिषदि तावद्—'अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति,नाभिर्हृदयं कण्ठमूर्धे'ति । तत्र 'चतुष्पादं ब्रह्म विभाती'ति प्रकृत्य 'जागरितं स्वप्नं सुषुप्तं तुरीय'मिति चतुरः पादान्निर्दिश्य, किमवस्थारूपा एव ते पादा न्यूनातिरिक्ता इत्याकाङ्क्षायां ' जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्ते रुद्रस्तुरीयं परमक्षर'मिति तेषां पादानां स्वरूपं चोक्त्वा, ' स आदित्यः स विष्णुश्चेश्वरश्च स पुरुषः स प्राणः स जीवः सोऽग्निः स जाग्र'दित्यनेन त्रिभ्यस्तुरीयस्योत्कर्षमप्युक्त्वा ततोऽप्युत्कर्षाय चतुष्पादमात्रतावारणाय चाग्रे पठ्यते, ' तेषां मध्ये यत्परं ब्रह्म विभाति स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्वर्जितं न

---

ज्ञादित्यर्थः । प्रतर्दनाख्यायिकायामिति । कौशीतकिब्राह्मणे ' प्रतर्दनो ह वै दैवोदासि'रित्यादिकायामित्यर्थः ।

एवं शिवतत्त्वविवेककाराक्तमुपन्यस्य दूषयति तन्नेत्यादि । तत्र तदुपन्यस्तश्रुतिस्मृतीनां तदुक्तेऽर्थे प्रमाणाभासत्वं स्फुटीकर्तुं तत्प्रतिपाद्ये पर्यवसानाभावायाह तन्न परं ब्रह्मेत्यादि ।

---

१ मायोपपादितस्यैवेतीति कखपाठः ।

तत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता पिता न पिता स्नुषा न स्नुषा चाण्डालो न चाण्डालः पौल्कसः[1] न पौल्कसो[2] श्रमणो न श्रमणाः पशवो न पशवस्तापसो न तापस इत्येकमेव परं ब्रह्म विभाति। हृद्याकाशे तद्विज्ञानमाकाशं तत्सुषिरमाकाशं तद्वेद्य हृद्याकाशे यस्मिन्निदं सर्वं विचरति यस्मिन्निदं सर्वमोतप्रोतं संविभोः प्रजाः सन्त्यपरं न तत्र देवा ऋषयः पितर ईशते प्रतिबुद्धः सर्वविदि'तीति। अत्र तेषां पूर्वोक्तानां चतुर्णां पादानां मध्ये यत्परं ब्रह्म विभातीति ब्रह्मणश्चतुर्षु ब्रह्मादिषु पादेषु अनुसीवनमुक्त्वा तत्स्वरूपमाह 'स्वय'मित्यारभ्य 'वर्जित'मित्यन्तेन। अत्रामनस्केत्यन्तबहिरिन्द्रियशरीरनिषेधोत्तरं 'वर्जितं ने'त्यनेन मनआदिराहित्यनिषेधमुखेन तेषां प्रतिप्रसवात्परब्रह्मण्यप्राकृताकारो बोधितः। तथा च, यथास्मदादिषु सजातीयविजातीयस्वगतद्वैतं, तथा न ब्रह्मणि। किन्तु तत्तत्कार्यं स्वयमेव करोतीति त्रिविधद्वैतवर्जितं स्वयमेव सर्वाकारमित्यर्थः। न च 'अपाणिपादो जवनो गृहीते'ति श्रुत्यन्तरात्तत्तत्कार्यकर्तृत्वमस्तु, न तु तत्तद्रूपताऽपीति वाच्यम्। प्रतिप्रसवव्याकोपात्। न च श्रुत्यन्तरविरोधः। 'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्र'मित्यादिश्रुत्यन्तरानुरोधादुक्तश्रुतावपि कार्यद्वारा अप्राकृततत्समर्पणे बाधकाभावात्। अत एव परिच्छेदत्रयातीतत्वस्यापि सिद्धेः श्रोतेऽर्थे दृष्टविरोधस्याकिञ्चित्करत्वादिति प्रागेवोक्तम्। न च 'ज्योतिर्वर्जित'मित्येकं पदं, तथा सति तन्मात्रप्रतिप्रसवेऽपि ज्योतिःसाहित्यस्य द्वैतापादकत्वेन ज्योतीरूपमित्येवार्थो वाच्यः। तदाप्युत्तरवाक्यस्वारस्यात्सर्वाकारत्वस्यैव सिद्धेर्व्याख्यानक्लेशमात्रपर्यवसायात्। तदभेदपक्षस्यैव ज्यायस्त्वात्। अत एवोत्तरवाक्ये 'लोका न लोका' इत्यादिनोपलक्षणविधया लोकाद्यनुवादपूर्वकं लोकादीन्निषिध्य 'इत्येकमेव परं ब्रह्म विभाती'तिशब्देनोक्तप्रकारवाचिना एकस्यैव परब्रह्मणस्तत्तद्रूपेण विभानं वदति। यदि सर्वाभावमभिप्रेयान्न लोकादीननुवदेत्। निषेधप्रतियोगिवाचकपदाभ्यामेव चारितार्थ्यात्। इतिशब्दस्य हेत्वर्थकत्वेऽप्यनुवादकपदबलादुक्तार्थस्य पारिशेष्यादेव सिद्धेरप्रत्यूहत्वात्। नञः पर्युदासार्थकत्वे तु प्रकारवाचि-

---

बोधित इति। निषेधस्य लौकिके पर्यवसानाद्विरुद्धधर्माश्रयत्वेन सर्वाकारत्वेन च पूर्वोपपादितन्यायाद्बोधित इत्यर्थः। द्वितीयं प्रकारं विवृणोति तथा चेत्यादि। प्रथमं समर्थयति चक्षुष इत्यादि। अत एवेति। सर्वाकारत्वात् प्रकाशाश्रयन्यायेन धर्माणामभिन्नत्वाच्चेत्यर्थः। व्याख्यातुर्मतं दूषयति न च ज्योतिरित्यादि। पारिशेष्यादिति। प्रसक्ते

---

१ पुल्कस इति कखपाठः। २ पुल्कस इति कखपाठः।

त्वमेवेति शब्दस्य सिध्यतीति पूर्वोक्तस्यैवार्थस्य तेनापि सिद्धेः । एवं तत्स्वरूप-मुक्त्वा, तस्यैवान्तर्यामित्वमग्रे वक्तुं, उपासनादौ अभिव्यक्तिं चाभिप्रेत्य तस्य स्थानमाह 'हृद्याकाश'इत्यादि । आधारस्वरूपमाह 'तत्सुषिराकाश'मिति । कार्यमाह 'यस्मिन्निदं सं चे'त्यादि, 'यस्मिन्निदं सर्वमित्यादि' च । तथा च यत्सर्वस्य कारणं, यत्र विभोः स्वस्यैव प्रजाः अपरं अपरब्रह्मरूपा विभुनियम्याः सन्तीति सर्वप्रकारेणाधारं तदित्यर्थः । एवं सन्दर्भेण विरुद्धधर्माश्रयत्वेन महामहिमवत्त्वं समर्थितम् । तत एवं ज्ञातुरप्युत्कर्षमाह 'न तत्र देवा'इत्यादिना । एवं नारायणकृतटीकानुरोधिनः प्रसिद्धपाठस्यार्थ उक्तः । शङ्करानन्दकृतव्याख्यायां तु, 'तुरीयमक्षरं स आदित्यो ब्रह्मा विष्णुश्चेश्वरश्च, स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्विदितं यत्र लोका न लोका' इत्यादि पूर्ववदुक्त्वा, 'एकमेव तत्परं ब्रह्म विभाति निर्वाणं न तत्र देवा ऋषयः पितर ईशते प्रतिबुद्धः सर्वविद्ये'ति पाठः । तदापि 'ईश्वरश्चे'त्यन्तेन शबलं तौरीयं रूपं निरूप्याग्रे 'स्वय'-मित्यादिना 'विभाती'त्यन्तेन यदुच्यते तत्र चतुष्पादस्य परब्रह्मणः स्वरूपमसद्व्याख्यातरीतिकमेव सिध्यति । यद्यपि 'वर्जितं ने'त्यत्र विहितमिति पठितं, तथापि कथं विदितमित्याकाङ्क्षायां, 'यत्र लोका न लोका इत्याद्युत्तरवाक्यमेवान्वेतीति पूर्वोक्त एवार्थो यतः । यत्तु 'ज्योतिः प्रकाशस्वभावं विदितं स्वयं प्रकाशमान'मिति तेन व्याख्यातं, तदसङ्गतम् । ज्योतिःपदेनैवार्थादेव स्वयं प्रकाशमानत्वसिद्धेरन्यतरवैयर्थ्यपौनरुक्त्ययोरापत्तेः । एवमप्यनुवादकपदेभ्योऽनूद्य सङ्ग्राहकतत्पदाचोक्तरीतिकार्थाप्रतिरोधात् । बाधकाभावे तत्पदस्य सन्निहितपरामर्शिताया एवौचित्यात् । अन्यथा वैयर्थ्यापाताच्च । तस्मादुक्तोऽर्थो निष्प्रत्यूहः । एवं सति 'न तत्र देवा'इत्यादिनोक्तमनन्येश्वत्वमपि निर्व्याजं तत्रैव पर्यवस्यतीति । तथा 'एको देव' इत्यादिमन्त्रोक्तमन्तर्यामित्वं सर्वकर्मफलदातृत्वमपि तस्यैव, 'साक्षी चेता केवलो निर्गुणश्चे'ति निर्गुणपदात् । तदग्रे 'एको मनीषी निष्क्रियाणां बहूनामेकं सन्तं बहुधा यः करोति तमात्मस्थं येऽनुपश्यन्ति

नि[1]षेधे तत्संसर्गराहित्येन स्थितिः परिशेषस्तद्भावादित्यर्थः । अनूद्य सङ्ग्राहकतत्पदादिति । शङ्करानन्दीयव्याख्याने एकमेव तत्परं ब्रह्मे'ति पाठस्थात् तत्पदादित्यर्थः । ननु तत्पदेनामनस्कादिरूपमेव परामृश्यतामित्यत आह बाधकेत्यादि । तत्रैवेति । विरुद्धधर्माधारे सर्वाकारे ब्रह्मणि, न तु तुरीयपादे अक्षर इत्यर्थः ।

१ 'इदं ने'ति पदाभ्यामित्यर्थः ।

धीरास्तेषां शान्तिः शाश्वती नेतरेषां' इति पूर्णज्ञानक्रियाशक्तिमत्त्वं एकस्यापि तुरीयस्यावस्थात्रयसन्ततत्वेन बहुधाकरणं चोक्त्वा, तस्यानुग्रहेणात्मनि तद्दर्शने शाश्वतशान्तिरूपं फलमपि तत एवोक्तं भवति। तदग्रे जीवस्यावस्थात्रये स्थानभेदो मूर्धन्येवैक्यमित्यपि योगिनां तत्रैक्यानुभवायोक्त्वा, 'यतो वाच' इति मन्त्रेण तादृशानन्दं प्राप्यत्वेन जीवस्य सम्बन्धिनं वदता, ज्ञातुर्मुक्तिरपि तज्ज्ञानेनैवोक्तेति [1]ब्रह्मोपनिषदर्थसङ्ग्रहः। तेनात्र ( परं [2]ब्रह्मैव, प्रत्युतानन्येश्वरत्वादीनां प्रतिपादनेन निरुपाधिक एव परत्वस्य सिद्धत्वात्पादरूपस्य) तदभिमतस्य न परत्वप्रत्याशा।

एवमेव तापनीयेऽपि। प्रणवमात्रात्रयवाच्यानां ब्रह्मविष्णुरुद्राणां नाभिहृदयभ्रूमध्येष्वोङ्कारवाच्यस्य सर्वेश्वरस्य द्वादशान्ते चोपासनमुक्त्वा, 'सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमानन्दामृतरूपं प्रणवं षोडशान्त' इति प्रणववाच्यस्य नित्यानन्दाकारस्योपासनमुक्तम्। एवं च प्रणवमात्रासु पूर्वपूर्वस्योत्तरोत्तरस्मिन् लयात्तद्वाच्यानामपि तथैव लय इति नादतद्वाच्ययोरपि योऽसौ नियामकः सोऽयमित्युक्तम्। किञ्च, गोपथब्राह्मणे इन्द्रप्रश्नैः प्रजापतिना ओङ्कारो व्याख्यातः, तत्र 'ऋग्यजुःसामवेदेष्वेकाक्ष-

---

द्वादशान्ते इति। अकारोकारमकारवाच्यानां ब्रह्मविष्णुरुद्राणां स्थूलसूक्ष्मबीजसाक्षिभेदेन प्रत्येकं चतुर्विधत्वात्तेषां तादृशामैक्ये द्वादश भवन्ति तदन्त इत्यर्थः। **सप्तात्मानमित्यादि।** सप्तात्मानं, मूलरूपेण सप्तलोकात्मानं, ऐश्वर्यादिगुणस्वस्वरूपभेदेन वा सप्तात्मानम्। **चतुरात्मानम्।** चतुर्णां ब्रह्मविष्णुरुद्रसर्वेश्वराणामन्तरात्मानम्। **चतुःसप्तात्मानम्।** स्थूलादिचतुर्भेदेन सप्तलोकात्मानम्। ओतानुज्ञाविकल्पभेदेन चतुरात्मानम्। **आनन्दामृतरूपम्।** छान्दोग्योक्तभूमस्वरूपं निरवध्यानन्दात्मकम्। **प्रणवम्।** 'ओमित्येकाक्षरं ब्रह्मे'त्याद्युक्तनिष्कलप्रणवप्रतिपाद्यम्। **षोडशान्ते।** ओताद्याश्चत्वारस्त्रिविधैः स्थूलादिभिः सहिताः षोडश भवन्ति तेषामन्ते उपरि इत्यर्थः। **नादेत्यादि।** एतेनानिरुक्तत्वं स्मारितम्। सकलवाङ्मयबीजभूतस्य नादस्यापि लये तद्वाचकस्यान्यस्याभावात्। सकलनिष्कलविभागस्य प्रामाणिकत्वाय श्रुतिं प्रदर्शयन् सर्वोत्कृष्टमाहात्म्यवत्त्वमत्रैवेति बोधयति **किञ्चेत्यादि।**

---

१ 'तथा हि ब्रह्मोपनिषदी'त्यारभ्य 'इति ब्रह्मोपनिषदर्थसङ्ग्रह' इत्यन्तो भागो ग्रन्थकृद्भिः प्रणीते ब्रह्मोपनिषदर्थसङ्ग्रहे समासाद्यते। ब्रह्मोपनिषदर्थसङ्ग्रहस्तु 'पुष्टिभक्तिसुधा'ख्यायां मासिकपत्रिकायां तृतीयवर्षप्रथमाङ्के मुद्रित इति ततोऽवधेयमधिजिगमिषुभिः। २ एतन्मध्यस्थः पाठो न दृग्गोचरीभवति खछपुस्तके।

रोऽथर्ववेदेऽकारादिमात्राभिर्युक्त ' इत्युक्तम् । तेन निष्कलसकलभेदेन द्विविध ओङ्कारः, तत्र याज्ञवल्क्योदितदिशा निष्कलप्रणववाच्यो यः सोऽयमित्युक्तं भवति । एवं च ' सत्यं ज्ञानमनन्तं ब्रह्म ' 'अस्थूलमनण्वह्रस्व'मित्यादिभिरखण्डार्थैर्वेदान्तैर्यत् प्रतिपाद्यते, तदीदृशमेव सिध्यति । तेन निर्व्याजसर्वेश्वरत्वं ब्रह्मण्येव, नित्यानन्दाकार एव पर्यवस्यति; न तु तदभिमत इत्यवधेयम् ।

एवं मैत्रायणीयोपनिषद्यपि । मैत्रिशिष्यः शाकायन्यो वालखिल्यप्रजापतिसंवादमुपक्षिप्य, तन्मुखेन ध्येयस्य प्राणाख्यस्यात्मनः स्वरूपं ' यो ह वोपरिस्थः श्रूयते गुणेषु स वा एष शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्मानन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वे महिम्नि तिष्ठति, तेनेदं शरीरं चेतनवत्प्रतिष्ठापितं, प्रचोदयिता चैषोऽस्ये'त्युक्त्वा, ' स पुरुषसञ्ज्ञोंऽशेन शरीरे प्रविश्यावर्तत ' इति चोक्त्वा, ' अथ यो ह खलु वै तस्य सोंऽशोऽयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः, प्रजापतिर्विश्वाख्यस्तेनेदं शरीरं तथे 'त्युक्त्वा, ' प्रजापतिर्वा एकोऽग्रेतिष्ठत्स नारमते 'त्यादिना बह्वीनां प्रजानां तत्कृतानां सृष्टिं चोक्त्वा, ततः पूर्वोक्तरूपस्यात्मनोऽज्ञानात्क्षेत्रज्ञांशस्यास्मदादिशारीरस्य बन्ध इत्युक्त्वा, तन्निवृत्तिप्रकारं चोक्त्वा, चतुर्थप्रपाठके पुनर्वालखिल्यानां ' अग्निर्वायुरादित्यः कालोऽपः प्राणोऽन्नं ब्रह्मा रुद्रो-विष्णु 'रित्येकेऽन्यमभिध्यायन्त्येकेऽन्यं कतमः श्रेयः? सोऽस्माकं ब्रूही'तिप्रश्ने, ' ब्रह्मणो वा एता अग्र्यास्तनवः परस्यामृतस्याशरीरस्ये 'त्युक्त्वा, ' तस्यैव लोके प्रतिमोदतीह यो यस्यानुषक्त ' इत्येवं ह्याह । 'ब्रह्म खल्विदं वा व सर्व'-मित्यादिना तत्तत्तनूपासकस्य तत्तत्सालोक्यं कृत्स्नक्षये पूर्वोक्तपरमपुरुषैक्यं च फलमुक्त्वा, ततः पञ्चमे परब्रह्मणः सर्वात्मत्वादिरूपमहामाहात्म्यप्रतिपादनं कौत्सायनीस्तुतिमुखेन कृत्वा, ' ततस्तमो वा इदमग्र्य आसी'दित्यादिना तमोभवनं, ततः परप्रेरणेन वैषम्याद्रजस्तमस्तथैव सत्त्वं, तस्यापि रसश्रवणं तस्य योंऽशः स प्रतिपुरुषः क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाख्यः, अस्य प्रागुक्ता एतास्तनव ' इत्युक्त्वा, ततो भिन्नप्रक्रमेण ' अथ यो ह खलु वा वास्य तामसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं रुद्र एवमेवास्य राजसोंऽशो ब्रह्मा तथैव सात्त्विकोंऽशो विष्णुरि'त्युक्त्वा, ' स एष एक-

---

श्रुत्यन्तरार्थं निश्चाययितुमाह एवं मैत्रायणीयेत्यादि । ब्रह्मत्वविधानादिति ।

---

१ अत इति खगपाठः । २ इति वालखिल्यसम्बोधनम् ।

त्रिधाभूतोऽष्टधैकादशधा द्वादशधापरिमितधा चोद्भूत' इत्यादि माहात्म्यमस्योवाच। एवं सति याश्चतुर्थे प्रपाठके दश तनव उक्तास्ता गुणातीता एवेच्छामात्रेणैव प्रकटा इति ज्ञायते। तत्रैव तेषां ब्रह्मत्वविधानात्। याः पुनः पञ्चमे उक्तास्तास्तु सगुणस्य, प्रजापतिं तादृशमुपक्रम्य राजसादिपदोक्तिपूर्वकपाठात्। न चा'स्य प्रागुक्ता एतास्तनव' इति कथनात्तासामेतदभिन्नत्वं शङ्क्यम्। प्रागुक्तास्तनवोऽस्यैता इत्यन्वयात्। प्रतिपुरुषस्य मूलपुरुषभिन्नत्वेन तन्मूर्तीनामपि तथात्वस्यौचित्यात्। प्रकृतच्छेदे एतच्छब्दस्य वक्ष्यमाणपरामर्शिताया ज्योतिरधिकरणे सिद्धत्वेन चोद्यानवकाशाच्च। एवं सत्येते तामसरुद्रादयो यस्यांशास्तत्तत्त्वान्तरं सङ्कल्पाध्यवसायाभिमानलिङ्गम्[1]। प्रजापतिविश्वक्षेत्रज्ञादिनामकं प्रतिपुरुषरूपमेव सिध्यति। यस्याग्न्यास्तनवो अग्न्याद्या दशोक्ताः, कृत्स्नप्रलये तत्तनूपासकानां यदैक्यं, कौत्सायनीस्तुतौ यन्माहात्म्यं, यो गुणेषु परिष्ठोऽस्ति यस्यायं प्रजापतिः प्रतिपुरुषः स तु महापुरुषः अशरीरोऽमृतः सर्वात्मकोऽन्य[2] एवेति सिध्यति। अत एव षष्ठप्रपाठके दशमकण्डिकायां भोक्तृभोज्यविचारे 'यथाग्निर्वै देवानामन्नादः सोमोऽन्नमग्निनैवान्न[3]मित्येवंवि'दिति देवदृष्टान्तेनास्य भोक्तृत्वं प्रतिपाद्य, 'सोमसञ्ज्ञोऽयं भूतात्मा

---

तनूरुक्त्वा 'ब्रह्म खल्विदं वा व सर्व'मित्यनेन तासां ब्रह्मत्वविधानादित्यर्थः। अस्यैता इति सगुणा इत्यर्थः। ज्योतिरधिकरण इति। पूर्वतन्त्रे द्वितीयस्य द्वितीयपादे 'सञ्ज्ञा चोत्पत्तिसंयोगा'दित्यत्र चिन्तितम्। ज्योतिष्टोमं प्रकृत्य 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योति'रेतेन सहस्रदक्षिणेन यजेतेति श्रुतम्। तत्र किं प्रकृते ज्योतिष्टोमे सहस्रदक्षिणालक्षणो गुणो विधीयत उत कर्मान्तरं विधीयत इति संशयः। तत्र प्रकरणप्रमाणात् ज्योतिष्टोमानुवादेन गुणविधिरयमिति प्राप्ते उच्यते, नायं गुणविधिः। अथेत्यनेन प्रकरणविच्छेदात्। न च एष इत्येतच्छब्दानुपपत्तिः। तस्य सन्निहितज्योतिःशब्देनान्वयात्। ज्योतिःशब्दोऽपि प्रकृतविच्छेदादुक्तमपरामृशन्नपूर्वसञ्ज्ञारूपत्वान्नूतनं कर्माभिधत्ते। अतो नूतनसञ्ज्ञया कर्मभेदः। तथैव विश्वज्योतिःसर्वज्योतिःशब्दयोरपि ज्ञेय इति सिद्धान्तः। तथात्रापीत्यर्थः। यथाग्निर्वा इति। 'यथाग्निर्वै देवानामन्नादः सोमोऽन्नमग्निनैवान्नमित्येवंवित्सोमसञ्ज्ञोऽयं भूतात्माग्निसञ्ज्ञोऽप्यव्यक्तमुखा' इति वचनात्पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्त इति यो हैवं वेद संन्यासी च योगी चात्मयाजी चेती'ति। अर्थस्तु—यथा देवानां मध्येऽग्निरन्नादोऽन्नस्य प्रसिद्धः। 'सोमोऽन्नमदनी-

---

१ अभिमाने लिङ्गमिति कपाठः। २ सर्वात्मको ह्येवेति खपाठः। ३ अत्तीति शेषः।

अग्निसञ्ज्ञोऽप्यव्यक्तमुखा' इत्यनेन भोक्तुरप्यस्य प्रकृतिव्यासत्वमुक्त्वा, 'वचनात्पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्ते' इत्यनेन चिदाभासत्वेनाग्निसञ्ज्ञस्यापि सङ्कल्पाभिमानलिङ्गत्वात्त्रिगुणस्य सोमसञ्ज्ञत्वेन भूतात्मनो भोज्यकोटौ निवेश उक्तः। तेन तद्दर्शिनः प्रजापतेरपि तथात्वमेव स्फोरितम् । ततस्त्रयोविंश्यां 'ओमित्येतदक्षरस्य यदग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसञ्ज्ञितं सर्वापरत्वाय तदेतदुपासीते'त्युक्त्वा, अस्यैव मूर्ध्नि स्थानेऽभ्यास उक्तो न शिवस्य। एवमेवान्त्यकण्डिकायां 'निष्कामाग्निहोत्रफलकथनेऽपि परमाकाशे सौरसौम्याग्नेयसात्त्विकमण्डलानि भित्त्वा शुद्धः सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुवं विष्णुसञ्ज्ञितं सर्वापरं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि तिष्ठमानं पश्ये'ति। अत्रोदाहरन्ति, 'रविमध्ये स्थितः सोमः सोममध्ये हुताशनः । तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः' इत्याद्युक्तम् । अत एव सप्तमप्रपाठकप्रान्तस्थे—'चाक्षुषः स्वप्नचारी च सुप्तः सुप्तात्परश्च यः। भेदाश्चैतेऽस्य चत्वार-

---

यमग्निनैवान्नं, अन्नादेन सहभूतमदनीय'मिति सिद्धं श्रुत्यन्तरे। 'अथ यत्किञ्चेदमार्द्रं तद्रेतसोऽसृजत तद्रसः सोम एतावद्वा इदमन्नं चान्नादश्च सोम एवान्नमग्निरन्नाद' इति। एवं देवेषु प्रतिपाद्य मनुष्येष्वतिदिशति, एवं वित् । वित् ज्ञानी, एवं देववदन्नसहभूतः। तथा च भोक्त्रग्नीषोमात्मकस्य जगत इत्यर्थः। तदुपपादयति सोमसञ्ज्ञोऽयं भूतात्माग्निसञ्ज्ञोऽप्यव्यक्तमुखा इति। अयं भूतात्मा केवलः प्राकृतः सोमसञ्ज्ञः, अन्नभूतः, इदृशोऽपि अव्यक्तं प्रधानं मुखं भोक्तृत्वादिप्रवृत्तिद्वारं यस्य, सोऽर्धदेशः, इति तादृशत्वादग्निसञ्ज्ञोऽपि भवति। तथा चात्राप्यन्नादयोः सहचारेणैकस्यैव भोग्यभोक्तृभाव इत्यर्थः। अत्र ज्ञापकमाह वचनात् पुरुषो हीत्यादि। हि निश्चयेन। पुरुष इति। अव्यक्तमुखेन त्रिगुणं भुङ्क्ते इति वचनाद्, भोग्यत्वेन भोक्तृत्वेन च व्यपदेशादित्यर्थः। एवं ज्ञाने फलमाह यो ह्येवं वेदेत्यादि। तदेतदुक्तं भोज्यकोटौ निवेश उक्तमित्यन्तेन। एतेन सिद्धमाह तेनेत्यादि। सर्वापरत्वायेति। सर्वमपरं यस्मादिति सर्वापरं, तस्य भावः सर्वापरत्वं, तस्मै मोक्षायेत्यर्थः। चाक्षुष इत्यादि। चाक्षुषः जाग्रद्भोक्ता दक्षिणाक्षिस्थितः विश्वः स्वप्नचारी स्वप्नभोक्ता तैजसः। सुप्तः सुषुप्तिसाक्षी। प्राज्ञः सुप्तात्परोऽवस्थात्रयरहितस्तुरीयः। एते च चत्वारोऽस्य परब्रह्मणो भेदाः। तेभ्यः पूर्वोक्तेभ्यस्त्रिभ्यस्तुर्यं महत्तरं उत्कृष्टतरम्। तत्र हेतुमाह त्रिष्वित्यादि। त्रिषु जाग्रदादिषु। एकपादेकांशं ब्रह्म। चरेत् चरति अनुगतं तिष्ठति। उत्तरे त्रिपादंशत्रयवत् चरत्यनुवर्तते। तस्माद्ब्रह्मांशाधिक्यात् तुरीयमुत्कृष्टमित्यर्थः। नन्वेवं विभागः कुत इत्याकाङ्क्षायां तत्प्र-

स्तेभ्यस्तुर्यं महत्तरम् । त्रिष्वेकपाच्चरेद् ब्रह्म त्रिपाच्चरति चोत्तरम् । सत्यानृतोपभोगार्थं द्वैतभावो महात्मनः ' इति मन्त्रद्वयेऽपि प्रथमेन त्रिभ्यस्तुर्यस्य महत्तरत्वमेवोक्तं न तु महत्तमत्वं, द्वितीयेन च त्रिपाद्ब्रह्मभोज्यत्वमेवोक्तम् । अतो द्वैतभावेऽपि शिवतत्त्वविवेकाभिमतस्य भोग्यकोटित्वात् ततः पैरस्य तद्भोक्तुर्ब्रह्मण एव पुरुषस्य तुरीयः परममहिमा इत्येव सिध्यतीत्युपनिषदर्थनिश्चयः ।

एवं योगियाज्ञवल्क्येऽपि । प्रणवमात्रीयदेवताकथनोत्तरं यद्ब्रह्मोक्तं, ' तदेवाक्षरं परं ज्योतिस्तदाहुः प्रणवं बुधा ' इत्यनेनैकाक्षरदेवतारूपमुक्तं ' तस्यापि विचारः प्रथमाध्याय एव कृतः । तत्र पूर्वं हैरण्यगर्भादिपञ्चरात्रान्तान्सप्तसिद्धान्तानुक्त्वा, तेषु 'प्रत्येकं नव नवधोच्यते' इति यत्त्रिषष्टिभेदः सकल इति प्रतिपाद्योच्यते, 'बौष्कले एकमात्रस्तु ओङ्कारः समुदाहृतः । ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम्' इति । तत एतद्विवृणोति, 'एवं त्रिषष्टिभेदस्तु सिद्धान्तेषु प्रकीर्तितः । स्थूलभेदस्तथोङ्कारश्चतुःषष्टिस्तु निष्कलः । अक्षरं तं विजानीया'दिति निष्कलस्याक्षर-

---

योजकमाह सत्येति । सत्यं प्राणादिरूपं, चिदात्मा च । अनृतं पराग्रूपं पृथिव्यादि । तयोरन्तर्यामिब्राह्मणे ' यस्य पृथिवी शरीर'मित्यारभ्य 'यस्यात्मा शरीर'मित्यन्तेनोक्तयोश्चिदचिच्छरीरयोरुपभोगार्थं महात्मनः परब्रह्मणो द्वैतिभावः । द्वैतं नानात्वमस्यास्तीति द्वैती, तद्भावः । तथा च तदर्थमयं विभाग इति सर्वोपनिषद इत्यर्थः ।

एवं तदुपन्यस्तश्रुतीनामाभासत्वमुपपत्तिपूर्वकं दर्शितम् । अतः परं स्मृतीनामप्याभासत्वमुक्तरीत्या प्रदर्शयति एवं योगीत्यादि । एकाक्षरदेवतारूपमिति, न मात्रादेवतारूपमित्यर्थः । हैरण्यगर्भादीति । 'हिरण्यगर्भैः कपिलैरपान्तरतमैरपि । सनत्कुमारब्रह्मिष्ठैस्तथा पाशुपतैरपि । पञ्चरात्रैश्च इत्येतैः सिद्धान्तैश्चापि सप्तभिः' इति । नवनवधेति । त्रिमात्रत्रिब्रह्मत्र्यक्षरभेदेनाद्ये, त्रिप्रज्ञत्रिगुणत्रिकालेति द्वितीये, त्रिमुखत्रिदैवत्यत्रिप्रयोजनेति तृतीये, त्रिकालत्रिलिङ्गत्रिसञ्ज्ञेति तुरीये, त्रिस्थानत्रिपदत्रिसञ्ज्ञेति पञ्चमे, अवस्थानत्रिभोक्तृत्रिभोज्येति षष्ठे, आत्मा त्रिस्वभावत्रिव्यूहेति सप्तमे, एवमेतदुद्दिश्य व्याख्यायत इत्यर्थः । सिद्धान्तभेदेषु नानाप्रकारेण निरूपणे हेतुमाह स्थूलभेदस्तथेति । स्थूलभेद ओङ्कारस्तेनैव प्रकारेण वर्तते । अतस्तस्यैकैकांशमादायर्षिभिस्तथा प्रकीर्तित इत्यर्थः। तमिति, वा स्थूलसि-

---

१ तत्परस्येति खपाठः । २ वाधुले इति खघछपाठः ।

त्वमुक्त्वा, 'स्थूलं चाक्षरसञ्ज्ञित'मित्यप्युक्त्वा, वाच्यवाचकाभेदविवक्षया, 'अस्थूलं चाह्रस्वं च अदीर्घमप्लुताप्लुतम्। न लोहितं न कृष्णं च सर्ववर्णविवर्जितम्। इन्द्रियैरिन्द्रियार्थैश्च तत्त्वैश्चैव विवर्जितम्। ध्रुवं च शाश्वतं नित्यमचलं लयवर्जितम्। अक्षरं अजरं चैव अनुत्पन्नमनाशि च। सर्वमात्राविनिर्मुक्तमानन्दं ब्रह्म निष्कलम्। अघोषमव्यञ्जनमस्वरं च यत् अकण्ठताल्व्यमनासिकं च यत्। अरेफजातस्वरमोष्ठवर्जितं तदक्षरं न क्षरते स्वयम्भुवः। ओङ्कारं विपुलमचिन्त्यमप्रमेयं सूक्ष्माधारं ध्रुवमचलं शिवं पुराणम्। तद्विष्णोः मुखपङ्कजात्प्रसूतं देहान्ते मनसि च यत्स्थितिं करोति'। एवं चात्र सन्दर्भे व्याख्येयसार्धपद्यमध्ये यद्गीतावाक्यमुक्तं, तेन तत्प्रतिपाद्ये आनन्दरूपे निष्कले परब्रह्मणि कृष्णे मनः स्थितिं निष्कलः प्रणवः करोतीति लभ्यते। तेन सकल एतदंशभूतेऽर्धमात्रावाच्येऽन्ततः करोतीति फलति। तथा सति तुरीयादप्युत्कृष्टमेतदेव याज्ञवल्क्येन सर्वज्ञतमेन प्रतिपाद्यत इति स एव पूर्वोक्तोऽर्थोऽत्रापि सिध्यति।

---

द्धान्तोक्ते। तर्हि स्थूलभेद ओङ्कारः किंपर इत्याकाङ्क्षायामाह स्थूलमित्यादि। तथा च तेष्वप्यक्षरमेवोच्यते। 'ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभि'रिति न्यायात्। न तु तत्रापि क्षरं निरूप्यत इत्यर्थः। वाच्यवाचकाभेदविवक्षयेत्यस्य क्त्वान्तद्वयेनान्वयः। अस्थूलं चेत्यारभ्य निष्कलमित्यन्तेन वाच्यस्वरूपमुक्तम्। अप्लुताप्लुतमिति। अप्लुतस्वरेण आप्लुतं व्याप्तं नेत्यर्थः। तत्त्वैरिति। इन्द्रियेन्द्रियार्थमूलभूतैः प्रकृतिपुरुषमहदहङ्कारपञ्चमात्रापञ्चभूतदशेन्द्रियमनःसत्त्वादिगुणैः। अचलं कूटस्थम्। लयवर्जितम्। लीयते कार्श्यमनेनेति लयो वृद्धिस्तद्रहितम्। अक्षरं विपरिणामरहितम्। अजरमिति अपक्षयरहितम्। अघोषमित्यनेन वाचकस्वरूपमुच्यते। यथा लौकिकार्थधर्मा वाच्ये न सन्ति तथा लौकिकशब्दधर्मा वाचकेऽपि न सन्तीत्यभेदविवक्षाप्रयोजकसाम्यबोधनार्थम्। अघोषमिति, नादभिन्नम्। अरेफजातस्वरमिति, रेफजातस्वरा मूर्धन्यास्तद्भिन्नम्। स्वयम्भुव इति। ब्रह्मणः चतुर्मुखान्न सरते न निवर्तते। शब्दब्रह्मात्मकत्वात्तदात्मकः स इति भावः। तदुत्पादकं तत्फलं चाह ओङ्कारमित्यादिना। पदेति, लुप्तविभक्तिकं पदमित्यर्थः। 'देहान्तःस्थं मनसि च यत् स्थितिं करोती'ति पाठे तु व्याप्तिरुच्यते। सिद्धमाह एवं चेत्यादि। पूर्वोऽर्थ इति। गोपथब्राह्मणोक्तदिशा सत्यज्ञानानन्तानन्दात्मकः।

---

१ शब्दानां त्रिक्षणावस्थायित्वात्, ताल्व्यादिजन्यत्वेनानित्यता स्यादतो 'अकण्ठे' त्युक्तम्। २ मनसः स्थितिं करोतीति खगछपाठः।

एवमेव श्रीभागवतेऽपि, 'जन्माद्यस्ये'त्याद्ये पद्ये 'यन्निरस्तकुहकं सत्यं परं'ध्येयमुक्तम्। द्वितीये च कल्याणदायकं 'वास्तवं वेद्यं वस्त्वि' त्युक्त्वा, उत्तरार्धे ईश्वरत्वेनोक्तं, तदेवाग्रे नैमिषेयैः प्रकारभेदेन पृष्टं, तदा सूतो'मुनयः साधुपृष्टोऽहं भवद्भिर्लोकमङ्गलम्। यत्कृतः कृष्णसम्प्रश्नो येनात्मा सुप्रसीदति' इति कथयन् सूचितवान्। ततो 'वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यत' इत्युक्त्वा, तस्य भगवतः श्रवणादिकं विधाय, तमेव चाग्रे 'सत्त्वं रजस्तम' इति श्लोके गुणत्रयमूर्त्यतीतं परमपुरुषमुक्त्वा, ततो 'वासुदेवपरा वेदा वासुदेवपरा मखाः। वासुदेवपरा योगाः वासुदेवपराः क्रियाः। वासुदेवपरं ज्ञानं वासुदेवपरं तपः। वासुदेवपरो धर्मो वासुदेवपरा गतिः' इत्येतैः पद्यैर्वेदादीनां तत्परत्वं चोक्त्वा, 'स एवेदं ससर्जाग्रे भगवानात्ममायया। सदसद्रूपया चासौ गुणमय्यागुणो विभुः' इति स्रष्टृत्वं जन्मादिपद्योक्तमुपसंहृतवान्। ततस्तृतीयाध्याये 'जगृहे पौरुषं रूपम्' इत्यादिना नानावतारबीजपुरुषरूपग्रहणं चोक्त्वा अवतारांश्चोक्त्वा, 'एते चांशकला पुंसः' इत्यनेनावताराणां प्रस्तुतपुरुषांशमुक्त्वा, तस्मात्परमाह 'कृष्णस्तु भगवान् स्वयम्' इति। एवं च 'रामकृष्णाविति भुवो भगवानहरद्भर'मित्यत्रोक्तः कृष्णावतार एव। तथा 'वृष्णीनां वासुदेवोऽस्मि' 'वासुदेवो भगवताम्' इत्यत्र विभूतिषु गणितोऽपीति। अत एवात्र पूर्वपक्षनिरासकस्तुशब्दः। तत्रापि विभूतिमान्वक्तान्य इति चतुर्व्यूहातिरिक्त एव सः। एतदेवाग्रे भीष्ममुक्तौ स्फुटीकृतम्। 'कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः। आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत्। सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले। सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये' इति कृष्णस्यात्मत्वनिष्कलत्वब्रह्मत्वज्ञापनेन। एवमेव शुकादिवाक्येष्वग्रे द्वितीयादिस्कन्धेषु प्रपञ्चितम्।

तथैव विष्णुपुराणेऽपि, 'अविकाराय शुद्धाय नित्याय परमात्मने। सदैकरूपरूपाय विष्णवे सर्वजिष्णवे' इति नमस्कृत्य, 'नमो हिरण्यगर्भाय

---

इममेवार्थं श्रीभागवतेऽप्यतिदिशति एवमेवेत्यादि। द्वितीये इति। 'धर्मः प्रोज्झितकैतवोऽत्रे'ति श्लोके। सूचितवानिति। पृष्टस्य ब्रह्मत्वं सूचितवानित्यर्थः। तस्मात्परमाहेति। एतेन तृतीयवाद उपपादनीयमर्थमिह सङ्क्षेपतः सूचितवानित्यर्थः। भगवतामिति। चतुर्णां व्यूहानाम्। तत्रापीति। गीतायामेकादशस्कन्धे चेत्यर्थः।

विष्णुपुराणेऽप्यतिदिशति तथैवेति। एवमेकैकस्य चतुर्भेदत्वेन त्रिधेत्यर्थः। सम्प्रवर्त

हरये शङ्कराय च । वासुदेवाय शान्ताय सर्वस्थित्यन्तकारिणे ' इति तदवतार-मपि नत्वा, पुराणं प्रक्रम्याग्रे पृथुराज्यप्रसङ्गे–' चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ । प्रलयं च करोत्यन्ते चतुर्भेदो जनार्दनः ' इत्येकैकावतारस्य गुणमूर्तेश्चतुर्भेदान्प्रपञ्च्य, ' सर्गस्थित्यन्तकालेषु त्रिधैवं सम्प्रवर्तते । गुणप्र-वृत्त्याः परमं पदं तस्यागुणं महत् । यच्च ज्ञानमयं व्यापि स्वसंवेद्यमनौपमम् । चतुःप्रकारं तदपि स्वरूपं परमात्मनः ' इति तस्यापि भेदचतुष्टयं प्रतिज्ञाय, ' साधनालम्बनं ज्ञानं मुक्तये योगिनो हि यत् । स भेदः प्रथमस्तस्य ज्ञानभू-तस्य वै मुने । युञ्जतः क्लेशमुक्त्यर्थं यत्साध्यं ब्रह्मयोगिनः । तदालम्बनवि-ज्ञानं द्वितीयोंऽशो महामते । उभयोस्तु विभागेन साध्यसाधनयोर्हि यत् । विज्ञानमद्वैतमयं तद्भागोऽन्यो मयोदितः । ज्ञानत्रयस्य चैतस्य[1] विशेषो यो महामते । तन्निराकरणद्वारं दर्शितात्मस्वरूपतः । निर्व्यापारमनाख्येयं व्याप्ति-मात्रमनौपमम् । आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् । प्रशान्तमभयं शुद्धं दुर्विभाव्यमसंश्रितम् । विष्णोर्ज्ञानमयं प्रोक्तं तज्ज्ञानं परमं पदम् ' इति तान् व्याख्याय, तदनन्तरं ' एवम्प्रकारमानेन नित्यं व्यापकमक्षयम् । समस्तहे-यरहितं विष्णवाख्यं परमं पदम् । तद्ब्रह्म परमं योगी यतो नावर्तते गतः । अपु-ण्यपुण्योपरमे क्षीणक्लेशोऽतिनिर्मलः' इति पञ्चमं विष्णवाख्यं परं ब्रह्म ततोऽप्य-तिरिक्तमुक्त्वा, एतस्य ब्रह्मणोऽमूर्तमूर्तेऽक्षरक्षरस्वरूपे उक्त्वा, तयोः स्वरूपं च—' अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगद् ' इत्युक्त्वा, तत ' एकदेशस्थि-तस्येन्दो[2]र्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तदेतदखिलं जगत् । तत्राप्यासन्नदूरत्वाद्बहुत्वस्वल्पतामयः । ज्योत्स्नाभेदोऽस्ति तच्छक्तेस्तद्वन्मै-

त इति सम्बन्धः । साधनालम्बनमिति । साधनं मोक्षोपायभूतमुपासनादि, तद् आलम्बनं वि-षयत्वेन जनकं यस्य तत्तथा, मोक्षसाधनविषयकमित्यर्थः । युञ्जत इति, योगं कुर्वतः; आर-ब्धयोगस्येत्यर्थः । विभाग इति सप्तमी । अद्वैतमयमिति । साध्याहङ्ग्रहात्मकम् । चतुर्थस्य स्वरूपमाह ज्ञानत्रयेत्यादिश्लोकत्रयेण । दर्शितात्मस्वरूपत इति भावप्रधानो निर्देश इत्य-र्थः । दर्शितात्मस्वरूपत्वादित्यर्थः । विष्णोर्ज्ञानमयमिति, मुख्यं तस्य स्वरूपम् । तथा च दर्शितजीवात्मस्वरूपत्वात् साधनसाध्यग्रहमहङ्ग्रहं च निराकृत्यापोह्य निर्व्यापारादिविशेषणकं यद्भगवद्विषयं ज्ञानं तच्चतुर्थमित्यर्थः । पञ्चममिति । पूर्वोक्तसाक्षात्कारात्मकज्ञानस्य विषयत्वेन रूपेणायं विद्यत इति तथात्वात्पञ्चममित्यर्थः । अमूर्तमूर्तयोर्मायिकत्वनिराकरणायाह तयोः

१ चैतन्यमिति छपाठः । २ स्थितस्याग्नेरिति खछपाठः ।

त्रेय विद्यत' इत्युक्त्वा, ब्रह्मादीनां कारणभूतानां जगदपेक्षया नैकट्यायोक्तं 'ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः' इति, ततो जगन्नित्यत्वं चोक्त्वा, मूर्तरूपेषु त्रिष्वपि विष्णुमूर्तिरुत्कृष्टेत्यप्युक्त्वा, 'क्षराक्षरमयो विष्णुर्बिभर्त्य-खिलमीश्वरः। पुरुषोऽव्याकृतमयं भूषणास्त्रस्वरूपतः' इति रूपद्वयात्मकत्वा-दिकमुक्तम्।

एवं सत्यत्रेदं सिध्यति। तापनीये स्थूलसूक्ष्मबीजसाक्षिभेदेन चतुरात्मानो ये ब्रह्मादय उक्तास्ते विमृष्टाः सन्त एवं द्वादश भवन्ति। 'तदन्ते निविष्टो यस्तुरीयं[2] ओतानुज्ञात्रनुज्ञाविकल्पभेदेन चतुर्धोक्तः। सोऽपि विमृष्ट एवंरूपेण भवति। ततोऽत्रापि तेन सह षोडश भवन्ति' इति तदन्ते यदुपासनोक्ता, सोऽयं निष्कलप्रणववाच्यो निष्कलोऽत्र 'विष्णवाख्यं परमं पदं तद्ब्रह्म परम'मि-त्युक्तः। तेन तापनीयोक्तमुपबृंहितम्। ततो 'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्त-मेव च' इत्यादिना मैत्रायणीयोपनिषदुक्तमुपबृंहितम्। तत्र हि षष्ठे प्रपाठके 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यं तद्ब्रह्म यद्ब्रह्म तज्ज्योतिर्यज्ज्योतिः स आदित्य' इत्यादिना निष्कलप्रणवात्मकत्वं, ततो मात्रारूपेण त्रेधा परिणामस्तासां सर्वत्रोतप्रोतत्वं प्रणवेनादित्यध्यानमु-क्तम्। पञ्चमे प्रपाठके ब्रह्मविष्णुरुद्राणां प्रजापतितनुत्वेन प्राधान्यमुक्तम्। तदुभयमेतेनोपबृंहितम्। उपासनाप्रकरणाभावात् प्रणववाच्यतात्र नोक्ता। आदित्यरूपता तु लक्ष्म्युत्पत्तिप्रसङ्गे 'पुनश्च पद्मादुद्भूता आदित्योऽभूद्यदा हरि-' रित्यनेनोक्तैवेति ज्ञेयम्। किञ्च, 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्।

---

स्वरूपमित्यादि। नैकट्यायोक्तमिति। गुणमूर्तित्वाय नोक्तम्। तथा सति प्रयोजनाभावा-त्प्रधानपदं न वदेदिति भावः। अव्याकृतमिति भिन्नं पदम्।

ब्रह्मादिभ्यस्तुरीयस्योत्कर्षो 'ब्रह्मविष्णिवति' श्लोकादेव सिद्ध उभयोः सम्मतश्चेति कि-मर्थमेतावदुपन्यस्तमित्याकाङ्क्षायां तत्प्रयोजनमाह एवं सतीत्यादि। उपबृंहितमिति। तथा च प्रयोजनान्तराभावेऽपि द्वादशान्तोपास्यमध्यमकक्षत्वबोधन इदमुपबृंहणमिति बोधयितुमेताव-दुपन्यस्तमित्यर्थः। नन्वत्र प्रणवविचाराभावात् कथं तापनीयोपबृंहणत्वमत आह उपासने-त्यादि। नन्वादित्यत्वाभावात्कथमस्य मैत्रायणीयोपबृंहणत्वमत आह आदित्येत्यादि। ननु मैत्रेयश्रुतौ[3] मूर्तस्यासत्त्वं बोधितं, अत्र तु ब्रह्मशक्त्यात्मकत्वमतो नोपबृंहणत्वमत आह किञ्चेत्यादि।

---

१ करणेति गपाठः। २ यस्तुरीयस्तोतेति खपाठः। ३ मैत्रश्रुताविति खपाठः।

आविर्भावतिरोभावजन्मनाशविकल्पवद् ' इत्यनेनासत्यपदस्य सत्यसदृशत्वे पर्यवसानं, न तु मिथ्यात्वे, इत्यपि बोधितम् । इदं तु प्रथमेंऽशे । एवमेव समासावपि वासुदेवपदनिरुक्त्या परब्रह्मत्वं भगवत्येव स्फुटीकृतम् । तदग्रे व्युत्पाद्यम् । अतोऽत्रापि स एवार्थो यः पूर्वमुक्तः ।

एवमेव छान्दोग्येऽपि दहराधिकरणे । ' एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इति शरीरदोषनिषेधेन निर्दोषं पूर्णगुणं साकारमेव परं ब्रह्म प्रतिपादितम् । अन्यथा तेषां प्रसङ्गाभावात्तदुक्तिर्मुधैव स्यात् । एवं च त्वंतत्पदार्थाभेदकेवलतत्पदार्थनिष्ठभेदेन द्विविधेषु वेदान्तेषु ये तत्पदार्थनिष्ठाः ' सत्यं ज्ञानमनन्तं ब्रह्मे'ति ' अस्थूलमनण्वि'त्यादयस्तेष्वप्येतादृशमेव ब्रह्म प्रतिपाद्यत इति पूर्वमेवोपपादितम् ।

अत एव माध्यन्दिनानां बृहदारण्यकेऽपि निर्गुणमेव ब्रह्म प्रकृत्य, ' स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति । स न साधुना कर्मणा भूयान्नो वासाधुना कनीयानेष भूताधिपतिरेष लोकेश्वर एष लोकपालः स सेतुर्विधरण एषां लोकानामसम्भेदाये'ति नानाविधलीलाकरणेऽपि न्यूनाधिकभावाभावं वशित्वसर्वाधिपतित्वादिकं चोक्त्वा, ' आत्मन्येवात्मानं पश्ये'दिति दर्शनोपायं विधाय, तज्ज्ञानफलं चोक्त्वा, ' स वा एष महानज आत्मान्नादो वसुदान ' इति पृथक् तण्डुलमुष्टयङ्गीकारमात्रेण सुदामदारिद्र्यभञ्जकत्वेन लिङ्गेन भगवन्तं बोधयित्वा, ' स यो हैवमेतं महान्तमजमात्मानमन्नादं वसुदानं वेद विन्दते वस्वि'तितत्फलकथनेन तं निगमयित्वा, ततः ' स वा एष महानज आत्मा अजरोऽमरोऽभयोऽमृतो ब्रह्म अभयं वै जनक प्राप्नोषी'ति होवाच याज्ञवल्क्यः, सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्याये'त्येवं जरामरणादिरूपहेयशारीरधर्मराहित्यकथनपूर्वकं विद्यां

---

छान्दोग्यार्थः स्फुटः ।

एवं तुरीयादप्युत्कर्षं परस्मिन् दृढीकृत्य तस्य मुख्यं रूपं निश्चाययितुं पूर्वोक्तं मायासम्बन्धराहित्यं स्मारयति एवं चेत्यादि ।

श्रुत्यन्तरेऽप्ययमेवार्थ इत्याह अत एवेत्यादि । अत एव, उपासनाविषयस्य निर्गुणत्वादेव । तज्ज्ञानफलमिति । ' सर्वमेवं पश्यती'त्यादिनोक्तं सर्वदृश्यत्वसर्वात्मत्वसर्वपाप्मतरणविपापत्वादिकम् । बोधयित्वेति । 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' 'परोक्षं च मम प्रियं' इत्यादिश्रुतिस्मृतिभिर्भगवतः परोक्षप्रियत्वात्परोक्षेण बोधयित्वेत्यर्थः । द्वात्रिंशश्लोकोक्तं

समर्पयामास । जनकोऽपि प्राप्तविद्य'स्तस्मा आत्मानं समर्पयामासे'त्युक्तम् । तेनैव भगवज्ज्ञानमेव पूर्णा विद्येति सूचितम् । न च निर्गुणस्य निर्विशेषत्वेन तत्र वशित्वादिकं सगुणोपाधिमादायैव तस्य स्तुतौ पर्यवस्यतीति वाच्यम् । निर्गुणे स्वतो विरुद्धधर्माश्रयत्वस्य पूर्वमेव प्रसाधितत्वात् । सगुणपक्षेऽपि वशित्वादीनां शिवैकान्त्यगमकस्य बलीयसोऽदर्शनात् । ईशानादिशब्दैरनिर्णयस्याग्रे वक्ष्यमाणत्वात् ।

एवमेव काण्वेऽपि ज्ञेयम् ।

एवं च जगत्कारणत्वमपि निर्व्याजं तस्यैव सिध्यति । तैत्तिरीये सत्यज्ञानादिलक्षणमेव ब्रह्म प्रकृत्य, 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादिना सृष्टिकथनात् । तदिदं भाष्यविद्वन्मण्डनादिषु बहुधोपपादितमिति नात्र प्रपञ्च्यते ।

एवं काठकेऽपि । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वदे'ति प्रश्ने, 'सर्वे वेदा यत्पदमामनन्ति' इति सर्ववेदवेद्यत्वं, ततो मन्त्रान्तरे परत्वविरुद्धधर्माश्रयत्ववरणैकलभ्यत्व[3]मैताद्दशाप्राप्यत्वात्तत्वान्तर्यामित्वादिकमुक्त्वा, अग्रे 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति पदप्राप्तिमुक्त्वा, को विष्णुरित्याकाङ्क्षायां 'इन्द्रियेभ्यः परा ह्यर्था' इत्यारभ्य 'अव्यक्तात्पुरुषः परः' 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति' रिति तत्रैव परमफलरूपत्वमुच्यते ।

शाङ्करभाष्येऽपि 'विष्णोर्व्यापनशीलस्य ब्रह्मणः परमात्मनः, वासुदेवाख्यस्य प्रकृष्टं पदं स्थानं सत्त्वमित्येतत्पदमाप्नोति' इति, तथा 'यस्मान्नास्ति पुरुषाच्चिद्घनात्परं किञ्चिदपि वस्त्वन्तर'मित्याद्युक्त्वा, 'परा प्रकृष्टा गतिः,

---

बृहदारण्यकश्रुतेः सगुणपरत्वं शिवपरत्वं च न चेत्यादिनानूद्य दूषयति । निर्गुणेत्यादि ।

पाठभेदाभावादेनमेव निर्णयं काण्वेऽतिदिशति एवमिति ।

मायावादमनुसृत्य सगुणे जगत्कारणत्वं तेनाङ्गीकृतं तद्दूषयति एवं चेत्यादि ।

उक्तनिर्णयं दृढीकर्तुं परब्रह्मणो विष्णुत्वगमकं श्रुत्यन्तरमुपासनाप्रकरणरहितमाह एवं काठकेऽपीत्यादि ।

प्रतिवादिनः शङ्कराचार्यानुसारित्वात्तद्विरोधं बोधयितुं विष्णुत्वे तत्सम्मतिं दर्शयति शाङ्करेत्यादि ।

---

१ समाश्रयामासेति कपाठः । २ पूर्णविद्येति खपाठः । ३ लभ्यत्वात्ताद्दशाप्राप्यत्वेति गपाठः ।

यद् गत्वा न निवर्तन्ते ' इति व्याख्यायते । षष्ठ्यन्तवासुदेवपदेन विष्णुपदव्याख्यानात् पञ्चम्यन्तशङ्कापि नाश्यते । तेन परत्वं तत्रैवेति सकलसम्मतम् ।

एवं सति तापनीयोपनिषदि यत्प्रतिपादितं ' सैषा चित्रा सुदृढे'त्यादिना, तत्रायमर्थः । पूर्वतापनीये प्रजापतिना श्रीनृसिंहस्वरूपं बोधयित्वा, तन्मन्त्रराजोद्धारे कृते देवप्रश्नानुरोधेन तदङ्गमन्त्रेषु पूर्वं प्रणव उक्तः, विश्वादिचतुष्पादकब्रह्मवाचकतया व्याख्यातश्च । तत्र कालपरिच्छेद्यस्य सर्वस्य पादत्वश्रावणोत्तरं तुरीयपादस्य तदपरिच्छेद्यस्य शारीरस्य चोङ्कारत्वेन चतुष्पादब्रह्माभिन्नत्वश्रावणे स्वस्मिंस्तादृङ्माहात्म्यशून्यतानुभवजातसन्देहैर्देवैरुत्तरतापनीयारम्भे शारीरस्य ब्रह्माभेदनिश्चिचीषया प्रणवस्य शारीरवाचकताव्याख्यानाय प्रजापतिश्चोदितः ' अणोरणीयांसमिममात्मानमोङ्कारं व्याचक्ष्वे'ति । तदा प्रजापतिरारोपविभूतिव्यपदेशपक्षै[1]रभेदं बोधितवान्[2] । एतावानर्थः कण्डिका[3]ष्टकेन सिद्धः । तदिदं रहस्यं श्रुत्वा मुख्यवृत्त्या प्रणववाच्यं सिंहं परमेश्वरं

---

उत्तरतापनीये जगत्कर्तृत्वं सगुणस्य जगद्योनित्वं मायाया आपाततः प्रतिभाति । तेन सगुणेऽपि निर्व्याजकर्तृत्वस्य मायायां योनित्वस्य च भ्रमः स्यात्तं व्युदसितुं तदुपन्यस्ततापनीयश्रुत्यर्थं दर्शयन्नाह एवं सतीत्यादि । श्रुतिवाक्यं तु " देवा ह वै प्रजापतिमब्रुवन्निममेव नो भगवन्नोङ्कारमात्मानमुपदिशेति । तथेत्युपद्रष्टानुमन्तैष आत्मा नृसिंहश्चिद्रूप एवाविकारो ह्युपलब्धः सर्वस्य सर्वत्र न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यादिव स वा एष आत्मा पर एवैषैव सर्वं तथा हि प्रा[1]ज्ञे सैषाविद्या जगत्सर्वमात्मा परमात्मैव स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्नेवं ह्य[5]त्र न विजानात्यनुभूतेर्माया च तमोरूपानुभूतिस्तदेतज्जडमोहात्मकमनन्तं तुच्छमिदं रूपमस्याव्यञ्जिका नित्यनिवृत्तापि मूढैरात्मेव दृष्टास्य सत्त्वमसत्त्वं च दर्शयति सिद्धत्वासिद्धत्वाभ्यां स्वतन्त्रास्वतन्त्रत्वेन सैषा वटबीजसामान्यवदनेकवटशक्तिरेकैव,तद्यथा वटबीजसामान्यमेकमनेकान्स्वाव्यतिरिक्तान्वटान् स्वबीजानुत्पाद्य तत्र तत्र पूर्णं सन्तिष्ठत्येवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणाभिन्नाङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमप्यभिमन्ता जीवो नियतेश्वरः सर्वाहम्मानी हिरण्यगर्भस्त्रिरूप ईश्वरवद् व्यक्तचैतन्य " इत्यादि । आरोपविभूतिव्यपदेशपक्षैरिति । प्रथमखण्डे स्वात्मनो ब्रह्मणा सह प्रणवेनैकीकरणोपदेशे ' तस्मिन्निदं

---

१ ज्ञातेति गपाठः । २ पक्षैरबोधमिति खपाठः । ३ कण्डिकात्रिभेदेनेति कपाठः । ४ प्रज्ञेनैषेति मुद्रिततापनीयादर्शे । ५ ह्यत्रान्यत्रेति मुद्रिततापनीये ।

स्वात्मत्वेन जिज्ञासुभिर्देवैः प्रजापतिर्नवमखण्डे विज्ञापितः, तदा 'उपद्रष्टानुमन्ता' इत्यादिना अद्वात्मस्वरूपं सिंहं व्याकुर्वन् भेदे प्रतीतेर्भ्रमत्वाय तज्जनकाविद्यास्वरूपं 'तमोरूपे'त्युक्त्वा, जडमोहात्मकप्रपञ्चदर्शकत्वं वटबीजदृष्टान्तेन वैलक्षण्यं चोक्त्वा, 'जीवेशावाभासेन करोति माया चाविद्या स्वयमेव भवती'ति मायाविद्याख्ये रूपद्वये जलचन्द्रवत्परमेश्वरांशप्रवेशं, तेन कार्यजीवकार्येश्वरौ तत्कार्यौ निरूप्य परमात्मानं ततः परं बोधयिष्यन् सामर्थ्यं तस्याः पूर्वमाह 'सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्ना अङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता, तस्मादात्मन एव त्रैविध्यं योनित्वमपि' इति। तथा च स्वयं गुणभिन्नत्वात्त्रिरूपसगुणेश्वरकर्तृत्वम्। अङ्कुरेष्वपि गुणभिन्नत्वान्नानास्वभावजीवकर्तृत्वम्। तत्रापि ब्रह्मविष्णुशिवरूपमस्यामस्तीति मतुबर्थे निप्रत्ययात्तद्वतीत्वं चैतन्यदीप्तत्वादिति चैतन्यस्य तादृगाकारकत्वं गमयति। 'यस्मादियमाभासाधारभूता त्रिरूपवती, तस्मादाभास्य आत्मा त्रिविध' इति आत्माभासाभास्ययोः समानाकारत्वनियमात्। यस्माच्चेयं दर्शयित्र्येव, न तु जनयित्री; दर्शनं च जननाधीनं, तस्मादात्मैव पूर्वोक्तो योनिरिति। एवमात्मनः सर्वाकारत्वादिकं निरूप्य, तत्परत्वाय पादत्रयातिरिक्तं तुरीयमपि निरूपयितुं त्रैविध्यप्रसङ्गादन्यदप्याह 'अभिमन्ता जीवो नियन्तेश्वरः सर्वाहम्मानी हिरण्यगर्भ ईश्वरवद्व्यक्तचैतन्य' इत्यादि। अयमेव हिरण्यगर्भो मैत्रायणीये सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिप्रतिपुरुषशब्दाभ्यामुक्त इति। एतस्मात्परश्च पूर्वोक्तरीतिक एव सिद्ध इति निर्व्याजं सर्वकर्तृत्वादिकं तत्रैव सिध्यतीति दिक्। एतेनैव 'माया च तमोरूपे'त्यादिकां तापनीयश्रु-

---

त्रिशरीरमारोप्ये'त्यनेन भूतभवद्भविष्यता शारीरात्मन्यारोपकथनादारोपपक्षः। सप्तमखण्डे पुनः प्रश्ने अजत्वादिधर्मैरकारेण शारीरान्वेषणमुत्कृष्टत्वादिधर्मैरुकारेण सिंहाकर्षणं, महत्त्वादिधर्मैर्मकारेणोभयोः शारीरसिंहयोरेकीकरणं विधायाग्रे 'ब्रह्मैवेदं सर्व'मिति तादात्म्यविधानाद्विभूतिपक्षः। ततः 'कस्त्वमित्यहमिति होवाचैवमेवेदं सर्वं तस्मादहमिति सर्वाभिधानं तस्यादिरयमकारः स एव भवति सर्वं ह्ययमात्मा यं हि सर्वान्तर' इत्यादिना शारीरस्य सर्वान्तरत्वेन सर्वत्वं व्यपदिष्टमतोऽत्रैव खण्डे व्यपदेशपक्षोऽपि; तैरित्यर्थः। पूर्वमाहेति, 'रूपिणी'त्यन्तेनाहेत्यर्थः। चैतन्यदीप्तेति विशेषणं हेतुगर्भमित्याशयं प्रकटयति चैतन्यदीप्तत्वादिति। स्फुटमग्रे। अत्रैतदपि बोध्यम्। यो हि सगुणे ब्रह्मणि जगत्कारणत्वं वक्ति तदीयमते, कैश्चिज्ज-

---

१ प्रवेशनेन कार्येति खपाठः। २ आभासाभास्ययोरिति खगपाठः। ३ तस्य परत्वायेति खपाठः।

तिमुपन्यस्य जगतो मायामयत्वं मायायाश्च प्रकृतित्वेन योनित्वं प्रकटीकृतं पञ्चदशप्रकरण्यां चित्रदीपे, तदपि प्रत्यूढं ज्ञेयम् । सर्वमिदं तापनीयव्याख्यायामुपपादितमस्माभिः । एवं सति यत्र क्वचित्पुराणविशेषे मायोपाधिकस्य जगज्जनकत्वादिकमुच्यते तदनयैव दिशा विचारकाणां हृदि स्फुटीभवति, नाग्रहवादिनाम् । अतस्तेन चित्ताशुद्धिरेव वज्रलेपायते, न तु जगत्कारणं सगुणं ब्रह्मेति बुद्धिमद्भिरवधेयम् ।

एवं च 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं' इति कैवल्यशाखोपनिषदि यद् ध्येयत्वेनोक्तं स्वरूपं, तदपि सोपानपर्वरूपमेव, न तु प्राप्यब्रह्मरूपम् । 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिस्तमसः परस्ता'दित्युत्तरार्धे ध्येयगम्यैकबोधकतदादिपदाभावात् । ध्यानोत्तरं 'मुनिः सन् भूतयोनिं गच्छती'ति वचनव्यक्तेश्च । यत्तु त्रिंशे श्लोके 'भूतयोनिशब्दस्य यौगिकस्य सन्निहिते शिव एव वृत्तेस्तत्क्रतुन्यायात्तदुपासनया तत्प्राप्तेरेव

गत्कारणस्येश्वरस्य प्रतिबिम्बत्वं; जीवस्यापि प्रतिबिम्बत्वम् । अविद्यात्र मायाविद्याभेदेन द्विधा । तत्र शुद्धसत्वप्रधाना माया, तस्यां शुद्धचित्प्रतिबिम्ब ईश्वरः । मलिनसत्त्वप्रधाना अविद्या । तस्यां शुद्धचित्प्रतिबिम्बो जीवः । तथा ईश्वरस्यैवाविद्यायां प्रतिबिम्बो जीव इत्यपरम् । एवमन्येऽपि पक्षाः । तत्र ईश्वरस्य प्रतिबिम्बत्वे तापनीयश्रुतिः शरणम् । अन्यैस्तु मायावच्छिन्नं चैतन्यमीश्वरो बिम्बभूतः, जीवस्त्वविद्यावच्छिन्नं चैतन्यं मायावच्छिन्नस्य प्रतिबिम्बो वेत्यङ्गीक्रियते । तत्र प्रतिबिम्बेश्वरवादस्तु श्रुतिव्याख्यानेन प्रत्युक्तः । बिम्बेश्वरवादस्तु पूर्ववादे सदसदादिविकल्पेनोपाधिदूषणान्निरस्तो बोध्यः । सिद्धान्ते तु ब्रह्म साकारमेव सिद्धम् । माया च प्रथमकार्यरूपा सत्येव तया योंऽशोऽवच्छिद्यते तस्यां यो वा प्रतिबिम्बते स कार्येश्वरः । एवं कार्यजीवोऽपि बोध्यः । 'जीवो जीवेन निर्युक्तो गुणैश्चाशयसम्भवैः' इत्यादिभगवद्वाक्यात् । इदमग्रे उपयुज्यतेऽतोऽत्र प्रसङ्गादुक्तम् ।

अत्र पूर्वोक्तश्रुतिषु तुरीयादुत्कृष्टे परस्मिन् मैत्रायणीयनृसिंहतापनीययोर्विष्णुपदादिना, काठके बृहदारण्यके च लिङ्गेन विष्णुत्वं निष्कृष्यते । तेन सगुणस्य परमेश्वरत्वं निरस्यते । अतः परं रूपे विवादः । तदर्थं तस्योमासहायत्वादिरूपतां दूषयति एवं चेत्यादि । एतस्यार्थस्य त्रिंशच्छ्लोके प्रपञ्चात् त्रयोदशं परित्यज्य 'ननु भूतयोनिपदस्य शिवे योगस्त्रिंशश्लोकव्याख्याने व्युत्पादित इति न पूर्वोक्तं साधीय' इत्याशङ्कायां दूषयितुं तदुपक्षिपति यत्त्वित्यादि । तत्क्रतुन्यायादिति । 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन्लोके पुरुषो भवति

१ सर्वत्रप्रसिद्धोपदेशाधिकरणे ।

युक्ततया, तस्य शिवान्यवृत्तिकल्पनायोगाच्चे'त्यनेन परवाचकत्वं खण्डितम्। तदपि फल्गु। भूतयोन्यादिशब्दानां ब्रह्मणि द्विगुणीकृत्य वृत्तेः संनिहितशिववृत्त्ययोगात्। 'मुख्ये कार्यसम्प्रत्यप्रत्यय' इतिन्यायाच्च। उपास्यविभूतित्वात्पर्वरूपेण प्राप्तावपि तत्क्रतुन्यायाबाधाच्च। 'अमृतीभूत्वा मोक्षीभवती'ति जाबालश्रुतेश्च। गुणातीतकारणवादे भागत्यागलक्षणाया वाक्यभेदापादकत्वेनानङ्गीकारात्; 'तत्तेजोऽसृजते'त्यादितत्पदवत्। 'तत्त्वमसी'त्यत्रापि मूलभूतस-

---

तथेतः प्रेत्यभवती'तिवाक्योक्तन्यायादित्यर्थः। दूषयति तदपीत्यादि। वृत्तिद्वैगुण्यमनुपदं व्युत्पाद्यम्। तथा च शिवे वक्ष्यमाणरीत्या योगाभासत्वमेव न तु योगोऽपि। परस्मिंस्तु निरङ्कुशा योगरूढिरिति पूर्वोक्तमेव साधीय इत्यर्थः। सगुणब्रह्मवादमाश्रित्य 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तय' इति वाक्योक्ता मुक्तिर्या तेन साम्बादङ्गीकृता तद्दूषयति मुख्येत्यादि। मायोपहितस्यापरब्रह्मतायास्तापनयिमैत्रायणीयश्रुत्युपन्यासपूर्वकं स्थापितत्वात्ततो मुक्तिर्न वक्तुं शक्येति फलबलादपि भूतयोनिपदस्य शिवे वृत्तिर्न वक्तुं शक्येत्यतोऽपि तथेत्यर्थः। तदुक्तन्यायस्यान्यथासिद्धत्वं दर्शयति उपास्येत्यादि। तथा च यथा जराममर्याग्निहोत्रविद्यायां 'य एवं विद्वानुदगयने प्रमीयत' इत्यादिना देवपितृभावपूर्वकयथायथमादित्यचन्द्रमसः सायुज्यमुक्त्वा, अग्रे 'तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमान'मित्यनेन क्रमात्तत्तदुपास्यभावोत्तरं ब्रह्ममहिमप्राप्तिरुक्ता, तथात्रापीति न तत्क्रतुन्यायेन भूतयोनिपदस्य शिवे वृत्तिनिश्चय इत्यर्थः। साम्बस्य पर्वरूपतानिश्चायनान्यामाह अमृतीत्यादि। एवं स्वमतरीत्या तदुक्तं दूषयित्वा निर्विशेषब्रह्मज्ञानादेव मुक्तिरिति पक्षोक्ततत्पददृष्टान्तमाश्रित्य, तेन 'स ब्रह्मा स शिव' इत्यादौ तत्पदानां साम्बपरत्वं, 'ज्ञात्वा त'मित्यत्र तत्पदस्य निर्विशेषपरत्वमिति यदर्धजरतीयमङ्गीकृतं, तत्तस्य वादस्यानादरणीयत्वं दर्शयन् दूषयति गुणातीतेत्यादि। वाक्यभेदापादकत्वेनेति। 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति नवकृत्व उपदिष्टत्वादेतावदुपदेशवाक्यम्। तत्र एतदात्मनो भाव ऐतदात्म्यं, इदं परिदृश्यमानं जगद्, ऐतदात्म्यं, तत् सर्वं सत्यम्। कुत इत्याकाङ्क्षायामाह स आत्मा, स पूर्वं सच्छब्दनिर्दिष्ट आत्मा एतस्य स्वरूपम्। तथा च सर्वं सद्रूपत्वात्सत्यमित्यर्थः। तत्—सत् त्वमसि। अत्रापि 'स आत्मे'त्येव हेतुः। एवमत्र जीवजडात्मकस्य प्रपञ्चस्यानेन वाक्येन सदात्मकत्वमुपदिश्यते। तत्र 'ऐतदात्म्य'मित्यत्र शक्त्या सदात्मकत्वं प्रतिपाद्य, 'तत्त्वमसी'त्यत्र तत्पदवाच्यात्सतः सर्वज्ञत्वादिकं त्वंपदवाच्यादज्ञत्वादिकं त्यक्त्वा ताभ्यां पदाभ्यां केवलचिदात्मकवस्त्वैक्यं लक्ष्यत इत्येवं भागत्यागलक्षणाङ्गीकारे, 'ऐतदात्म्यमिदं सर्व'मित्यस्य सर्वज्ञत्वादिविशिष्टसदैक्यमर्थ'स्तत्त्वमसी'त्यत्र केवलचिदैक्य-

र्त्परामर्शकमेव तत्पदम् । तद्वदिहापि 'ज्ञात्वा त 'मित्यनेनैव 'स ब्रह्मे 'त्यादावपि भूतयोनिरेव तमोनियामकः परामृश्यते इति दिक् । अत एवाग्रे भूतयोनिः समस्तसाक्षी यः प्राप्यत्वेनोक्तः स क इत्याकाङ्क्षायां तं परिचाययिष्यन्, तस्य सर्वदेवतात्मकत्वं सर्वात्मकत्वं चाह—'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः । स एव सर्वं यद्भूतं यच्च भव्यं सनातन 'मिति । अत्र 'स एव विष्णु 'रित्येवकारेण सावधारणम् । विष्णुत्वकथनात्स एवाधिकारिविशेषानुग्रहाय शिवरूपं प्रकटयतीति सूचितम् । एतमेव फलतोऽपि निगमयति, 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ' इति । अत एवात्र तमित्युक्तम् । एतदेव पुनर्द्रढयति 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना ' इति । उपक्रमे-

---

मर्थ इत्यर्थभेदवाक्यभेदापत्तिरिति तत्प्रसञ्जकत्वेनेत्यर्थः । न चेष्टापत्तिः । ऐतदात्म्यादिपदत्रयस्य उपदेशवाक्यान्तःपातवैयर्थ्यापत्तेः । न चाष्टपदानामेव महावाक्यत्वमिति वाच्यम् । मानाभावात् । तावन्मात्रेण प्रतिज्ञोक्तज्ञानाभावादुपदेशवाक्यान्तःपातवैयर्थ्यप्रसङ्गाच्च । न च सर्वस्य मिथ्यात्वान्नोक्तज्ञानाभावाप्रसङ्ग इति वाच्यम् । मानाभावात् । 'तत्सत्य'मित्यस्योत्तरत्रैवान्वये नियामकानुपलम्भात् । न च वाचारम्भणवाक्यमेव नियामकमिति वाच्यम् । तत्रापि वाक्सङ्केतस्यैव विकारत्वबोधनेन तस्य स्वरूपाकारसत्यत्वावधिकत्वेनानियामकत्वात् । तस्माद्वाक्यभेदोऽत्र श्रुतिविरुद्ध एवेति निश्चयः । तदेतदुक्तं **वाक्यभेदापादकत्वेनेति** । एवं तदाश्रितदृष्टान्तार्धजरतीयं दूषयित्वा प्रकृतेऽतिदिशति **तद्वदि**त्यादि । ननु तत्र यथा वाक्यभेदापत्तिर्नियामिका तथात्र किमित्याकाङ्क्षायामाह **अत** इत्यादि । तथा च सर्वदेवात्मकत्वादिब्रह्मधर्मकथनमेव नियामकम् । अन्यथा एतावदुत्कर्षकथनं व्यर्थमेव स्यादित्यर्थः । ननु गुणातीतकारणवादे ब्रह्मविद्यायां ध्येयमोचकयोर्भेदानङ्गीकारादिह शिव एव भूतयोनिरस्तीत्याकाङ्क्षायां कश्चिद्विशेषमाह **अत्रे**त्यादि । एवकारस्य 'स एव सर्व'मित्यत्रापि सत्त्वान्नेदं विष्णुत्वगमकमित्यत आह **एवमेवे**त्यादि । 'मोक्षमिच्छेज्जनार्दन 'मिति स्मृतेरित्यर्थः । **तमिति**, लोकवेदप्रसिद्धमित्यर्थः । **एतदेवेति**, तच्छब्दोक्तस्य विष्णुत्वमेवेत्यर्थः । आत्मशब्दस्य विष्णौ विशिष्य शक्तत्वादित्यर्थः । ननु विष्णुरेव चेन्मोक्षदस्तदा तस्य शिवरूपत्वेन प्रतिपादने को हेतुरित्याशङ्कायामाह **उपक्रम** इत्यादि । अपरिग्रहायाम् । तथा चैतदर्थमेवं प्रतिपादनमित्यर्थः । अग्रे भगवद्भक्तिभवने गमकमाह **एतदि**त्यादि ।

---

१ इत आरभ्य मुद्रणावसरे मूलग्रन्थादर्शो ग्रन्थकर्तां श्रीमत्पुरुषोत्तमप्रभूणां निजकरकमलेनालिखितः समासादितः पुष्टिमार्गीयविद्वत्तेलीवालोपाख्यस्य मूलचन्द्रनामधेयस्य साहाय्येन । अतो मूलग्रन्थस्य पाठान्तरयोजना निष्प्रयोजनेति निश्चित्येतः परं परित्यज्यते ।

ऽपि आश्वलायनेन विज्ञापितः परमेष्ठी ' श्रद्धाभक्तिज्ञानयोगादवैहि ' इत्युक्त्वा तस्य दुर्लभत्वं ' न कर्मणा न प्रजया ' ' वेदान्तविज्ञाने 'ति मन्त्रद्वयेनोक्तवान् । तावता तस्य जिज्ञासाया अपरिपूर्तिमालोक्य ' विविक्तदेशे च सुखासनस्थ ' इत्यादिना अत्याश्रमस्थस्य शिवध्यानरूपं साधनमुपदिष्टवान् । ततः पूर्वोक्तरीतिकं ब्रह्मोपदिश्य आश्वलायनेन पापनिवृत्तिद्वारा परप्राप्तिसाधनस्य पृष्टत्वात्तदधिकारं हीनं ज्ञात्वा ततः प्रणवेनोपासनं पापदाहायोक्तवान् । ततो जीवस्वरूपं, तदाधारब्रह्मस्वरूपं, तेन स्वस्यैकज्ञाने बन्धाभावं तत्प्राप्तिं चोक्त्वा, उपसंहारे पुनरपि पापाभावाय शतरुद्रियाध्ययनमुक्त्वा, 'अत्याश्रमी सर्वदा सकृद्वा जपेद्,' 'अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् । तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते' इति संसारात् पृथगात्मज्ञानरूपमेव फलमाह; न तु परप्राप्तिरूपम् । अतो ज्ञायते आश्वलायनाधिकारमनुश्रुत्यैव पितामहेनेदमुक्तम् । आद्याधिकार एव चात्याश्रमः । तेषां ध्येयमपि पूर्वरूपमेवेति । एवं करणेऽग्रे भगवज्ज्ञानभक्त्यादिकं भवति च । एतदेवोपबृंहितं ब्राह्मे समाप्तिदशायां मायानुकीर्तनाध्याये ' तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशवे । सम्पूज्य तं जगन्नाथं वासुदेवाख्यमव्ययम् । ततो भुक्तिं च मुक्तिं च सम्प्राप्नोति द्विजोत्तमा' इति ।

यत्तु मानवपुराणीयषष्ठाध्यायोपबृंहणमुपन्यस्तं, तत्रापि ध्यानप्रकारं प्रदर्श्य ततोऽग्रे ' इत्थं ध्यात्वा मुनिः साक्षात्साक्षिणं तमसः परम् । भूतयोनिं पुरारातिं गच्छति स्वात्मविद्यये'ति प्राप्यस्वरूपं प्राप्तिं चोक्त्वा, पुरारातिपदेन सन्देहात् स क इत्याकाङ्क्षायां, तत्परिचायनाय ' योऽयं ध्येयतया प्रोक्तः शिवः साम्बः सनातनः । ब्रह्मविष्ण्वादिरूपेण विभक्त इव संस्थितः । स ब्रह्मा स शिव ' इति शबलमहाविभूतिकथनपूर्वकं सनातनस्य तस्य सर्वविभूतिरूपत्वमाह । तेन पुरारातिपदे, पुरा आसमन्ताद्रातिर्दानं यस्मा इत्यर्थो बोधितः । ततो ' ज्ञात्वा तं मृत्युमत्येति प्रत्यगात्मतयैव तु । अन्तरेण परिज्ञानं नान्यः पन्था विमुक्तये ' इत्युक्तम् । अतोऽप्यत्रास्मदुक्त एवार्थः स्पष्टो न तु तदुक्तः । ध्येयरूपकोटौ सनातनादिरूपत्वस्य श्रुताविह चानुक्तत्वात् । तन्मते

---

नन्वेतावतोऽर्थस्योपबृंहणमिदमसङ्गतं, सम्पूर्णोपबृंहणान्तरेण विरोधादित्याकाङ्क्षायां यत्त्वित्यादिना तदुपक्षिप्य तस्यार्थमाह तत्रापीत्यादि । तेन तस्य तत्प्रातिकूल्यमाह अत इति । प्रत्यगात्मत्वप्रकारकज्ञानपरिज्ञानाभ्यां मृत्यवतिक्रमविमुक्त्योः कथनादित्यर्थः । हेत्वन्तरमाह ध्येयेत्यादि ।

च ध्येयरूपस्यैव प्राप्यत्वात्ततः परस्य च निर्विशेषत्वादेतन्निरूपणवैयर्थ्यस्य दुर्वारत्वात् । एवमेव ब्रह्मगीतास्वपि बोध्यम् । यदि च ग्रहिलतयेदं नाद्रियते, तदापि प्रत्यगात्मतयैव धारणबलात्तत्प्राप्यस्याहङ्काराधिष्ठातृत्वमेव सिध्येन्न सगुणब्रह्मवाचकत्वमिति न किञ्चिदेतत् । तस्मादिहापि पूर्वोक्त एवार्थः सिध्यति । न च 'तथादिमध्यान्तविहीनमेक'मित्यादयस्तल्लक्षणसमर्पणे श्रुतिरूपवाक्यापेक्षया प्रबलास्तान् धर्मान् शिव एव नियच्छन्तोऽत्रैवं परब्रह्मत्वं गमयिष्यन्तीति वाच्यम् । ध्यानशेषत्वेन श्रुतानां तत्र तात्पर्याभावात्सतात्पर्यवाक्यापेक्षया निर्बलत्वात् । 'वाचं धेनुमुपासीते'त्यादिवत्कल्पितगुणैरपि ध्यानसिद्धेः । अतः पूर्वोक्त एवार्थः । 'ऋतं सत्य'मिति मन्त्रार्थस्त्वग्रे महोपनिषद्विचारे वाच्य इति न तेनापि तदभीष्टसिद्धिः । किञ्चायं मन्त्रः पूर्वतापनीयप्रथमोपनिषदि षष्ठे खण्डे नृकेसरिपरत्वेनोक्तः । 'ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहं कृष्णपिङ्गलमूर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितमुमापतिं पशुपतिं पिनाकिं ह्यमितद्युतिमीशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्यो वै यजुर्वेदवाच्यस्तं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति' इत्यादिकथनात् । तेन तु शिवाधिदैविकं रूपं नृकेसरीति तस्यैव व्यूहान्तरं शिवः । उमापि तस्यैव शक्तिः । तेनैव स्वव्यूहे शिवे स्थापितेति च सिध्यति । अत एवाग्रे सप्तशक्तिष्वम्बिकापि गणिता । 'श्रियं लक्ष्मीमौपलामम्बिकाङ्गां षष्ठीं च यामिन्द्रसेने'ति । एतेनापि सर्वदेवात्मकत्वं भगवत्येव सुसम्पन्नं भवति, न तु शिवे ।

एवं च शिवशम्भुरुद्रेशानमहेश्वरादिशब्दा अपि तत्रैव मुख्यवृत्त्या प्रव-

---

उपबृंहणान्तरस्यापि गतिमाह एवमिति । ननु 'ज्ञात्वा त'मित्युपबृंहणवाक्ये ज्ञानद्वयं फलद्वयं च नोच्यते, किन्तु पूर्वार्धोक्तमेवोत्तरार्धे स्तूयते, तेन श्रुतावपि ध्यानोक्तप्रकारकज्ञानोत्तरं क्रमेण निष्कृष्टचैतन्यैकतानस्य तस्य प्रत्यग्भावेन ज्ञानादपवर्ग एवोच्यत इत्याशङ्कायां तत्प्रकारेऽपि तदभिमतासिद्धिमाह यदीत्यादि । प्रतीचोऽहंवित्तिवेद्यत्वेन प्रत्यग्भावेन ज्ञेयस्याहङ्कारोपहितत्वमेव सेत्स्यतीति ध्येयकक्षातोऽपि हीनत्वमिति तादृशज्ञानाद्दूरतरापास्तोऽपवर्ग इत्यर्थः । सिद्धमाह तस्मादित्यादि । पूर्वोक्त इति । पूर्वरूपत्वम् । पूर्वतन्त्रानुसारेण प्रमाणं स्वरूपं गृहीत्वा प्रत्यवतिष्ठन्तं द्विचत्वारिंशोक्तयुक्त्या प्रतिवदिष्यन्नाह न चेत्यादि । एकत्रिंशश्लोकोक्तोऽर्थस्त्वग्रे दूष्य इत्याशयेनाह अत इत्यादि । अनेन मन्त्रेण तदभीष्टां सिद्धिं प्रकारान्तरेणाह किञ्चेत्यादि । लिङ्गमन्यथासिद्धं करोति उमेत्यादि ।

एवं रूपप्रसङ्गेन त्रिंशश्लोकस्यार्थं दूषयित्वा पुनस्त्रयोदशश्लोके शिवेशानादिपदानां मायोपहितपरमशिववाचकत्वं यदुक्तं, तदनुसन्धानं दूषयति एवं चेत्यादि ।

तेन्ते । ' नारायणः शिवो विष्णुः शङ्करः परमेश्वरः । एतैस्तु नामभिर्ब्रह्म परं प्रोक्तं सनातनं 'इति वाराहेणोपबृंहणाच्च । तदभिमते शिवे तु तत्सिद्धिनिबन्धनगौणवृत्त्यैव ज्ञेयाः। यथा 'यजमानः प्रस्तरः,' ' यजमानो वै पुरोडाश ' इत्यत्र प्रस्तरपुरोडाशौ यागसाधनत्वादिगुणेन कृत्वा यजमानशब्देन स्तूयेते, तथा शिवोऽपि साधकविशेषानुग्रहादिगुणेन कृत्वा शिवादिशब्दैः स्तूयत इति। सारूप्यनिबन्धना वा। यथा 'आदित्यो यूपः ' 'यजमानो यूपः' इत्यादावञ्जनजनिततेजस्वित्वोर्ध्वत्वादिसारूप्येणादित्ययजमानशब्दौ यूपे गौणीवृत्तिकौ, तथा अनन्तरूपस्य परब्रह्मणो यः शिवाकारस्तत्सरूपस्तुरीयस्य शिवस्याप्याकार इति तन्निबन्धनाः यथासम्भवमुन्नेयाः।

एवं सत्यथर्वशिखायां ध्येयनिर्धारणार्थं यदाम्नातं, ' ध्यायतेशानं प्रध्यापितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते, सर्वाणि चेन्द्रियाणि सहभूतैर्न कारणं, कारणानां विधाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्य ' इत्यारभ्य ' शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्ये'त्यन्तम् । तत्रापि योगरूढ्या परब्रह्मण्येव प्रवर्तमानस्येशानशब्दस्य ताच्छील्यार्थकचानशन्तस्य योगेन वास्तवनित्यनिरतिशयैश्वर्यपरत्वाद्रूढ्या परब्रह्मवाचित्वात्कल्याणार्थिभिरपि स एव ध्येय इति भावेनेशानशब्दो विशेष्यरूपनिर्देशार्थमुक्तः ।

न च ' शिवः शूली महेश्वरः' ' ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः ' इत्यादिकोशाच्छिव एव ईशानादिशब्दानां रूढत्वात्कथं परब्रह्मण्येव रूढत्वमिति शङ्क्यम् । वस्तुतस्तु सर्वेषां शब्दानां सर्वार्थवाचकत्वस्य महाभाष्याद्यभिमतत्वेन ब्रह्मवाचकत्वस्यैवाभिप्रेतत्वात् । प्रतिनियततावन्मात्रकार्यकरणेन भगवदनुकारितया व्यवहारार्थमेव च शक्तिसङ्कोचात्कोशेषु शिववाचकदर्शनेऽपि ब्रह्मवाचकत्वस्यापर्यवस्थेयत्वात् ।

---

चतुर्दशश्लोके ईशानशब्दस्य तदभिमते शिवे योगरूढत्वं व्यवस्थापितं, तदप्यसङ्गतमित्युपपादयितुमाह एवं सतीत्यादि ।

अत्र चोदयति न चेत्यादि । समाधत्ते वस्तुत इत्यादि । महाभाष्याद्यभिमतत्वेनेति । आदिपदेन वाक्यपदीयम् । महाभाष्ये पस्पशाह्निके तत्स्फुटम् । वाक्यपदीये तु 'सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः । तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते । सा नित्या सा महानात्मा तामाहुस्त्वतलादय ' इत्युक्तम् । तेन तथेत्यर्थः ।

मीमांसकादिमतेऽपि शब्दानां धर्मे एव शक्तत्वाद्, धर्मस्य च त्वतला-भिलाप्यत्वेन तयोश्च भावेऽनुशासनाद्, भावपदस्य च भूधातोः स्वार्थे घञि अनवस्थाभिया कृते निष्पत्तेः, भूधातोश्च सत्तायां व्याप्तौ च शक्तेरीशानाद्-योऽन्ये च घटादयः शब्दाः सतो व्यापकस्य च धर्मे प्रवर्तमानाः स्वनिर्वाहाय तद्धर्मपुरस्कृतं धर्मिणं सन्तं व्यापकमाक्षिपन्ति; तादृशश्च धर्मी परब्रह्मैव नेतरे, इत्यतोऽपि भगवद्वाचकत्वस्यापर्यवस्थेयत्वात् । 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुतिस्मृतिभिः शब्दमात्रस्य प्रणवविकृतित्वात् परम्परया प्रणवार्थपर्यवसितत्वेन च ब्रह्मवाचकत्वस्यैवौचित्याच्च । एवं सति ईशानः, ईश्वरः, सर्वेश्वरः, परमेश्वरः, महेश्वरः, शम्भुः, शिवः, शङ्करादयः पत्यधिपत्यादयश्च शब्दा मुख्यवृत्त्या योगेन च परे ब्रह्मण्येव प्रवर्तमानास्तत्रैव योगरूढाः । शिवे वान्यत्र वा तेषां यः प्रयोगः स तु भगवल्लीलासाधनव्यवहा-रार्थत्वेन शक्तिसङ्कोचेनैवाधुनिकानां पित्रादिकृतशिवेश्वरनरसिंहादिनामव-

---

मतान्तरेणाप्याह **मीमांसकेत्यादि** । **स्वनिर्वाहायेति**, स्वस्य व्यवहारक्षमत्वायेत्य-र्थः । **धर्मिणं सन्तं व्यापकमाक्षिपन्तीति** । स्वार्थेन धर्मेण तत्तद्व्यक्तिरूपं धर्मिणमा-क्षिपन्तो धर्मवाचकस्य भावशब्दस्य सत्ताव्यापकत्ववाचित्वभावमहिम्ना तं तं धर्मेण सन्तं व्यापकं स्वरसाद्बोधयन्तीत्यर्थः । न चेदमप्रयोजकं, शब्दान्तरव्युत्पत्तेस्त्वतल्व्युत्पत्त्यधी-नत्वेन, तद्व्युत्पत्तेश्च भावशब्दव्युत्पत्त्यधीनत्वेन विचारपूर्वकं व्युत्पन्नस्य पश्चाद्विचारकस्य च हृदि सत्ताव्यापकत्वे वैशिष्ट्यस्यावश्यं स्फूर्तेः । मीमांसकमते व्याकृतेर्नित्यत्वेनानुवृत्ता-कारत्वेन च तत्सत्त्वव्यापकत्वोपगमात्तन्मतेऽपि तादृग्वैशिष्ट्यस्फूर्त्यबाधाच्च । न चैवमविप्र-तिपत्त्या आकृतावेव तत्सिद्धिर्न तु व्यक्ताविति वाच्यम् । तन्मते व्युत्पत्तिदशायां घटा-दिपदानां घटत्वादौ शक्त्यवधारणेऽप्यालोचयितुमुद्यतस्य घटत्वं घटभाव इति स्फूर्तौ तद्गोचरीभूतशब्दस्वभावमहिम्ना तस्य घटादिधर्मतयैव भाननैयत्येन व्यक्तौ तत्सिद्धेरनिवार्य-त्वात् । तर्हि प्रत्यक्षविरोधस्य का गतिरित्यत आह **तादृशश्च धर्मीत्यादि** । तथा च तन्मतेऽपि शब्दः स्वरसेन ब्रह्मैव बोधयति । ततस्तेन व्यवहारासिद्धिमवगत्य तत्सिद्ध्यर्थं ब्रह्मस्वरूपं हस्तपिहितमिव कृत्वा ब्रह्मणः सकाशादाकृतिं पृथक्कृत्य तत्र शब्दसम्बन्धस्तैः कल्प्यते, तथा च लौकिकी व्यक्तिराक्षिप्यते तेन प्रत्यक्षाविरोधः परं न तु वस्तुतस्तथेति । शब्दमात्रस्य ब्रह्मवाचकत्वमपर्यवस्थेयमेवेत्यर्थः । वेदान्तविचारेणाह **सर्वे इत्यादि** । **शब्द-मात्रस्येत्यादि** । द्वादशस्कन्धे तु ओङ्कारं प्रस्तुत्य 'स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमा-त्मनः । स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्' इति वाक्याच्चथेत्यर्थः । 'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव यच्चान्यत्त्रिकालातीतं तदप्योङ्कार

त्सार्वभौमकृतशत्रुञ्जयमहाराजादिनामवद्, ऋषिकृतसर्वदमनादिनामवद्, यथाकथञ्चिद्योगरूढिच्छायामाश्रित्यैव भवतीति ज्ञेयः। अत एव हरिवंशे 'यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च । तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो विद्वांसः सर्वशास्त्रार्थविज्ञाः' इति शिवस्तुतिपरश्लोकेऽपि आद्यपदोक्तिपूर्वकमेव योगसमर्थनं, 'आदौ भवो ह्याद्य' इति। एवं च यथाऽब्जयोनौ 'जगत्त्रयान्तोदधिसम्प्लवादेर्नारायणस्योदरनाभिनालात् । विनिर्गतोऽजस्त्विति वाङ् न वै मृषा किं त्वीश्वर त्वन्न विनिर्गतो'स्मि इति योगाभासं, 'अजो वेधसि च स्मरे' इति कोशप्रसिद्धिं च शरणीकृत्य प्रवर्तमानोऽप्यजशब्दो देवेषु चामरशब्दो योगरूढिच्छायैकशरणोऽपि शास्त्रीयलौकिकयथोचितव्यवहारोपपादनक्षमः, तथेशानादिशब्दा अपि, इति तत्र श्रुत्याभासत्वमेव तेषाम्। एतेनैव समाख्यात्ववादिनोऽपि निरस्ततरा एव बोध्याः।

एवं च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमिति 'प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् । शीघ्रमन्थरगामित्वात्तथेह श्रुतिलिङ्गयोः' इति मीमांसकैर्यद्बलाबलं प्रतिपादितं तदपि मुख्यश्रुतावेव बलवत्त्वं समर्पयति न त्वाभासे । ततश्च पदान्तरसमभिव्याहाराद्यभावेऽपि यत्र केवलेश्वरादिशब्दा ब्रह्मप्रकरणमध्ये श्रूयन्ते, तत्र तद्वाचका एव। यत्र पुनः किञ्चिद्विवक्षया शिवे प्रयुक्तास्तत्र ते कल्पनोपदेशतया पर्यवस्यन्तो मध्वादिव-

---

एव सर्वं ह्येतद्ब्रह्मेति'माण्डूक्यादिश्रुतयोऽप्येतेन स्मारिता ज्ञेयाः । तेन दोषादिशब्दानां लौकिकानां च ब्रह्मवाचकत्वमेव । तदर्थेषु दोषत्वादिबुद्धयस्त्वविद्यावलिप्तानामेव न ब्रह्मविदाम् । 'विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इत्यादिवाक्यात् । अत उक्तार्थे कोऽपि न शङ्कालेश इति भावः । द्विचत्वारिंशच्छ्लोके यास्तेनोपपत्तय उक्तास्तास्तस्यैव प्रतिकूला भवन्ति वस्तुतत्त्वे ज्ञाते, इति बोधयितुं पदानां सहजां वृत्तिं निश्चित्य तच्छायारूपां वृत्तिं च शिवे दृष्टान्तेन साधयति शिव इत्यादि । पित्रादिकृतनाम्नां रूढिच्छायात्वम् । अग्रिमाणां योगच्छायात्वम् । तदग्रिमाणां योगरूढिच्छायात्वमिति विशेषः। तदुक्तामेव सम्मतिमीशेश्वरशब्दयोर्योगरूढच्छायात्वे प्रमाणत्वेन बोधयति अत एवेत्यादि । सिद्धमाह एवं चेत्यादि । योगाभासमिति । 'किं त्वीश्वर त्वन्न विनिर्गतोऽस्मी'त्यत्र काकुमनवधारितवत ईश्वरान्न जात इत्यर्थभानात्तथेत्यर्थः ।

द्विचत्वारिंशे श्लोके तेनोक्तां युक्तिं पर्यावर्तयति एवं चेत्यादि । शिवे तेषां श्रुत्याभासत्वसिद्धावित्यर्थः । अत्र योगाभासपक्षे सव्याजस्तदीय एव गुणः । श्रुत्याभासत्वपक्षे पदार्थस्वरूपमात्रोपस्थापकत्वाद्गुणसिद्ध्यभावः । कल्पनोपदेशपक्षे आरोपितो विवरणोक्तस-

ज्ज्ञेयाः । समा चासावाख्या समाख्या चेति विवरणाद्युक्तरीतिकव्युत्पत्त्या समाख्यारूपा वा, प्राज्ञ ईश्वर इतिवद् व्यपदिष्टा एव । अतो नित्यनिरतिशयैश्वर्यादिविश्रान्तिः परे ब्रह्मण्येवेति सिद्धम् । तेन 'शब्दादेव प्रमित' इत्यस्य विषयवाक्ये 'अङ्गुष्ठमात्रं पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्ये'त्यत्रापि परमेवोच्यते नतु शिवः। 'वेदादौ यः स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीलस्य यः परः स महेश्वर' इत्यादावपि ज्ञेयः।

एवं च त्रिचत्वारिंशे श्लोके 'नन्वीशानादिशब्दाना'मित्यादिनै तेषां श्रुतित्वेऽपि निस्तात्पर्यकत्वेन सतात्पर्यकवाक्यान्तरापेक्षया नैर्बल्यमाशङ्क्य 'विधेयान्तरवाक्यप्रवेशनं विने' त्यादिना 'आग्नेयमष्टाकपालं निर्वपती'त्याग्नेयपदृदृष्टान्तेन पुरोडाशविधिशेषस्याग्नेयदेवतात्वस्येव 'अङ्गुष्ठमात्रपुरुषः' 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति श्रुतिस्मृत्युपन्यासपूर्वकं तासु हृद्देशस्थितिविधानशेषतया ईषिधात्वर्थस्यैश्वर्यस्य निरवग्रहत्वं यत्स्थापितं, तदपि परब्रह्मण एव तादृशत्वे पर्यवस्यतीति दिक् ।

प्रकृतमनुसरामः । अथर्वशिखायां ओङ्कारप्रणवनाम्नोरेव निर्वचनं न तु शिवमहादेवादिनाम्नामितोऽप्यवधेयम् । एवं सति प्रध्यापितव्यमिति प्रकर्षेण ध्या-

---

माख्यापक्षः श्रुत्याभासपक्षानतिरिक्तः। व्यपदेशपक्षे भगवद्दत्तो भगवदीयो गुण इति भेदः। ब्रह्मप्रकरणीयेशानमहेश्वरशब्दयोः शिवे सव्याजत्वं बोधयन् परब्रह्मविषयत्वं स्थापयति तेनेत्यादि ।

उक्तप्रकरणस्थानामीशानादिशब्दानां निस्तात्पर्यकत्वेन दौर्बल्यमाशङ्क्य प्रकारविशेषेण शिवैश्वर्यगमकत्वं यत्तेन साधितं तत्प्रातिकूलयितुमाह एवं चेत्यादि । निस्तात्पर्यकत्वेनेति । 'ईशानाय स्थालीपाकः' 'प्राज्ञ ईश्वरस्तृतीयः पाद' इत्यादौ विधेयान्तरपरे शास्त्रे देवताविशेषादिसमर्पणमात्रार्थत्वात् तथात्वेनेत्यर्थः । सतात्पर्यकवाक्यान्तरापेक्षया नैर्बल्यमिति । 'भूतस्य जातः पतिरेक आसी' दित्यादिवाक्यानां हिरण्यगर्भादेर्भूतपतित्वादिविधौ तात्पर्येण तदपेक्षया नैर्बल्यमित्यर्थः । प्रवेशनमन्तः स्थितिः । तथा च तां विना केवलानां ईशानादिशब्दानां कोशातिरिक्ते क्वचिदपि प्रयोगादर्शनेऽपि । यथा व्याकरणातिरिक्ते आग्नेयपदस्य वाक्यान्तःपातित्वेऽपि तेनाग्नेर्देवतात्वं श्रुतिमर्यादयैव समर्प्यते न तु वाक्यमर्यादयेति देवतात्वे तात्पर्यं निर्बाधमेवमुक्तं श्रुतिस्मृत्यादिष्वपीति यदुक्तं, तदपि शिवे जन्यत्वादेः पूर्वस्थापितत्वान्निरवग्रहं परस्मिन्नेव विश्राम्यतीत्यर्थः ।

प्रासङ्गिकं परिहृत्य ईशानपदस्य शिवे योगरूढिबोधकत्वमथर्वशाखायां यत्तेनोक्तं चतुर्दशे श्लोके, तदेव दूषयितुं पुनरारभते प्रकृतमित्यादि । अवधेयमिति । तस्य मिथ्याभाषित्वं बोध्यमित्यर्थः । एवं सतीति । प्रसिद्ध्यातिविरोधेन तस्य मिथ्याभाषितत्वे

नार्हतया स्तुतिरप्यत्र परस्यैव सिध्यति, न तुरीयत्वेनाभिमतस्य शिवस्य। कुत इत्याकाङ्क्षायां पर्यायोक्तेन परब्रह्मणः परमोत्कर्षबोधनाय तदपेक्षया हीनत्वं तुरीयस्यापि जन्यत्वादिति बोधयितुं मात्रात्रयदेवैर्ब्रह्मविष्णुरुद्रैः सहैवेन्द्रशब्देन तं बोधयित्वा तस्याप्युत्पत्तिं दीपकसहोक्तिभ्यामाह 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते'इत्यादिना। अत्र 'त'इत्यनेन पूर्वपरामर्षात्पूर्वं च मात्रादेवानामेव प्रस्तुतत्वाद्यः पूर्वं चतुर्थ्यर्धमात्रात्मकलुसमकारवाच्यत्वेन संवर्तकाग्निशब्दाभ्यां कालाग्निरुद्ररूपः सर्वनियामकत्वेनोक्तः, 'ततः पुरुषदैवत्ये'ति तद्देवतात्मकपुरुषत्वेनोक्तः, स एव ब्रह्माद्यपेक्षया परमैश्वर्यादिन्द्रशब्देनात्रोक्तः। न चात्रेन्द्रशब्देन स्वर्पतिः शङ्क्यः। मात्रीयदेवताप्रस्तावे तस्य प्रवेशानौचित्यात्। प्रायःपाठेन तथानिर्णयात्। ब्रह्मविष्णुसन्निध्याम्नातरुद्रशब्दस्य गुणिरुद्रांशभूतरुद्रपरताप्रतिक्षेपेण गुणिरुद्रपरतायाः प्रायपाठानुगृहीतौचित्यबलेनैव त्रयोदशश्लोकविवरणे तैरपि स्वीकारात्। अत एवाग्रे 'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च। पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते' इत्यत्रेश्वरशब्देन तस्यैव ग्रहणम्। अत एव च मध्ये प्रणवपदं निरुच्य 'चतुर्धा व्यवस्थित' इति वेददेवयोनिर्धेयाश्चेत्युक्तम्। तेन चाथर्ववेदान्तानां चतुर्णां वेदानां तथैव पुरुषान्तानां चतुर्णां देवानां च योनि'रित्युक्तम्। अग्रे च शिवशब्दवाच्यस्याजन्यत्वाय 'पञ्चधा पञ्चदैवत्यः प्रणव' इत्युक्तम्। तस्मादस्यामप्युपनिषदि तदभिमतस्य तुरीयस्य जन्मशालित्वं वज्रलेपायते।

किञ्चैतदग्रे 'सर्वेभ्यो दुःखभयेभ्यः सन्धर्ता सन्तारयति तारणात्तानि सर्वाणि' इति 'विष्णुः सर्वाङ्गपति ब्रह्मा बृहत्सर्वकरणानि सम्प्रतिष्ठाप्य ध्याना'दिति ध्यानफलकथनमुखेन द्वौ ध्यातारावुक्त्वाग्रे, 'विष्णुर्मनसि नादान्ते परमात्मनि सम्प्रतिष्ठाप्य ध्येयमीशानं प्रध्यायन्तीशा वा सर्वमिदं प्रयुक्तं ब्रह्मविष्णुरुद्रेन्द्राः सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतानि करणं सर्वमैश्वर्यसंयुक्तं शिवमाकाशमध्ये ध्रुवस्थं,' 'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च। पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते,' 'तत्राधिकं क्षणमेकमास्थाय क्रतुशतस्यापि फलमाप्नोति कृत्स्नमोङ्कारगतं च, सर्वज्ञानेन योगध्यातानां शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य, एतमधीत्य द्विजो गर्भवासा-

---

निश्चिते सतीत्यर्थः। पर्यायोक्तदीपकसहोक्त्यलङ्काराणां लक्षणानि तु—'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्। नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ। वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः। मदेन भाति कलभः प्रतापेन महीपतिः। सहोक्त्या सहभावश्चेत् भासते जनरञ्जनः। दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह।' एवं ज्ञेयानीति।

न्मुच्यत' इति प्रसिद्ध इदानीं पाठः, स च नारायणेनात्रैवं व्याख्यातः। कश्चिद् ध्येय इति चतुर्थमुत्तरयति 'विष्णुर्मनसी'ति। नादान्ते शक्तिद्वारा शान्तौ ब्रह्मणि, प्रणवो हि पञ्चकूटात्मकः[1]। तत्र नादान्ते परमात्मस्थाने स्थाप्य ध्येयं ध्यानोचितमीशानं मनसि विष्णुं ध्यायन्ति—प्रध्यायन्तीत्यर्थः। एवं च विष्णुरित्यत्र छान्दसोऽमः स्वादेशः। तथा चास्मिन् पाठे तु कैवल्यमैत्रायणीयवत्कण्ठत एव विष्णुशब्दश्रुतेः तस्यैव परब्रह्मणः शिवाकारध्यानार्थं मन्त्रे पञ्चमस्थाने अग्रे च शिवपदप्रयोग इति पूर्वोक्त एवार्थोऽनेन दृढीक्रियते। तस्मादत्र न कापि विप्रतिपत्तिः।

यत्त्वथर्वशिखायां 'सर्वे देवाः संविशन्तीति विष्णुः,' लैङ्गादौ 'विष्णुः सर्वप्रवेशना'दिति कथनाद्विष्णुपदं शिवपरमित्युक्तं, तत्तु योगरूढा अपि शब्दा मुख्यवृत्त्या भगवदेकताना एवेति व्यवस्थापितत्वाच्छिवस्यात्र पञ्चमत्वाच्च तदभिमतासाधकत्वादेव दूषितं भवतीति दिक्। यद्यप्यलङ्काराणां केषाञ्चिदेव श्रुतिसिद्धत्वेन बहूनां चमत्काराधानाय कल्पनामात्रत्वमेवेति श्रुतिविचारे प्राङ्भिस्ते नाद्रियन्ते इति नैषामिह लेखनार्हत्वं; तथापि दूष्यग्रन्थे तदादरणादस्माभिरपि परप्रसिद्ध्या परो बोधनीय इति तद्दूषणग्रन्थे लिखिता इत्यदोषः।

एवं सति यदस्यामुपक्रमे प्रणवस्य तिसृणां मात्राणां रक्तशुक्लकृष्णवर्णत्वं त्रिमूर्तिदैवतत्वं चोक्त्वा, चतुर्थ्यर्धमात्रायाः सर्ववर्णत्वं पुरुषदैवत्यत्वं चोक्त्वा, 'स च पुरुषः पुरुषोत्तम एवे'त्यादिना केषाञ्चिन्मतमुपन्यस्तं, तदपि फल्गूकृतम्। तथा तत्समाधानमपीति बोध्यम्। एवं सत्येतदभिमतपाठेऽपि 'न करण'मित्यनेन यदजन्यत्वमुक्तं, तदपि परस्मिन्नेव पर्यवस्यति, न तुरीय इति सिध्यति। अतः शिवतत्त्वविवेके चतुर्दशश्लोकव्याख्याने यत्तैः प्रतिपादितं तदर्थान्तरसाधकत्वेन पर्यवस्यत् तस्यैव प्रतिकूलं भवतीति न

---

प्रसङ्गात्सप्तचत्वारिंशोक्तं दूषयितुमुपक्षिपति यत्त्वथर्वेत्यादि।

एवं प्रसङ्गात् षोडशश्लोकोक्ते वैष्णवमते तद्दूषकेऽप्पयदीक्षितमते चाप्रयोजकत्वं दर्शयति एवं सति यदित्यादि। तत्समाधानमपीति। 'स्वरूपाख्यानमेवात्र प्रत्याख्यानं प्रतीयते' इत्यादिकारिकाभिरुक्तमुपबृंहणविरोधेन तत्प्रत्याख्यानमित्यर्थः। एतत्फल्गूकरणं च शिखायाः शिवपरत्वेऽपि शिवस्य तदभिमतापेक्षयोत्कृष्टत्वमध्यमपक्षत्वादिस्थापनाद् बोध्यम्।

---

[1] ततोऽग्रे—'अकारोकारमकारबिन्दुनादात्मक' इत्यधिकमादर्शान्तरेषु।

विशिष्यास्माभिर्दूष्यते। एवं चाकाशमध्य इत्यनेनाप्यक्षरं ब्रह्मोच्यत इति ज्ञेयम्। समाप्ताथर्वशिखेति समाप्तिकथनमपि शिखाया बाह्यत्वाद् बाह्यप्रमेयवद्विद्यासमाप्तेरेव द्योतकं, न तु रहस्यविद्यासमाप्तेरपीत्यवधेयम्। अत एवात्र रहस्यपदानुक्तिः। अन्यथा तापनीयवदत्रापि रहस्यपदं वदेदेव। किं चात्र वाक्परिच्छेद्यमेवैश्वर्यं प्रतिपादितमिति तदपरिच्छेद्यं भगवन्माहात्म्यं स्फोरयितुं समाप्ताथर्वशिखेत्युच्यते, न तु ततोऽग्रे विद्यान्तरं नास्तीति स्फोरयितुम्। एवं च यद्यप्यत्रोपनिषदि वस्तुतो ब्रह्मैव प्रतिपाद्यं, तथापि शिवाकारं न तु पराकारमिति नात्रोत्कृष्टविद्यात्वमिति पूर्वतापनीयश्रुतौ तद्व्याख्यायां च सिध्यति। तत्र हि 'अनुपनीतशतमेकमेकेनोपनीतेन तत्सम'मित्यारभ्य गृहस्थवानप्रस्थयतिरुद्रजाप्यथर्वशिरःशिखाध्यापकान्तानां तयैव दिशा यथोत्तरमुत्कर्षमुक्त्वा पठ्यते, 'अथर्वशिरःशिखाध्यापकशतमेकमेकेन मन्त्रराजजापकेन तत्सम-'मिति। तच्च व्याख्यातं शङ्कराचार्यैः। उत्कर्षेण तरतमभावस्य मन्त्रराजजापके एतद्विद्यावति विश्रान्तत्वादेतद्विद्यावान्सर्वोत्कृष्ट इति। तथा च यद्दशाद्विद्यावत्युत्कर्षविश्रान्तिः, तत्र विद्यान्तरापेक्षया एतस्यामुत्कर्षविश्रान्तौ किं वाच्यम्? अतोऽथर्वशिखा नैतदपेक्षयोत्कृष्टेति निश्चयः।

न च नारायणोपनिषद्यपि 'एतदथर्वशिरो योऽधीते प्रातरधीयानो रात्रिकृतं पापं नाशयति' इत्यादिकथनात्तत्राप्यथर्वशिरःप्रयोग इति तदपेक्षयैव तापनीयस्योत्कर्षो भवतु, नैतदपेक्षयेति शक्यशङ्कम्। शिखासमभिव्याहारेण तस्या एव स्फोरणात्।

अत आग्रहवादार्थं वृथाथर्वशिखाग्रहः॥
यतोऽथर्वशिखायामप्ययं कारणमीरितः॥ १॥
परं रूपान्तरेणेति तस्या नोत्तमतान्यतः॥
इदं शिवपुराणीयभवदुक्तोपबृंहणे॥ २॥
शिखा चाथर्वणी साध्वी सर्ववेदोत्तमोत्तमा॥
अस्मिन्नर्थे समाप्ता सा श्रुतयश्चापरा अपि॥ ३॥

---

पञ्चदशे श्लोके उक्तं शिखासमाप्तिवाक्यतात्पर्यं दूषयिष्यन् स्वयं तत्तात्पर्यमाह समाप्तेत्यादि।

चतुर्दशश्लोकोक्तोपबृंहणस्य समाप्तिकथनतात्पर्यमाह इदं शिवेत्यादि।

---

१ 'शिखाध्यायिशतमेकमेकेन मन्त्रराजजापकेने'त्येवावलोक्यते यद्यपि श्रीमद्ग्रन्थकृदादर्शे, तथाप्यादर्शान्तरेषु दृश्यमानस्याधिकस्य पाठस्योपयोगित्वान्मूले स एव नियुज्यते।

अस्मिन्वाक्येऽपि यत्प्रोक्ता सर्ववेदोत्तमोत्तमा ॥
अथवा ह्युत्तमो वेदचतुष्के त्रिषु सामवत् ॥ ४ ॥
उत्तरावधिसंस्थत्वात्ततो वा तत्र वोत्तमा ॥
परविद्याकोटिगत्वादिति स्फुटति तेन याः ॥ ५ ॥
श्रुतयोऽपरविद्यास्ताः समाप्ता न तु याः पराः ॥
मुख्यरूपपरास्तेन न वेदान्तोत्तमोत्तमा ॥ ६ ॥
इत्युक्ता तेन कोऽप्यत्र न विवादस्य सम्भवः ॥
'कृत्तिकाः प्रथमं, विशाखे उत्तमं, अनुराधाः प्रथमं, अपभरणीरुत्तमं'
इत्यादिषूत्तमपदप्रयोगोऽस्त्युत्तरावधौ ॥ ७ ॥
न तेन कोऽपि दोषोऽत एवमर्थोऽवधार्यताम् ॥
अत एव समाप्तानामपरत्वं विशेषणम् ॥ ८ ॥
श्रुतीनामुदितं वाक्ये श्रुतयश्चापरा इति ॥
अतः शिवपुराणीये सर्वोत्कर्षोपबृंहणे ॥ ९ ॥
'यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् ॥
सह भूतेन्द्रियैः सर्वैः प्रथमं सम्प्रसूयते ॥ १० ॥
कारणानां च यो धाता ध्याता परमकारणम् ॥
न सम्प्रसूयतेऽन्यस्मात्कुतश्चन कदाचन ॥ ११ ॥
स सर्वैश्वर्यसम्पन्नो नाम्ना सर्वेश्वरः स्वयम् ॥
सर्वैर्मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यगः' ॥ १२ ॥
इति श्लोकत्रये योऽर्थः सोऽपि वो नोपबृंहणः ॥
तेन व्याख्यातरूपत्वं विज्ञेयं निरुपाधिके ॥ १३ ॥

न चेन्द्रशब्दस्य शिवे शक्त्यभावादत्र तदुत्पत्तिर्न शक्यवचनेति वाच्यम् । चत्वारिंशश्लोकविवरणे 'अभित्वाशूनोनुम' इतिमन्त्रे अथर्वशिरसि ईशाननामनिर्वचनोत्तरं पठितशिवस्येन्द्रशब्देन व्यवहारादिति स्वयमेव कथनात् । ज्ञानघनापरनाम्ना सुदर्शनाचार्येणापि चमकविमर्षे तस्मिन्निन्द्रशब्दवाच्यत्वस्य स्वीकाराच्चेति दिक् । तेन पञ्चदशश्लोकव्याख्याने यत्तेनोक्तं, 'कारणं तु ध्येय'इत्याद्युक्त्यनन्तरमिह समाप्तार्थवशिखेति श्रुत्यन्तराणामिव विरामादेव ज्ञातुं शक्यायाः स्वसमाप्तेः कण्ठोक्तिरतः परं वक्तव्याभावस्फोरणेन प्रतिपादितस्य शिवनिरतिशयैश्वर्यस्य इतरव्यवच्छेदेन तद्ध्यानविधानस्य च तत्त्वार्थनिष्कर्षरूपत्वं परमहितोपदेशरूपत्वं च व्यञ्जयितुमित्यतोऽस्याः प्राबल्यं, श्रुत्य-

न्तरेषु एवं देवतान्तरैश्वर्योपवर्णनस्य भूतार्थवादत्वानभिव्यञ्जनादिति, तदपि निरस्तं ज्ञेयम्। 'अत आकाशमध्य'इत्युपासनास्थानकथनं परमाकाशरूपपर-शिवलोकाभिप्रायमित्यादिकमपि तथैव। परशिवत्वेन तदभिमतस्यापरत्वेन तत्परिकरस्य लोकमहिष्यादेरप्यपरत्वात्। अत एव सर्वेश्वरपदमपि न तन्म-तानुग्राहकं, श्रुत्याभासरूपत्वात्। 'ओङ्कारं सर्वेश्वरं द्वादशान्त' इत्यत्रैव तदपरत्वस्योपपादितत्वाच्च। एतेनैव शिवपुराणीयतदुपबृंहणान्यपि यक्षबलि-न्यायेनैव व्याख्यातानि। तथैव रत्नत्रयपरीक्षोक्तोमास्वरूपादीन्यपि व्याख्या-तानि इति ज्ञेयम्।

यत्तु हरिवंशे कृष्णकृतशिवस्तोत्रे 'अहं ब्रह्मा कपिलोऽथाप्यनन्त' इत्यु-पक्रम्य, 'त्वत्तः सर्वे देवदेव प्रसूता'इत्युक्तं, तत्राहम्पदं अहङ्कारपरम्। अवतारे केशवस्येवोमांशनारायणस्यापि हरिवंशेऽवतारकथनात्तत्परं वा। तत्रापि कपि-लग्रहणा'दृषिं प्रसूतं कपिलं वेदगर्भ'मिति श्रुतिस्मारणेन तत्रर्षित्वस्य 'विश्वा-धिको रुद्रो महर्षि'रिति श्रुत्यन्तरोक्तस्यापि स्मरणाद्भगवन्महामहिमरूपत्व-स्फुटीकारायैतदिति न किञ्चिदेतत्। शिवस्य भगवन्महामहिमरूपत्वं त्वनुपदं महोपनिषद्विचारे स्फुटीकरिष्यामः। ब्रह्माण्डपुराणीयोबृंहणं तु शिवपुराणीय-तुल्यकक्षत्वात्तदुत्तरेणैव तूष्णीकं ज्ञेयम्।

यत्तु ज्ञानघनापरनामा सुदर्शनाचार्यः—'कारणं सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्यग' इत्यथर्वशिखायामाम्नायते, 'तमीश्वराणां परमं महेश्वर-' मिति मन्त्रोपनिषदि, 'ईशानः सर्वविद्यानामीश्वरः सर्वभूताना'मिति महोप-निषदि; एवं तत्र तत्र श्रूयमाणैर्वाक्यैर्व्युत्पत्त्यवगतार्थानतिक्रमेणानुसंहितो वेदः शिवमेव तादृशं प्रकाशयति, निरतिशयस्वातन्त्र्यस्येश्वरपदार्थस्य तत्रैव सत्त्वात्, ईश्वरशब्दश्च श्रुतमात्रमेव नीलकण्ठचन्द्रशेखरत्वादिलक्षणं देवमु-पस्थापयति, अन्यं तु प्रकरणादिनिपीडनेन प्रकरणोपपदपदान्तरसमभिव्याहा-रादिना आकुलितो भूत्वा यं कञ्चन जल्पतीत्यतो न तदादरणीय'मित्युक्तवान्।

तदप्यनादरणीयम्। एवं पदशक्तिमात्रेण वाक्यगतपदार्थनिर्णये पूर्वोक्त-

---

चतुर्दशश्लोक उपन्यस्तस्य हरिवंशवाक्यतात्पर्यं वक्तुमाह यत्तु हरिवंश इत्यादि।

एवमीश्वरादिपदानां मायोपहिते योगरूढत्वं मन्वानस्य मतमपास्य मायानुपहितस्य तदेव रूपमीश्वरादिशब्दाश्च तत्रैव रूढाः, रूढिरेव च निर्णायिकेति मन्वानस्य ज्ञानघनस्य मतं दूषयितुमुपक्षिपति यत्तु ज्ञानेत्यादि।

रकाण्डस्थेषु त्रिवृदाज्यादिशब्देष्वाकाशप्राणादिशब्देष्वपि तथैव यत्किञ्चिदर्थनिर्णयसिद्ध्या विवक्षितसिद्धान्तव्याघाते द्वयोरपि जिज्ञासाशास्त्रयोर्दत्ततिलाञ्जलित्वापातात् । असङ्गतं च । यतः शब्दराशिर्वेदोऽपि न निघण्टुवत्पदराशिः, येन तत्रत्य ईश्वरशब्दः श्रुतमात्रः स्वार्थमनुभावयेत्; अपि तु वाक्यराशिः, वाक्ये च पदान्यवयवाः, पदे वर्णा इव ते च तत्रत्याः स्वार्थाननुभावकाः कथञ्चित्स्वार्थं स्मारयन्तो वाक्यार्थज्ञाने उपकुर्वन्ति । सोऽप्युपकारस्तदा सार्थको यदि विवक्षितं प्रत्याययेत् । विवक्षितप्रतीतिस्तु वाक्यजन्यत्वान्नैकपदाधीनेति यथासम्भवं प्रकरणोपपदपदान्तरसमभिव्याहारादिकं स्वनिष्पत्तये सर्वथापेक्षत एवेति तेषामर्थनिपीडकत्वकथने व्युत्पत्त्यवगतार्थातिक्रमानुसन्धानादनतिक्रमेणानुसंहितो वेदः शिवं प्रकाशयतीति वदतोव्याघातात् ।

किञ्च, व्युत्पत्तिबलादीश्वरशब्दस्य शिवैकविषयत्वं प्रतिज्ञाय निरतिश-

---

तत्र प्रथमं रूढेर्निर्णायकत्वं दूषयति तदपीत्यादि । त्रिवृदाज्यादिशब्देष्विति । त्रिवृच्छब्दस्त्रैगुण्ये रूढः । 'स त्रिवृद्बहिः पवमान'मिति वाक्यगतो बहिःपवमानाख्यस्तोत्रनिष्पादकङ्नवकस्तोमविशेषनामधेयत्वेन सङ्कोच्यते पदान्तरसमभिव्याहारेण । आज्यशब्दो घृते रूढो 'यदाजिमियुस्तदाज्यस्याज्यत्व'मिति वाक्यशेषेण स्तोत्रविशेषयौगिकनामधेयत्वेन व्यवस्थाप्यते पूर्वतन्त्रे । आदिपदेन चित्रादिपदसङ्ग्रहः । आकाशप्राणादिशब्देष्विति । उत्तरतन्त्रे आकाशशब्दो भूतविशेषे रूढः । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्तीति वाक्यगतो लिङ्गेन ब्रह्मवाचकतया व्यवस्थाप्यते । प्राणशब्दः कौष्ठ्यवायुविशेषे रूढः 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत' इति लिङ्गेन ब्रह्मपरतया व्यवस्थाप्यते । आदिपदेन वैश्वानरादिशब्दाः । असङ्गतिं व्युत्पादयन्ति यत इत्यादि । पदान्यवयवा इति । अनेनाखण्डवाक्यपक्षस्तन्मते नास्ति तौतातितानुसरणादिति सूचितम् । स्वार्थाननुभावका इति । पदकरणपक्षे युगपद्वृत्तिद्वयविरोधात्तथेत्यर्थः । अतः परं पदार्थकरणपदज्ञानकरणवाक्यकरणपक्षाः शिष्यन्ते । तत्र प्रथमो भाट्टानां, द्वितीयो नैयायिकानां, तृतीयः शाब्दिकानाम् । तत्राद्ययोर्वाक्यार्थस्याशाब्दत्वं समाख्याविरोधश्चेत्यादयो दोषाः । तृतीयेऽपि पदवाक्याभ्यां युगपत्स्वार्थप्रत्यायने वृत्तिद्वययौगपद्यविरोधात्पदानामनर्थकत्वं स्मारकत्वं वाङ्गीकार्यम् । तत्रानर्थकत्वे वक्तुर्वाक्ययोजनाय तत्प्रयोगवैयर्थ्यापातात्तेषां स्मारकत्वमेव न्याय इति हृदिकृत्य, कथञ्चिदित्यनेनाद्यमतद्वयं निरस्य, स्मारयन्तीत्यनेन तृतीयं सूचयन्नाह—वाक्यार्थज्ञान उपकुर्वन्तीति । अर्थनिपीडकत्वं, अर्थविपर्यावर्तकत्वम् ।

योगपक्षं दूषयति किञ्चेत्यादि । एवं योगरूढ्योः शिवैकविषयत्वनिराकरणेन तयोर्मूलरूपविषयत्वं दृढीकृतम् ।

यैश्वर्यं हीश्वरशब्दार्थस्तत्परिपोषादित्युक्तं, तत्रेदं पृच्छयते। एवमर्थः कुतस्त्वयावधारित इति। न तावद्व्याकरणाद्, ईशधातोरैश्वर्यमात्रे शक्तत्वेन निरतिशयत्वरूपविशेषालाभात्। नापि कोशाद्, 'ईश्वरः शर्व ईशान' इति शिवमात्रवाचकत्वात्। नाप्याप्तवाक्याद्, आप्तानां नानाविधत्वेन शिव एव तदुपसंहारस्याशक्यवचनत्वात्। नापि व्यवहाराद्, ईश्वरस्याव्यवहार्यत्वेन तस्य तत्राप्रवृत्तेः। अत एव न विवृतेः।

अथ वाक्यशेषोऽवशिष्यते। तत्र चेदथर्वशिखामहोपनिषदादिवाक्यानि तथात्वेनाङ्गीक्रियन्ते, तदा तु तत्र केवलेश्वरपदाभावाद्भूतेश्वरत्वसिद्धेश्च नाभिमतार्थव्युत्पत्तिः। अथ 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानै'रिति समासशास्त्रादुपसर्जनीभूतो महच्छब्दो निरतिशयं पूज्यत्वं तत्राचष्ट इति निरतिशयैश्वर्यलाभ इति विभाव्यते; तदपि न रुचिरम्। समस्तस्य महच्छब्दस्य स्वयमेव प्रकर्षमात्रवचनत्वादरणान्निरतिशयताया अलाभादिति दिक्।

अथेदं विचार्यते। ननु माण्डूक्याथर्वशिरोब्रह्मविद्यानृसिंहतापनीद्वयचूलिकाध्यानबिन्दुयोगतत्त्वगोपालोत्तरतापनीयाद्युपनिषत्सु तुरीयस्यार्धमात्रावाच्यस्य ब्रह्मत्वमेव प्रतिपादितं, न जन्मशालित्वम्; अतः कथं तथोच्यते इति।

अत्रेदमवधेयम्। नहि वयं तुरीयत्वेनार्धमात्राप्रतिपादित्वादिना वा जन्मशालित्वं वा वदामः, अपि तु भवदभिमतरीतिकत्वेन, अतो न दोषः। कथं? इत्थम्। प्रणवो हि श्रुतिषु नानाप्रकारेणोक्तः। यथा प्रश्नोपनिषदि सर्वैस्त्रिमात्र एव व्याख्यातः। प्रसिद्धपाठे सार्धत्रिमात्रः। तथैवोक्तोपनिषत्सु। अमृतबिन्दौ सार्धपञ्चमात्रः, अमात्रश्च। 'ओमित्येकाक्षरं ब्रह्मे'त्युक्त्वाग्रे 'पार्थिवः पञ्चमात्राणि चतुर्मात्राणि वारुणः। आग्नेयस्तु त्रिमात्राणि द्विमात्रा मारुतस्तथा। एकमात्रं त्वथाकाशो ह्यर्धमात्रां विचिन्तये'दिति नादबिन्दौ अकारोकारमकारार्धमात्राभिः सार्धत्रिमात्रत्वमुक्त्वाऽग्रे नैकधा मात्राधारणाभेदेनोक्तः। तथा मात्रात्रयबिन्दुनादभेदेन क्वचित्पञ्चधा। रामतापनीये अउमार्धमात्रबिन्दुनादैः षोढा। तैत्तिरीये गीतायां याज्ञवल्क्ये च 'ओमित्येकाक्षरं ब्रह्मे'ति वाक्यादमात्रः। अन्येऽप्येकद्वित्र्यादिपक्षा याज्ञवल्क्येन दर्शिताः। तत्रामात्रपक्षे शुद्धब्रह्मपरः। तथा प्रश्नस्थव्याख्यातपाठपक्षे त्रिमात्रोऽपि ब्रह्मपर एव। प्रसिद्धपाठे अर्धमात्रो ब्रह्मपरो मात्रास्त्वपरब्रह्मपराः। तथैव माण्डूक्यादिषु।

---

एवं प्रासङ्गिकं परिहृत्य पूर्वतुरीयस्य जन्मशालित्वं यत्प्रतिपादितं तदापाततः श्रुतिविरुद्धमिवाभासत इति तन्निवृत्त्यर्थं तदभिमतरूपेण जन्मशालित्वं बोधयन् श्रुतिषु तन्निरूपणप्रकारान् विवरीतुं प्रतिजानीते अथेत्यादि।

अथर्वशिखायां पञ्चकूटो बिन्दुपर्यन्तं अपरपरो नादः परब्रह्मपरः । एवं षोढा विभागे मात्रात्रयमपरब्रह्मपरम् । शेषं तत्तदवस्थपरब्रह्मपरम् । इत्येवं नाना-श्रुतिषु नानर्षिभिश्चानेकधा दर्शितः । एवं सति यत्राथर्वशिखादौ पञ्चधा वि-भागस्तत्र तस्य भवदभिमतस्य तुरीयस्य जन्मशालित्वमेव सिध्यत्यपरत्वात् । तथा पूर्वतापनीयेऽपि ' ओङ्कारं सर्वेश्वरं द्वादशान्त' इत्युक्त्वा ' आनन्दामृत-रूपं प्रणवं षोडशान्त'इति कथनात्, 'मनो युज्य तथोङ्कारे ओङ्कारं प्रणवे तथा । प्रणवं ब्रह्मणि स्थाप्य न किञ्चिदपि चिन्तये'दिति याज्ञवल्क्याच्च । तुरीयकोटावेकरूपमूर्तेः शिवतत्त्वविवेककृताप्यनुपगमाच्चातोऽत्र न चोद्याव-काशः । किञ्च, तुरीयशब्दश्चतुर्थे रूढः । स च जाग्रदाद्यवस्थात्रयापेक्षया क्वचि-ज्जीवपरो यथोत्तरतापनीयोक्तारोपादिपक्षेषु । क्वचित्तु विश्वराडाद्यपेक्षया ब्रह्म-परो यथा तत्रैव नवमखण्डे । एकरूपत्वाभावेऽपि ' यजमानपञ्चमा इडां भक्ष-यन्ति, ' ' वेदानध्यापयामास महाभारतपञ्चमान् ' इत्यादाविव सङ्ख्यामात्र-पूणार्थत्वात् । अतोऽपि सर्वत्रैकरीतिकनिर्णयाभावाच्चोद्यानवकाशः ।

यत्तु 'रूपोपन्यासा'दित्यादिना 'भोग्यसिद्धे'रित्यन्तेन प्रतिपादितं, तत्तु न तथा विरुद्धमित्युपेक्ष्यते ।

या तु असति मानान्तरविरोधेऽन्यपरशब्देभ्योऽक्षरार्थसिद्धिः । अस्ति त्विह विरिञ्च्यादिविग्रहत्रयातिरिक्तचिरन्तनतुरीयविग्रहाङ्गीकारे श्रुत्यन्तर-विरोधः । मैत्रेयोपनिषदि मायोपाधिकं ब्रह्म प्रस्तुत्य 'तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णु'रिति परविग्रहाणां मध्ये विरिञ्च्यादीनामेवाग्र्यत्वविवरणा-दित्यादिना कस्यचिदाशङ्कोक्ता, सा तु मैत्रेयोपनिषदर्थोपन्यासेनैव निराकृता भवति ।

यदप्यत्रितपश्चर्यास्थं श्रीभागवतवचनजातं तदुपोद्बलकत्वेनोक्तं 'शरणं तं प्रपद्येऽहं य एव जगदीश्वर' इत्यारभ्य 'यद्वै ध्यायसि ते वय'मित्यन्तं, तत्राप्यधिकारानुसारेणैव त्रयाविर्भावो न तु ततोऽतिरिक्तमुख्यस्वरूपाभावेन । ' य एव जगदीश्वर ' इत्यापाततो ज्ञानस्यैवानुवादेन ' प्रजामात्मसमां प्रयच्छ-तु ' इत्यभिसन्ध्याकारानुवादेन तस्य जघन्याधिकारबोधनात् । न च ' यथा

---

असति मानान्तरविरोधेत्यादि । अत्रोदाहरणं ' आग्नेयमष्टाकपालं निर्वपति ' ' ईश्वरः सर्वभूताना 'मित्यादिकं पूर्वोक्तं ज्ञेयम् ।

त्रयोदशे उपन्यस्तानामत्रितपःप्रसङ्गीयवाक्यानां तात्पर्यमाह यदपीत्यादि ।

कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा। सत्सङ्कल्पस्य ते ब्रह्मन् यद्वै ध्यायसि ते वयं' इति वाक्यविरोधः। तस्यात्रिनाम्नैव पुत्रत्रयाकाङ्क्षासूचनात्, सङ्कल्पितस्य भाव्यत्वकथनाच्च पुत्रविषयत्व एव सत्सङ्कल्पत्वाविरोधात्। ध्येयविषयत्वे त्वेको मयेत्यभिसन्ध्यनुवादेन प्रत्युत सत्सङ्कल्पत्वविरोधात्। 'यद्वै ध्यायसी'-त्यत्रापि परस्य निरुपमत्वमज्ञात्वा सोपमं यद्ध्यायसि ते सोपमा वयमित्यर्थलाभात्। एको मयेति प्रश्नोत्तरस्याप्येतेनैव सिद्धेः।

यत्तु वैधर्म्यबोधनाय गजेन्द्रमोक्षस्थलमुदाहृतं, तत्राप्युक्तप्रकारतो वैधर्म्यं न तु तदुक्तप्रकारकम्। तत्र हि—' एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः। नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत्' इति निर्विशेषस्यैव धातृगृहीतत्वेन तादृशस्य तस्यैवाविर्भावबोधनात्। न च विरोधः, तस्यादावेव परिहृतत्वात्।

यच्चैतच्छङ्काप्रतिविधाने उक्तं 'प्रतीयते तावदुमासहाय'मित्यादिमन्त्रवर्णेभ्यस्तुरीयोमासहायत्वादिविशिष्टा मूर्तिः, साऽपि न ध्यानार्थमारोपितेति, शक्यं वक्तुम्। छान्दोग्ये समानप्रकरणे गुणोपसंहारन्यायेन उपास्यब्रह्मण उदाहृतमन्त्रवर्णसिद्धमूर्तिसिद्धवत्कारेण ' एष आत्मापहतपाप्मा ' इत्यादिना शरीरवत्त्वसामान्येन प्रसक्तानां जरामरणजिघत्सापिपासादीनां प्रतिषेधदर्शनात्। अन्यथा तेषामसक्तप्रतिषेधत्वापातात्। न च मूर्तिवदजरत्वादयोऽपि केवलमुपासनार्थमारोपिता एवोपन्यस्यन्त इति वाच्यम्। ' तत्रैवास्मिन् कामाः

---

एतेनैवेति। ध्यातस्यैकस्यापि सोपमत्वबोधनेनैवेत्यर्थः। न च दशमस्कन्धे ' मादृशो वां वृतः सुत ' इति वाक्यादत्रापि सोपमध्यानपूर्वकतपःप्राप्तेरुक्तमप्रयोजकमिति शङ्क्यम्। ' विदितोऽसि भवान् साक्षा'दित्यादिस्तुत्या स्वरूपज्ञानवत्तानिश्चयेन तादृशाभिसन्ध्यननुवादेन दर्शनोत्तरतादृशवरप्रार्थनानुवादेन ' अदृष्ट्वाऽन्यतमं लोके ' इति साम्यनिषेधेनैकरूपस्यैव प्राकट्येन तन्निरासादिति दिक्।

वैधर्म्यबोधनायेति। प्रकृते ध्यातृभावगृहीतमेकं रूपम्। प्रादुर्भावो रूपत्रयेण। गजेन्द्रस्थले ध्यातृभावगृहीतमेकं रूपमेकेनैव रूपेण प्रादुर्भाव इति वैधर्म्यबोधनायेत्यर्थः। वैधर्म्यमिति। तत्र निर्विशेषं ध्यातं, सविशेषः प्रादुर्भूतः। अत्र सोपमो ध्यातस्तादृश एव प्रादुर्भूत इति वैधर्म्यमित्यर्थः।

**समानप्रकरण** इति। अपहतपाप्मत्वादिगुणकात्मबोधकदहरविद्यासमाने इन्द्रप्रजापतिसंवादरूपे प्रकरणे इत्यर्थः। **गुणोपसंहारन्यायेनेति**। ' उपसंहारोऽर्थाभेदाद्विधिशेषव-

समाहिता ' इत्यादिना तेषामनारोपितेश्वरगुणत्वस्फुटीकरणात् । सर्ववेदान्तप्रत्ययन्यायेन तत्र विग्रहविशिष्टस्यैव ब्रह्मण उपास्यत्वेन स्थितेरौचित्यात् । 'तस्मिन्यदन्तस्तदन्वेष्टव्य'मित्यादिना विधानायानूद्यमानस्यातिथ्यायामनुयाजादिनिषेधवत् स्तुत्यर्थत्वायोगाच्च । तस्माद्विग्रहगुणस्याजरत्वादेः स्वरूपतो विद्यमानत्वेन निर्दिश्योपास्यतया विधानेनानारोपितत्वावसायात्तद्गुणकस्य विग्रहस्याप्यनारोपितता निश्चीयत इत्युपगन्तव्यैव तुरीयस्यापि साम्बत्वादिलक्षणिका मूर्तिरिति ।

तदप्यसङ्गतमेव । उक्तहेतुभिर्विग्रहमात्रस्यैवानारोपितत्वनिश्चायनाद् ' उमासहाये'त्यादिमन्त्रवर्णसिद्धस्यैव विग्रहस्यात्रोपगमे विनिगमकाभावात् । अग्रे इन्द्रप्रजापतिसंवादे अपहतपाप्मत्वादिलक्षणकमेवात्मानमुपक्रम्य, चतुर्थपर्याये ' एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष ' इति पुरुषोत्तमत्वश्रावणेनोक्तत्यागायोगात्, 'क्षराक्षराव्याकृतापेक्षयोत्तमः कृतनिर्वचनो ह्ययं गीत'स्त्विति शङ्कराचार्यभाष्यात्तेनापि तदनुसारिणा पुरुषोत्तमस्यैवाङ्गीकार्यत्वात् । स्वशाखाप्रकरणगतलिङ्गविरोधेन शाखान्तरस्थमन्त्रवर्णसिद्धस्येह सिद्धवत्कारस्याशक्यत्वाच्च ।

किञ्चैतत्प्रकरणोत्तरं ' श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये ' इति मन्त्रव्याख्याने ' श्यामो गम्भीरो वर्णः श्यामवच्छ्यामं हार्दं ब्रह्मात्यन्तदुरवगाह्यत्वात्, तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामाच्छबलं शबल इव शा-

---

त्समाने च । ' श्रुत्यन्तरोक्तानां विज्ञानगुणानां श्रुत्यन्तरोक्ते समाने विज्ञाने उपसंहारो भवति। कुतः ? अर्थाभेदात्। अर्थस्य तद्विज्ञानोपकाररूपस्य प्रयोजनस्याभेदाद्, ऐक्यात्। सिद्धे विद्यैक्ये तदुपकारस्यापि तथात्वादित्यर्थः । तत्र दृष्टान्तः विधिशेषवदिति । यथा विधिशेषाणामग्निहोत्रादिधर्माणां प्रकरणान्तरोदिते मासाग्निहोत्रेऽग्निहोत्रनिष्पादनरूपप्रयोजनाभेदाद् उपसंहारस्तथेत्यर्थः। सर्ववेदान्तप्रत्ययन्यायेनेति । 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' । सर्वेषु वेदान्तेषु प्रत्ययो ज्ञानं अभिज्ञानं यस्य तत्सर्ववेदान्तप्रत्ययम् । विज्ञानं सर्ववेदान्तेष्वेकमेव। कुतः ? चोदनाद्यविशेषात् । फलसंयोगरूपचोदनासमाख्यानां तुल्यत्वात् । तथा च यत्रैते चत्वारस्तुल्यास्तत्रैकविद्यम् । यत्र सर्वेषामन्यतरस्य वा भवति भेदस्तत्र नैकविद्यत्वमित्यर्थः ।

विनिगमकाभावादिति । गुणोपसंहारन्यायस्य प्रस्तुतविद्योपकारकसर्वशाखोक्तगुणोपसंहारकत्वेन सर्ववेदान्तप्रत्ययन्यायस्य समानविद्यानामैक्यबोधकत्वेन च तयोश्चारितार्थ्ये उक्तविग्रहाङ्गीकारनियामकस्यान्यस्याभावादित्यर्थः । भगवद्विग्रहानङ्गीकारे बाधकान्तराण्याह अग्र इत्यादि ।

बलोऽरण्योऽनेककाममिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं; तं ब्रह्मलोकं शबलं मनसा शरीरपातादूर्ध्वं गच्छेय'मिति शाङ्करभाष्ये उक्तम्। अरण्यशब्दश्च पूर्वप्रकरणे ब्रह्मलोकपरिखारूपार्णवद्वयवाचकत्वेन श्रुत्यैवोक्तः 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक' इत्यनेन। अयमेव चार्थो वाराहे चातुर्मास्यमाहात्म्यस्य चतुर्दशाध्याये उपबृंहितः। तत्र हि श्वेतद्वीपानन्तासनवैकुण्ठाख्यस्थानत्रयं प्रक्रम्य, तन्मानं चोक्त्वा; श्रीभूदुर्गाख्यांस्तद्भागांश्चोक्त्वा, अवान्तरप्रलये तद्नाशं चोक्त्वा; महाप्रलये भूदुर्गाभागयोर्नाशं ब्रह्मोत्पत्तौ उत्पत्तिं, अवान्तरप्रलये तत्रस्थानां बाधाभावं, ब्रह्मप्रलये भगवदुदरे स्थितिं चोक्त्वा; 'श्रीभागे संस्थिता ये तु न तेषां प्रलये भयम्। शाश्वतः स तु लोको मे न नश्येद्ब्रह्मणो लये। मुक्ता एव तु मां तत्र वीक्षन्ते सर्वदैव तु' इत्याद्युक्त्वा; श्रीभूमिभागयोः श्रीदुर्गाभागयोश्च मध्ये 'अरनामामृताम्भोधिर्ण्यनामामृतसागरः' इति पीयूषार्णवावुक्तौ। तेनापि छान्दोग्योक्त आत्मा ब्रह्म भगवानेवेति लोकलिङ्गादपि निश्चीयते।

किञ्च, श्यामत्वं च भगवत एव लिङ्गमिति श्रीमदाचार्यचरणैर्निबन्धे 'अथवा शून्यवद् गाढं व्योमवद्ब्रह्म तादृश'मित्यत्र व्यवस्थापितं, ,ब्रह्मदर्शने श्यामवर्णोपपादनार्थं,चक्षुषः सामर्थ्यप्रतिघाते वस्तुस्वभावादेव श्यामत्वं प्रतीयते, स्वरूपमेव तन्न तु रूप'मिति। श्यामश्च वर्णो भगवत्येव प्रसिद्धस्तेन शाखान्तरस्थमन्त्रवर्णग्रहणाग्रहेऽप्युत्तमपुरुषत्वारण्यलोकश्यामत्वलिङ्गानुगुण्यात् 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बर'मिति गोपालतापनीयमन्त्रसिद्धमेव सुग्रहम्। तत्रापि रूपे उत्तरत्तापनीयेऽजरत्वादीनां हृत्पद्मस्थानस्य चोक्तत्वात्। तथा सति पूर्वोक्तं शाङ्करभाष्यमप्यत्रानुगुणं न तु शिवे। तस्मादपि पूर्वत्र शिवरूपाङ्गीकारोऽनुचितः।

यत्तु छान्दोग्ये 'दहरोऽस्मिन्नन्तर आकाश' इति दहराधिकरणोक्तन्यायाद्ब्रह्मपरेणाकाशपदेनोपास्यं ब्रह्म प्रस्तुत्य, 'तस्मिन्यदन्तस्तदन्वेष्टव्य'मित्या-

---

पूर्वप्रकरण इति। दहरविद्यायामित्यर्थः।

प्रसङ्गाद्द्वात्रिंशोक्तं दूषयितुमुपक्षिपति यत्तु छान्दोग्येत्यादि। दहराधिकरणोक्तन्यायेनेति। 'दहर उत्तरेभ्यः'। 'अथ यदिदमस्मिन् ब्रह्मपुर' इत्यत्र दहरान्तर आकाशो ब्रह्मैव। कुतः? उत्तरेभ्यः, एतदुत्तरवाक्योक्तहेतुभ्यः। 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी समाहिते' इति वाक्यशेषे दहराकाशस्य प्रसिद्धाकाशोपमत्वकथनेन भूताकाशत्वं निवर्त्यते। सत्यकामत्वादयश्च भूताकाशविरुद्धा उच्यन्ते

दिना तदन्तर्वर्तित्वेनोपदिष्टानां सत्यकामादिगुणानामुपासनस्य च शिव एवान्वयः । तैत्तिरीयोपनिषत्स्थदहरविद्योपदिष्टविशोकत्वगुणान्वयस्वारस्यसिद्धब्रह्मतात्पर्यकेन गगनपदेन पूर्वापरमन्त्रसमर्पितशिवरूपमेव ब्रह्म प्रस्तुत्य तस्य दहरपुण्डरीकान्तर्वर्तित्वोपदेशात् । 'कामादीतरत्र तत्र चे'त्यधिकरणे छान्दोग्योक्तसत्यकामत्वादीनां बृहदारण्यकस्थवशित्वादिभिः सहोपसंहारस्य सर्वैरभ्युपगतत्वाच्चे'त्युक्तं, तत्तु दहरविद्योत्तरमिन्द्रप्रजापतिसंवादे कण्ठरवेण पुरुषोत्तमप्रतिपादनात्तैत्तिरीयोपनिषदि 'अणोरणीया'नित्यनुवाकस्य शिवोपासनापरताया निराकरिष्यमाणत्वादात्मप्रबोधोपनिषन्नारायणोपनिषदोः कण्ठरवेण दहरपुण्डरीके नारायणस्थितेरुक्तत्वाच्च दूरतरनिरस्तं ज्ञेयम् ।

यत्तु तुरीयस्य शिवमूर्तित्वज्ञापकं सूतसंहितावचनमुक्तं, तत्तात्पर्यमग्रे व्युत्पाद्यम् ।

यत्तु पराशरोपपुराणीयं 'साक्षात्परतरस्यैव परा मूर्ति'रिति, यच्च कौर्मपूर्वभागीयं 'एभ्यः परतरो देवस्त्रिमूर्तिः परमा तनु'रिति; तत्र तु तरप्प्रयोग-

---

तेभ्य इत्यर्थः । कामादीति । ' कामादीतरत्र तत्र चायतनादिभ्यः ' । ' अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाश ' इति प्रस्तुत्य, 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प ' इति छान्दोग्य उच्यते । वाजसनेयके तु ' स वा एष महानज आत्मा विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ् शेते सर्वस्य वशी सर्वस्येशान ' इत्यादि । तत्रैकविद्यं विद्याभेदो वेति सन्देहे, पूर्वोक्तहेत्वभावाद्भेद इति पूर्वपक्षः । सिद्धान्तस्तु, कामादि सत्यकामादिगुणवृन्दं, इतरत्र वाजसनेयके, उपसंहर्तव्यम् । तत्र छान्दोग्ये च वशित्वादिकमुपसंहर्तव्यम् । चोऽनुक्तानां वशित्वादीनां समुच्चायकः । कुतः ? आयतनादिभ्यः, उभयत्र हृदयरूपस्यायतनस्य वेद्यस्येश्वरस्य लोकासम्भेदप्रयोजनकसेतुत्वगुणादीनां च तौल्यादित्यर्थः ।

त्रयोदशस्थमेव पुनर्दूषयति यत्तु तुरीयस्येत्यादि । अग्रे व्युत्पाद्यमिति, सूतसंहितार्थनिरूपणावसरे व्युत्पाद्यम् ।

तरप्प्रयोगसामर्थ्यादिति । तरप्प्रयोगस्य सङ्कुचितातिशयबोधकत्वरूपात्सामर्थ्यात् । यद्यपि 'अतिशायने तमबिष्ठना'विति सूत्रादतिशयार्थानुवृत्तौ 'द्विवचनविभज्योपपदे तरबीयसुना'विति सूत्रेण तरब् विधीयत इति तरप्तमपोरैकार्थ्यं, तथापि द्वयोर्मध्य एकस्यातिशये तरम् नियम्यते । तमपि तु नायं नियम इति तमबसङ्कुचितातिशयबोधकस्तरप्सङ्कुचितातिशयबोधकः । अत एव लोके शास्त्रे च तारतम्यं तरतमभाव इत्यादिप्रयोगस्तस्मादित्यर्थः । ननु ' ततो यदुत्तरतरं तदरूपमनामयं, ' 'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जये'त्यादौ परत्र-

सामर्थ्यादेव मध्यमकक्षत्वं शिवमूर्तेः स्फुटीभवति । तथा 'परात्परतरो ब्रह्मा तत्परात्परतरो हरिः । तत्परात्परो ह्येष तन्मे मनः शिवसङ्कल्पमस्त्वि'ति तद्व-क्ष्यमाणश्रुतावप्यवधेयम् । अत एव कूर्मोत्तरभागीये ब्रह्मादिमूर्तीरुक्त्वा 'आभ्यः परस्ताद्भगवान्परमात्मा सनातनः । गीयते सर्वशक्त्यात्मा शूलपाणि-र्महेश्वरः ' इति सर्वशक्तिसमष्ट्यात्मकत्वमेव प्रतिपादितं, न तु परमपुरुष-त्वम् । तथा स्कान्देऽपि 'ब्रह्मा विष्णुश्च रुद्रश्च परतत्त्वविभूतयः । एषां त्रया-णामधिकः सर्वकारणमीश्वरः' इति विभूत्यधिकत्वप्रतिपादनेन मुख्यविभूतित्व-मेव स्फुटीकृतम् । तथैव वायवीयशैवलैङ्गसौरपाद्मगारुडब्रह्माण्डशिवधर्मादि-वाक्येष्वप्यवगन्तव्यम् । मैत्रायणीयाग्र्यतनुभ्यः परत्वं तु पूर्वोपपादितरीत्या मतद्वयेऽपि तुल्यमेव । सर्गान्तरापेक्षया पूर्वकालमादाय तत्र विद्यमानत्वेन तासामग्र्यत्वसिद्धेरप्रत्यूहत्वात् ।

यत्तु तासां परशिवविग्रहे जननमङ्गीकृत्य 'नासतो विद्यते भाव' इति स्मृत्या सत एव कार्यस्योत्पत्तिरिति जातार्थेऽपि भवार्थप्रत्ययो न विरुध्यते, 'उरव्या उरुजा' इति जातेऽपि भवार्थप्रत्ययदर्शनादित्युक्तं;

तन्न । एवं हि जाते भवार्थसिद्धिर्न तु भवे जातार्थस्य । प्रत्ययस्तु भवा-धिकारिक इत्यरुचिबीजात् । अन्यथाधिकारद्वयवैयर्थ्यापातात् । उरव्या इत्य-स्याव्युत्पन्नत्वेनापि सिद्धेः । शिवराघवसंवादीयत्रिमूर्तिजननं तु तदवान्तरव्यू-हपरत्वेनैवोपपद्यमानं नास्योपष्टम्भायेत्यलमावेशेन ।

अथर्वशिखा तु व्याख्यातैव । शिवपरशिवादिभेदस्तन्निरूपकपुराणादि-प्रतिपादनं त्वविरुद्धत्वादनुमोदामहे ।

यत्तु केषाञ्चिद्वैष्णवानां विष्णोस्तुरीयत्वसाधकं मतमुपक्षिप्य, वैष्णवव-चांसि तदुपष्टम्भकान्युक्त्वा, नृसिंहोत्तरतापनीयोपन्यासेनोपष्टभ्य, तद्दूषणा-

---

ह्मण्यपि तथाप्रयोगान्नोक्तं साधीय इति शङ्कायामाह अत एवेत्यादि स्फुटीकृतमित्यन्त-म् । तथा च त्वया श्रुत्यैव प्रायेण निर्णीयत इति श्रुत्या सिद्धं मध्यमकक्षत्वं वाक्यप्रमाणेन दृढीक्रियते । ब्रह्मणि तु तरप्श्रुतिः 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुत्यन्तरैरस्त-सङ्कोचा विधीयते इति नोक्ते दोषलेश इत्यर्थः ।

त्रयोदशे श्लोके 'अग्र्याख्यायामुरस' इति सूत्रमुपन्यस्य यदुक्तं तदुपक्षिप्य दूषयति यत्त्वित्यादिना ।

त्रयोदशस्थमेव किञ्चित्प्रमेयमविरुद्धमित्याह शिवपरशिवेत्यादि ।

तत्रत्यमेवान्यत्प्रमेयमुपक्षिप्य दूषयति यत्तु केषाञ्चिदित्यादि ।

रम्भे उक्तं 'पादो वैश्वानरादीनां तुरीयो निर्गुणः श्रुतः । उत्तरस्मिंस्तापनीये न गुणिभ्यः परो हरि'रिति;

तदबोधादाग्रहाद्वा । तत्राष्टमखण्डे तुरीयेणात्मयोजनोपदेशे, 'अथ तुरीयेण ओतश्च प्रोतश्च ह्ययमात्मा सिंहोऽस्मिन्निदं हि सर्वे'मिति, नवमखण्डे च चतुर्थपर्याये तुरीयव्याख्यायां 'उपद्रष्टानुमन्तैष आत्मा सिंहश्चिद्रूप एवे'ति वाक्यद्वयस्थसिंहशब्दस्य करणापाटवेनाप्रतिसन्धानात्सति पाटवे तदलिखनात् । एवमेव माण्डूक्येऽपि ज्ञेयम् ।

नन्वत्र माण्डूक्ये च प्राज्ञस्य सर्वेश्वरत्वादिकमुक्तं, तुरीयस्य तु 'न स्थूलप्रज्ञ'मिति 'नान्तःप्रज्ञ'मित्यादिना निराकारत्वमेव प्रतिपादितं; 'शिवमद्वैतं चतुर्थं मन्यन्त'इति शिवत्वमेवोक्तं इति कथं तस्य साकारत्वादिकं भगवत्परत्वं चाङ्गीकर्तुं शक्यमिति चेत्,

उच्यते । द्वितीयखण्डे 'अथ तुरीय ईश्वरग्रासः स्वराट् स्वयमीश्वर' इत्यारभ्य 'सर्वसंहारसमर्थः परीभावासहः प्रभुर्व्यासः सदोज्ज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति तस्मादेवमेवेममात्मानं परं ब्रह्मानुसन्दध्यादेष वीरो नरसिंह एवे'त्यहङ्ग्रहोपासनायां तत्स्वरूपकथनेन सन्देहनिरासात् । समानत्वेन माण्डूक्येऽपि अवगन्तुं शक्यत्वात् । शिवपदस्य भगवद्वाचकताया व्युत्पादितत्वाच्चेति ।

यत्तु पूर्वतापनीयमन्त्रोऽथर्वशिखाद्यनेकश्रुतिकौर्मादिपुराणसिद्धं शम्भोस्त्रिमूर्त्यतीतमायोपहितब्रह्मरूपत्वं प्रतिक्षिप्य, 'न विष्णोस्तथात्वविधाने क्षम' इत्युक्तं, तत्तु तथ्यमेवोक्तं; परमबुध्वा । पूर्वतापनीयमन्त्राणां नृकेसरिणो निरुपाधिब्रह्मरूपत्वस्थापकतया मायोपहितत्वाविधायकत्वात् । कौर्मे च प्रकृत्यायोजनीयस्य पुरुषस्य यस्य कस्यापि पञ्चविंशकस्य सत्त्वेनोपपन्नत्वात् । तत्त्वकोटिनिविष्टानां तेषां नानात्वात् । शिवस्य मुख्यशक्त्यात्मकत्वेन तत्करणौचित्यात् । परस्य तत्त्वकोटावनिवेशात् । तापनीयापेक्षया अथर्वशिरःशिखयोरमुख्यविद्यात्वस्योपपादितत्वाच्च । अत एव मन्त्राणां वास्तविकसार्वात्म्यबोधनाय प्रवृत्तत्वेनाथर्वशिखोक्तपञ्चदैवत्यप्रणवमात्रीयब्रह्मविष्णुमहेश्वरपुरुषेश्वराणां सार्धचतुर्मात्राणां च विभूतिमध्यपाठोऽपि तेषु युज्यते । अन्यथा पूर्वं चतुर्मात्रत्वेन प्रणवव्याख्यानात्तद्विरोधापत्तेः ।

---

पुनस्तत्रत्यमेव दूषयति यत्तु पूर्वेत्यादि विरोधापत्तेरित्यन्तम् ।

यच्चोक्तं 'अथ कैर्मन्त्रैः देवः स्तुतः प्रीतो भवति ? एतैर्मन्त्रैर्नित्यं देवं स्तुध्वं' इत्युपक्रमोपसंहाराभ्यां स्तुतिपरत्वावसायात्तदवताररूपे नृसिंहे 'विरञ्चिनारायणशङ्करात्मन' इति वचनं सवितरीव स्तुत्यर्थं ब्रह्माद्यात्मत्वं व्यपदिशन्तीति वा नेतव्या' इति;

तदप्यसङ्गतम् । उक्तरीत्या तावद्देशावच्छेदेन तथा मायामपसार्य प्रकटे भगवति सिद्धे सार्वात्म्ये व्यपदेशानवकाशात् । न चात्रावतारत्वम् । तद्गमकस्यात्राभावात् । पौराणिकप्रसिद्ध्या तथाङ्गीकारेऽप्युक्तरीत्या सर्वसामञ्जस्याच्च ।

किञ्च, स्तुतिशब्दोऽपि विचारणीयः । किमसत्समारोपणवाची गुणिसमवेतगुणाभिधानवाची उत्कर्षाधायकगुणवर्णनवाची वा ? नाद्यः, 'वायुर्वै क्षेपिष्ठे'त्यादावव्याप्तेः । शीघ्रगामित्वस्याध्यक्षसिद्धत्वात् । न द्वितीयः, 'ब्राह्मणं द्वेष्टी'त्यादिवाक्येऽतिव्याप्तेः । द्वेषादेरपि तादृग्गुणत्वात् । तृतीयश्चेत्, सिद्धास्तर्हि विभूतयः । व्यपदेशानवकाशेनैवासत्पक्षनिरासात् ।

यत्तूक्तं, 'ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरेरेता जगतः सृष्टिहेतवः । विष्णुर्मन्वादयः कालस्तथैवाखिलजन्तवः । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः । रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्धा प्रलयायैते जनार्दनविभूतय' इत्यादीनि वैष्णवादिपुराणवचनानि विष्णोरनिरुद्धादिपरत्वात्तात्पर्येणापि चरितार्थानि, न मूर्तित्रयपरत्वं व्यवस्थापयितुं क्षमन्ते । तथा हि, शिवस्य रुद्रविष्णुवेधस इव सन्ति तेषामपि व्यूहा जगतां हरणभरणसमुत्पादनेष्वधिकृता वायुसंहितादिप्रसिद्धाः । ब्रह्मणो विराट्कालपुरुषाख्याः, विष्णोः सङ्कर्षणप्रद्युम्नानिरुद्धाख्याः, रुद्रस्य हरमृडभवाख्यास्ते च दक्षमन्वन्तकादिवत्सृष्ट्यादिष्ववान्तराधिकारिणः । एवं च विष्णोस्त्रिमूर्तिपरत्वपराणि वचनानि स्वव्यूहपरत्वपराण्युपपद्यन्ते । तद्व्यूहानामपि सृष्ट्याद्यधिकारादिसामान्याद् ब्रह्मादिव्यपदेशोपपत्तेः । 'एका भगवतो मूर्तिर्ज्ञानरूपा शिवामला । वासुदेवाभिधाना सा गुणातीता सुनिष्कला । द्वितीया रुद्रसञ्ज्ञा स्यात्तामसी शेषसञ्ज्ञिता । निहन्ति सकलं चान्या वैष्णवी परमा तनुः । सत्त्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च सञ्ज्ञिता । जग-

---

पुनस्तत्रत्यमेव दूषयितुमुपक्षिपति यच्चोक्तं 'अथ कैरित्यादि ।

पुनरपि तत्रत्यमेव विष्णुतत्त्वनिर्णायकमतद्वयं दूषणायोपक्षिपति यत्तूक्तं ब्रह्मा दक्षेत्यादि ।

त्पालयते सर्वं सा विष्णुप्रकृतिर्ध्रुवा । चतुर्थी वासुदेवस्य मूर्तिर्ब्रह्मेति सञ्ज्ञिता । राजसी चानिरुद्धाख्या पुरुषः सृष्टिकारिके'ति कौर्मे । तेषां तद्व्यपदेशदर्शनाच्च । एवं ब्रह्मणस्त्रिमूर्तिपरत्ववचनानामप्युपपत्तिरुन्नेया । वायुसंहितायां 'तदण्डेऽस्मिन्विवृद्धेऽभूत् क्षेत्रज्ञो ब्रह्मसञ्ज्ञितः' इति ब्रह्माणं प्रस्तुत्य, 'त्रिधा विभिद्य चात्मानं त्रैलोक्ये सम्प्रवर्तते । स्रजते ग्रसते चैव रक्षते च त्रिभिः स्वय'मित्यादिना तद्व्यूहान् प्रदर्श्य, 'सत्त्वं रजश्च ब्रह्मत्वे कालत्वे च तमो रजः । विष्णुत्वे केवलं सत्त्वं गुणवृत्तिस्त्रिधा विभो' इति तद्व्यूहानां गुणविभागश्लोकेनैतेष्वपि ब्रह्मादिशब्दप्रयोगाच्च ।

ननु तर्हि शिवस्य त्रिमूर्तिपरत्ववचनान्यपि संहाररुद्रव्यूहभूतमृडहरभवपरत्वपराणीति संहाररुद्र एव त्वदभिमतः शिवोऽस्तु । तस्य गुणमूर्तिभ्यः परत्वे न मानमिति चेन्न । 'सृजत्यशेषमीशस्य शासनाच्चतुराननः । तिसृभिर्मूर्तिभिश्चापि पाति चान्ते निहन्ति च । विष्णुः पालयते विश्वं विश्वयोनेर्नियोगतः । स्रजते ग्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः । हरत्येतज्जगत्सर्वं हरस्तस्यैव शासनात् । सृजत्यत्ति च विश्वात्मा त्रिष्वभिन्नस्तु रक्षति' इति शिवपुराणे स्वस्वव्यूहसहितानां ब्रह्मविष्णुरुद्राणां शिवनियोगेन स्वस्वकृत्ये प्रवृत्त्युपन्यासेन, तत्रैव योगेश्वराख्यपूजाविधौ स्वस्वव्यूहावरणकानां तेषां शिवावरणे पूजाविधानेन, योगियाज्ञवल्क्ये तद्रूपोपन्यासेन प्रसिद्धानेव ब्रह्मादीन् प्रस्तुत्य सदाशिवस्य तेभ्यः परत्वकथनेन च तस्य त्रिमूर्त्यतिरेकसिद्धेः ।

एवं तर्हि विष्णुपुराणे 'यस्य प्रसादादहमच्युतोऽसा'वित्यादिब्रह्मवचनाद्विष्णोस्त्रिमूर्त्यतिरेकः कुतो न सिध्येत् ? नहि ब्रह्मवक्तृके वाक्येऽनिरुद्धे अहंशब्दप्रयोग उपपद्यत, इति चेन्न । अहङ्काराभिमानित्वादनिरुद्धस्य 'वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधे'त्यत्रेव तत्रापि नामैकदेशत्वेनाहंशब्दप्रयोगोपपत्तेः । तस्य च वक्तृपरत्वेऽपि 'यस्माच्च मध्ये पुरुषः पुराण'इत्यत्र पुरुषपदस्य प्रद्युम्नपरत्वेनाप्युपपत्त्या ततः श्रुत्यनुरोधिनो विष्णोस्त्रिमूर्तिपरत्वस्यासिद्धेः । विष्णुपुराणे एव पुराणप्रतिपाद्यं नारायणं प्रस्तुत्य, 'स परः सर्वशक्तीनां ब्रह्मणः समनन्तर' इति तस्य जगत्कारणब्रह्मापरत्वोक्तेः ।

भागवतोपक्रमे च, 'तस्मादेकेन मनसा भगवान् सात्त्वतां पतिः । श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यश'इत्यादिना भगवतः श्रवणादिकं विधाय, कोऽसौ भगवानितिजिज्ञासायां, 'सत्त्वं रजस्तम'इत्यादिश्लोकेन

१ स्रष्टृत्वादिव्यपदेशेत्यर्थः ।

सत्त्वगुणोपहितं परमपुरुषांशं श्रेयस्करत्ववादेन प्रागुपक्षिप्तं नियमतो भजनीयत्वोपपादनपूर्वकं भगवन्तं विधाय, 'भेजिरे मुनयोऽथाग्रे'इत्यादिना तद्भजनस्य क्रममुक्तिफलमुपपाद्य, तस्य सकलवेदप्रतिपाद्यत्वादिकमुक्त्वा, 'जगृहे पौरुषं रूप'मित्यादिना तस्य लीलाविग्रहसद्भावं प्रतिपाद्य, 'एतन्नानावताराणां निधानं बीजमव्यय'मिति तस्य सकलवैष्णवावतारमूलविग्रहत्वप्रदर्शनेन सत्त्वोपहितः परमपुरुषांश एव परं विष्णुतत्त्वमिति स्फुटीकरणात् ।

पराशरोपपुराणे 'माहेश्वरपुराणानी'त्यादिना शैवपुराणानां परमशिवसंहाररुद्रोभयपरत्वमुक्त्वा, 'वैष्णवानि पुराणानि समस्तानि महामुने । त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदम् । प्रवदन्ति पुराणे द्वे ब्राह्मे चैवानया दिशे'ति वैष्णवपुराणानां त्रिमूर्त्यन्तर्गते एव विष्णौ पर्यवसानोक्त्या स एव परं विष्णुतत्त्वमिति स्फुटीकरणाच्च । तस्माद् युक्तस्तुरीयः परमशिव एवेति निर्णयः ।

अथवा अस्तु तुरीयकोटावपि नारायणमूर्तिः । नहि तुरीयकोटावेकरूपैव मूर्तिर्ब्रह्मण इति नियमः । तत्रैवाविगीतपुराणप्रसिद्धेः, 'गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविद' इत्याद्यभियुक्तोक्तेश्च भवानीमूर्तेरपि सद्भावात् । इहापि 'परिष्कुर्वन् साम्बं वपु'रिति तथैवाभ्युपगमाच्च । किन्तु परशक्तेर्भवान्या एव पुंरूपो विलासः श्रीवासुदेवः, 'एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले । भोगे भवानी पुरुषे च विष्णुः कोपे च काली समरे च दुर्गे'त्याद्यागमिकोपदेशात् । 'उमा या स हरिः साक्षाद्यो हरिः सा शिवा स्मृते'त्यादित्यवचनात् । 'प्रकृतिस्त्वं पुमान् रुद्रस्त्वयि तद्वीर्यमाहितम् । त्वन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामह' इति ब्रह्माण्डपुराणे, 'नावयोर्विद्यते भेदो मच्छक्तिस्त्वं न संशयः । त्वं चन्द्रमा अहं सूर्यः शर्वरी त्वमहं दिन'मित्यादित्यपुराणे च विष्णोः शिवशक्तित्वव्यपदेशात् । कौर्मवासिष्ठलैङ्गादित्यपुराणादिषु शिवनारायणयोर्भर्तृभार्याभावेन देवदारुवनप्रवेशोपवर्णनात् । तत्प्रकरणे 'या तस्य पार्श्वगा बाला सा पार्वत्यंशजो हरि'रित्याद्युक्तेः । लिङ्गपुराणे—'एष बीजी भवान् बीजमहं योनिः सनातनः । स एवमुक्तो विश्वात्मा ब्रह्मा विष्णुमपृच्छत । भवान् योनिरहं बीजं कथं बीजी महेश्वरः ? एतन्मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि । ज्ञात्वा विविदिषोत्पत्तिं ब्रह्मणो लोकतन्त्रिणः । एवं परमसूक्ष्मार्थे प्रश्नमभ्यवदद्धरिः । अस्मान्महत्तरं भूतं गुह्यमन्यन्न विद्यते । महतः परमं धाम शिवमध्यात्मिनां पदम् । द्वैधीभावेन चात्मानं प्रविभज्य व्यवस्थितम् । निष्कलं सूक्ष्ममव्यक्तं सकलस्तु महेश्वरः । अस्य मायाविधिज्ञस्य अगम्य-

गहनस्य च । पुरा लिङ्गाद्भूद् बीजं प्रथमं त्वादिसर्गिकम् । मम यौनो समासिक्तं तद् बीजं कालपर्ययात् । हिरण्मयमकूपारे योन्यामण्डमजायते'ति विष्णोः शिवक्षेत्रत्वस्फुटीकरणात् । शिवकेशवयोः शिवनाभिलिङ्गशिलायां लिङ्गक्षेत्रयोः सन्निधानेन हरिहरात्मके रूपे हरेर्वामार्धत्वेन च लिङ्गेनास्यार्थस्य स्फुटीकरणात् । 'योऽयं चकास्ति गगनार्णवरत्नमिन्दुर्योऽयं सुरासुरगुरुः पुरुषः पुराणः । यद्वाममर्धमिदमन्धकसूदनस्य देवि त्वमेव तदिति प्रतिपादयन्ती'त्यभियुक्तोक्तेश्च । एवञ्च, तुरीयकोटिनिविष्टस्यापि नारायणस्य भवानीवदेव शिवोपसर्जनत्वादिह व्यवस्थापनीयस्य शिवमूर्तेः सर्वतः परत्वस्याविरोधः ।

'मतद्वयमुपन्यस्तं विष्णुतत्त्वविनिर्णये ।
यदत्र युक्तं तद् ग्राह्यं विमृश्य विबुधोत्तमैः' इति ।

अत्रोच्यते ।

यन्मतद्वयमत्रोक्तं विष्णुतत्त्वस्य निर्णये ।
तद् भ्रान्त्याग्रहमूलत्वान्नोपादेयं सचेतसाम् ॥

तथाहि, उक्तश्रुत्यादिभिः सिद्धे भगवतः परब्रह्मत्वे तत्प्रधानशक्तीनां च त्रयाणां विष्णवादीनां सर्वशक्त्यात्मकत्वे तासां तत्तद्व्यूहपरभावबोधकत्वेनाप्युपपद्यमानैः पुराणवचनसहस्रैरपि तस्य सर्वशक्तिनियन्तुः परत्वानपायात् । 'स परः सर्वशक्तीनां ब्रह्मणः समनन्तर'इति विष्णुपुराणवद् 'गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वर'इति स्वपूर्वलिखितकौर्मवाक्य एव स्वाभिमतस्य परशिवस्य स्वयमेव शक्त्यात्मकत्वस्फोरणाच्च ।

वस्तुतस्तु वैष्णवीयः परशब्दो विजातीयोत्कर्षं बोधयन् शेषित्वे पर्यवस्यति ।'इन्द्रियेभ्यः परा ह्यर्था' इत्यादौ तस्य विजातीयोत्कर्षवाचितायाः सिद्धत्वाद् 'ब्रह्मणः समनन्तर' इत्यनेनाविनाभूतब्रह्मतुरीयपादरूपत्वस्य विष्णौ स्फोरणाच्च । तथाच त्वद्रीत्या विचारे तदभिमतपरशिवापेक्षया तुरीयपादरूपस्यापि तस्योत्कर्ष आयातीति दूरनिरस्ताऽस्मन्मतस्य, ततोऽपि परस्य त्रिमूर्तिपरत्वप्रतिक्षेपवार्ता !

किञ्च, कौर्मे 'गुणातीतासु निष्कले'ति विशेषणबलादेव भगवद्व्यूहसु-

---

दूषयति अत्रोच्यत इत्यादि ।

तत्र पूर्वं 'गुणमूर्त्यपेक्षया न विष्णोस्तुरीयत्वं, किन्तु स्वव्यूहापेक्षये'तिमतं स्वरीत्या दूषयति उक्तश्रुत्येत्यादि । तद्रीतिविचारेण प्रतिबन्दीमाह स पर इत्यादि ।

तदुपन्यस्तवाक्यार्थविचारेण दूषयति । किञ्चेत्यादि ।

ख्यस्य तुरीयत्वसिद्ध्या तदंशानां तत्रोक्तानामवान्तराधिकारित्वस्याशक्यवचनत्वम् । प्रदर्शितवायुसंहितावाक्येऽपि ब्रह्मण एव त्रिधाविभागोक्त्या, अहङ्कारस्यैव वैकारिकत्वाद्यवस्थाभेदेनेव ब्रह्मत्वाद्यवगतेरपि तथा । पुराणानामन्यान्यकल्पानुसारित्वेन वायुसंहिताद्युक्तश्वेतकल्पादिवृत्तान्तस्य वैष्णवाद्युक्तवाराहादिकल्पेषूपगमे सर्वविप्लवापत्तेश्च ।

वस्तुतस्तु कौर्मे विष्णोरेवोत्कर्षः प्रतिपाद्यते इति पुराणविचारावसरे उपपादयिष्यामः । वायवीयशिवपुराणादावपि तथेति च । अतश्चतुर्थांशप्रथमाध्यायेऽपि रैवतं प्रति केशवांशं बलदेवं कन्यावरं वक्तुं 'न ह्यादिमध्यान्तमजस्य यस्य विद्मो वयं सर्वमयस्य धातुः । न च स्वरूपं न परं स्वभावं न चैव सारं परमेश्वरस्ये'ति परमेश्वरमेव प्रस्तुत्य, 'यस्य प्रसादादहमच्युतस्य भूतप्रजासृष्टिकरोऽन्तकारी । क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्मा'दिति वाक्यदर्शनेनात्रावान्तराधिकारप्रसङ्गाभावेनात्र नामैकदेशकल्पनया तदधिष्ठात्रनिरुद्धकल्पनादिकमपि दूरापास्तं ज्ञेयम् । वैष्णवे तथा तदसिद्धेः पूर्वमेव दर्शितत्वात् । तृतीयस्कन्धे पञ्चरात्रे चानिरुद्धस्य मनोऽभिमानितायाः शाङ्करभाष्येऽपि प्रसिद्धत्वेनाहङ्काकाराभिमानित्वकथनस्य जल्पनमात्रत्वाच्च ।

यस्तु श्रीभागवतीयवाक्यसन्दर्भ उदाहृतस्तत्रापि नैवं प्रमेयमिति पूर्वमेवास्माभिः'जन्माद्यस्ये'त्यारभ्य 'प्रपञ्चित'मित्यन्तेन प्रत्यपादीत्यकिञ्चित्करमेतत् । कोऽसौ भगवानिति जिज्ञासाया एवानुदयात् । 'यत् कृतः कृष्णसम्प्रश्न'इत्यादि'हरितोषण'मित्यन्तग्रन्थेनैव पूर्तेः । उदयेऽप्यस्मदुक्तरीतिमन्तरेण कथमपि तदपूर्तेः । यतो यत्रत्योऽयं सन्दर्भ उपन्यस्तस्तत्रैव प्रथमस्कन्धेऽग्रे नारदव्याससंवादोत्तरं व्यासेन मनःप्रणिधाने 'भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले । अपश्यत् पुरुषं पूर्णं मायाञ्च तदुपाश्रयाम् । यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम् । परोऽपि मनुतेऽनर्थं तत्कृतश्चाभिपद्यते । अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे । लोकस्याजानतो विद्वांश्चक्रे सात्त्वतसंहिता'मित्यत्र मायायास्तदनुपाधित्वं पुरुषस्य तन्नियामकत्वं च बोधयित्वा, मायाकृतानर्थोपशामकभगवद्भक्तिप्रतिपादकसात्त्वतसंहितात्मकश्रीभागवतप्रणयनमुक्तमिति तत्र मुख्यतयावतारबीजपुरुषप्रतिपादकत्वगन्धस्याप्यभावात् । किञ्चास्मिन् पुंसि 'एतन्नानावताराणां बीज'मितिकथनात्ततः कुमारादिरामकृष्णान्तावतारकथनोत्तरं 'एते चांशकलाः पुंसः'इति तानुपसंहृत्याग्रे 'कृष्णस्तु भगवान्स्वय'मिति 'तु'नाऽवतारपक्षनिरासपूर्वकं बीजी निर्दिष्टः । अतोऽपि तथा । तस्माद् द्वारत्वे-

१ "प्रसिद्धत्वेन दूषणीयपञ्चरात्रमादायाहङ्कारे"त्यादिपाठोऽपि दृश्यत आदर्शान्तरे ।

नैवास्य पुरुषस्योपक्षेपः, साक्षाद्दर्शनसाधकत्वात् । 'तमसस्तु रजस्तस्मात्सत्त्वं यद्ब्रह्मदर्शन'मिति तत्रैवाभिधानात् । सात्त्विकोपासनया सत्त्ववृद्धेरुक्तत्वाच्च । किञ्च, द्वितीयस्कन्धे ब्रह्मनारदसंवादे ब्रह्मणा'नमस्तस्मै भगवते वासुदेवाय धीमहि । यन्मायया दुर्जयया मां वदन्ति जगद्गुरु'मिति भगवन्तं प्रस्तुत्य, 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थन्ते ममाहमिति दुर्धिय' इति कथनाद्गुणसमष्टिभूताया मायाया अपि यत्र यदीक्षापथे स्थानाशक्तिस्तत्र तद्व्यष्टीनां सत्त्वादीनां का वार्तेत्यतोऽपि तथा ।

एवं पराशरोपपुराणीयेऽपि त्रिमूर्तिनां मध्ये स्थापकस्य हरेर्मूर्त्या नाम्ना च तस्य स्थापकस्य हरेः परं पदं परमविष्णवाख्यं वदन्तीत्यर्थो लभ्यते, प्रायपाठबलात् । एवं 'पुराणे द्वे' इति पुराणद्वयप्रतिपाद्यस्य ब्रह्मणोऽपि ज्ञेयम् । तथा च सर्वेषु पुराणेषु तत्तद्रूपस्त्रिमूर्तिभ्यः पर एव प्रतिपाद्यते इति फलति । तस्मात्तुरीयः परमशिव एवेति न कुतोऽपि निर्णयः । अग्रे स्वयमपि तथाङ्गीकाराच्च ।

यच्च भवान्यास्तुरीयकोटिपातित्वमुक्तं, तत्त्वसङ्गतमेव । तद्ग्रन्थकर्तुरपि स्वस्य तत्र प्रमाणालाभात् । अभियुक्तोक्तिमात्रस्यैव प्रमाणतयोपन्यासेन तथावसायात् । शैवाद्यागमाप्रामाण्यस्य स्वयमेवाग्रे व्यवस्थापितत्वाच्च । यानि तु 'उमा या स हरिः साक्षा'दित्यादीन्यादित्यब्रह्माण्डकौर्मवासिष्ठलैङ्गवचनान्युपन्यस्तानि, तान्यपि तत्तत्पुराणप्रतिपाद्यसंहाररुद्रव्यूहभूतमृडाख्यस्य विष्णुप्रभृतिनामवाच्यतायाः स्वयमेव पूर्वमते आविष्कृतत्वात्तत्पराण्येव सन्ति, न भगवत उमांशत्वं सम्भावयितुमपि शक्नुवन्तीति यक्षबलिन्यायमनुहरन्ति ।

---

'शिवोपसर्जनत्वेन तुरीयत्व'मिति द्वितीयं मतं यच्च भवानीत्यादिनोपक्षिप्य दूषयति । तत्त्वसङ्गतमित्यादि । अत्र भवान्याः किं भवानीरूपेण तुरीयकोटिपातित्वं, उत उमात्मकहरिरूपेण, उत मायोपाधिरूपेणोत चिच्छक्तिरूपेणेति चतुरः पक्षान् हृदिकृत्याद्यं पूर्वं दूषयति तद्ग्रन्थेत्यादि । विष्णोस्तुरीयत्वं प्रतिवादिसम्मतमिति विष्णोरुमांशत्वं, उमायास्तेन रूपेण तुरीयत्वं निर्बाधमित्याशयकं द्वितीयं दूषयति यानीत्यादि । शैवपुराणेषु मृडस्य विष्णुत्वाद् वायुसंहितावदादित्यपुराणादीनामपि शैवत्वात्तत्सिद्धोमारूपस्य विष्णोर्मृडत्वेनावान्तराधिकारिसात्त्विकत्वमेव, न तुरीयत्वं; मुख्यसत्त्वमूर्तिपरामर्शेऽपि तथात्वमतस्तथेत्यर्थः । एतेन शिवनाभिलिङ्गशिलायां लिङ्गक्षेत्रसन्निधानमपि शालग्रामेषु नानामूर्तिदर्शनात्तस्यां मायोपहितमूर्तिसान्निध्यबोधनमात्रेण चरितार्थं, हरिहरस्वरूपे हरेर्वामभागस्थत्वं च मृडाख्येन विष्णुना चरितार्थमिति बोधितम् ।

किञ्चादित्यपुराणं ब्रह्मपुराणस्य खिलं, 'इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तम'मिति तत्रैव वाक्यात्। ब्राह्मे च भगवानेव प्रतिपादितः। माया तूपान्ते स्वल्पेन ग्रन्थेनोक्तेति स भागोऽवशिष्टो मायाबोधको विस्तारेण सौरे निर्दिष्टः। स एव कौर्मलैङ्गवासिष्ठादिष्वनूद्यते।

किञ्च, अमृतमन्थने दैत्यवञ्चनाय यन्मोहिनीरूपं प्रकटितं मायामयं, तद्दिदृक्षया नारायणाश्रमागतस्य साम्बसदाशिवस्य च तद्दर्शनेन कामान्धतया तामनुधावतो निरपत्रपस्य रेतःपाते तत्र तत्र जाते'स्वां प्रकृतिं गत' इत्यष्टमस्कन्धे निरूपितस्य यन्मायामयं रूपं प्रदर्शितं, तस्यैव मायोपाधिकपत्नीत्वमिति स एवोक्तो यक्षबलिन्याय इति स्थितिः।

किञ्च, वाराहारम्भे आदिकृतवृत्तान्ते नारायणादुमोत्पत्तिमुक्त्वा, तत 'उमेति सञ्ज्ञया यत्तत्सा दारत्वे व्यवस्थिता। ओमित्येकाक्षरीभूता ससर्जेमां महीं तदे'ति कथनात् सा भगवद्भोग्या, भोगोत्तरं रुद्राय दत्तेति ज्ञायते। यथा राज्ञा दासी सेवकाय दीयते! उमा रुद्रौ चांशावित्यपि तत्र सिद्धम्।

किञ्च, ब्रह्मवैवर्तश्रीकृष्णजन्मखण्डीयगोलोकारोहणाध्याये पार्वत्यैव भगवन्तं स्पष्टमुक्तं 'एकाहं राधिकारूपे'त्युपक्रम्य स्वावतारानुक्त्वा, 'तवाज्ञया दक्षकन्या सती सत्यस्वरूपिणी। योगेन त्यक्त्वा देहं च शैलजाहं तवाज्ञया। त्वया दत्ता शङ्कराय गोलोके रासमण्डले'इति वाक्यात्। तेन हरिवंशादावप्येवमेव ज्ञेयम्।

अतोऽत्याग्रहदोषेण सच्छास्त्राप्ययदीक्षितैः॥
यस्मादत्राप्यसत्प्रोक्तमिदमप्पयदीक्षितैः॥ १॥
तस्मात्पुराणैर्वेदान्तैः सोपायव्यासदर्शनैः॥
विमृश्य वैष्णवं तत्त्वं बोध्यमेवं सुबुद्धिभिः॥ २॥

---

तृतीयं दूषयति किञ्चादित्येत्यादि।

स एवोक्तो यक्षबलिन्याय इत्यादि। तथा च साधितेऽपि मायोपाधिरूपेण तुरीयत्वे मायोपहितस्य तापनीयाथर्वशिखयोरपरत्वेनैव सिद्धत्वात्तथेत्यर्थः।

एवमेव चतुर्थं दूषयति किञ्च वाराहेत्यादि। 'ओमित्येकाक्षरीभूते'त्यनेन सकलप्रणववाच्यत्वमुक्त्वापि तयोरंशत्वमेव तत्र पुराणे साधितमतस्तथेत्यर्थः।

भोग्यत्वं पूर्वतापनीयमन्त्रेण सिद्धमपि पुराणेनोपबृंहयति किञ्चेत्यादि। हरिवंशादावपि तथेति। अवतीर्णे भगवति नानांशनिवेशस्य वक्तव्यत्वाच्छिवपूजादिरूपे कार्ये

---

१ "उमाया रुद्राय दानं पार्वत्या स्वयमेव भगवन्तं प्रत्युक्त"मिति खपुस्तके।

तततो मुख्यविभूतित्वं ज्ञात्वा परशिवेऽपि च ॥
काभ्यश्चिद् ब्रह्ममूर्तिभ्यो निर्णयाऽस्यादिमूर्तिता ॥ ३ ॥
भैरवाद्या यथा तस्य नृसिंहाद्या यथा हरेः ॥
ब्रह्मविष्णुहरा विष्णोः कलाभेदास्तथा स्थिताः ॥ ४ ॥
तेभ्योऽप्यस्यादिमूर्तित्वं ज्ञेयमव्याकृतत्वतः ॥
चतुर्थस्कन्धगदितशाङ्करीयवचःस्थितात् ॥ ५ ॥
'स्वकर्मशुद्धः शतजन्मभिः पुमान् विरञ्चितामेति ततः परं हि माम् ॥
अव्याकृतं भागवतोऽथ वैष्णवं ततो यथाहं विबुधाः कलात्यये॥६॥'
इत्येवं यद्यपीशस्य श्रीवत्साङ्कितवक्षसः ॥
अक्षरादपि चोत्कर्षो निर्व्याजः सम्प्रकाशते ॥ ७ ॥
तत्रेतरेभ्यो देवेभ्य आधिक्यं केन गण्यते ? ॥
शिष्टाकोपोदितान्न्यायात् प्रमाणानां बलाबले ॥ ८ ॥
प्रमेयवशतः सिद्धे तस्माद्यः सर्वतोऽधिकः ॥
तदाश्रितानां वाक्यानां प्रबलत्वावधारणात् ॥ ९ ॥
तन्नियुक्तेषु तद्दत्तवरासैश्वर्यभागिषु ॥
तत आधिक्यसाम्यस्य गुणवादत्वनिश्चयात् ॥ १० ॥
तत्रापि बीजं तत्पूजा नो चेत्सा प्रचरेन्न हि ॥

---

उमांशं तं प्रकटीकरोतीति तथेत्यर्थः । तेन द्विविधमपि त्वत्साधितं तुरीयत्वं न तत्त्वनिर्णायकं अपि त्वस्मदुक्तानुपहितपररूपमेव तथा । तेनैव च तुरीयत्वमपीति भावः ।

**कारिकासु** यद्यपीति पदस्याग्रे तथापीत्यनेनान्वयो बोध्यः ।

**शिष्टाकोपोदितान्न्यायादि**ति । पूर्वतन्त्रे स्मृतिपादे चिन्तितम् । 'वेदं कृत्वा वेदिं करोती'त्यादावानन्तर्यं श्रावितम् । तत्र मध्ये क्षुते जाते तन्निमित्तं 'क्षुत आचामे'दिति स्मृतमाचमनं कार्यं न वेतिसंशये, श्रुतेरन्यानपेक्षप्रामाण्यतया बलवत्त्वस्य पूर्वं साधितत्वात् , स्मृतेः श्रुत्यपेक्षत्वे नैर्बल्येन श्रुतिबाधनासामर्थ्यात्तन्न कार्यम् । एवं चानन्तर्यकालप्रयोगप्राशुभावा अपि समञ्जसा भवन्तीति पूर्वः पक्षः । उत्तरस्तु, प्रमाणस्वरूपविचारेण नैर्बल्येऽपि प्रमेयविचारेण स्मृतिर्बलीयसी । स्मृतिर्हि पदार्थविधायिका, श्रुतिस्तु तद्धर्मान् कयाचिद्विधया बोधयति । 'धर्मास्तु धर्मिणमपेक्षन्त ' इति पदार्थापेक्षया निर्बला इति श्रुतेरत्र नैर्बल्यमिति तस्मान्न्यायादित्यर्थः ।

**अवधारणं** निश्चये हेतुः ।

किमर्थोऽयं गुणवाद इत्यतस्तत्फलमाह तत्रापीति ।

तथाच सति कार्याय दत्तैश्वर्यं वृथा भवेत् ॥ ११ ॥
यथा समत्वश्रवणमग्निष्टोमाग्निहोत्रयोः ॥
आकाङ्क्षौत्कण्ठ्यजननादशक्तस्य नियोजकम् ॥ १२ ॥
तथा तत्साम्यकथनमन्यपूजानियोजकम् ॥
'यो यो या'मिति गीतोक्तसन्दर्भेणावगम्यते ॥ १३ ॥
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥
देवैर्ब्रह्मादिभिस्तत्र त्वत्यरिच्यत भारतम् ॥ १४ ॥
इति वेदेभ्य उत्कर्षो भारतस्य स्मृतो यथा ॥
विशेषप्रतिपत्त्येकहेतुतोपाधिसंश्रयः ॥ १५ ॥
' भारतव्यपदेशेन आम्नायार्थश्च दर्शितः ' ॥
इत्यादिवचनैस्तद्वद्रामतारकदेशनात् ॥ १६ ॥
रुद्रस्यापि समुत्कर्षो गुरुत्वोपाधिसंश्रयः ॥
इत्यविज्ञाततत्त्वानां विचारश्रान्तचेतसाम् ॥ १७ ॥
दुःसङ्गदुर्मताभ्यासदृप्तानां दर्पहारिका ॥
प्रक्रिया दर्शितास्माभिरनेकश्रुतिमूलिका ॥ १८ ॥
तथा विभ्रान्तचित्तश्चेत् कश्चित्प्रत्यवतिष्ठते ॥
तदर्थमन्यदप्यत्र वदाम्यनतिविस्तरम् ॥ १९ ॥

तथाहि । या ताव'न्ननु हिरण्यगर्भ'इत्यादिनाशङ्क्य 'बहूनां विकल्पे'त्या-

---

पूजायाः कथं गुणवादप्रयोजकत्वमित्याकाङ्क्षायां तदुक्तेनैव दृष्टान्तेनोपपादयति यथेत्या-दि । 'प्रजापतिः यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं चे'ति यागसृष्टिं प्रक्रम्य, ' तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोम ' इत्यत्र समत्वश्रवणमित्यर्थः । अशक्तस्येति । अग्निष्टोम-करणाशक्तस्य । तदुक्तस्याधिक्यवादस्यानुवादकपूर्वकं तात्पर्यमाह भारतमित्यारभ्य वचनै-रित्यन्तम् । प्रकृतेऽतिदिशति तद्वदित्यादि ।

एवं कारिकाभिस्त्रयोदशश्लोकस्थास्तदीयकारिका दूषयित्वा, चतुर्दशे 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीद् विश्वस्मादिन्द्र उत्तरः अग्निरग्रे प्रथमो देवाना'मि-त्यादौ देवान्तरैश्वर्यमपरिच्छन्नं श्रूयत इत्याशङ्क्य, बहूनां विकल्पेन न सर्वेश्वरत्वं, वस्तुनि विकल्पायोगात्; नापि समुच्चयेन, परस्परेश्वरत्वापत्तेः; नापि कल्पभेदेन, कालपरिच्छेदेन सर्वेश्वरत्वहानिप्रसङ्गात्; अतस्तादृशस्थल उपबृंहणेन निर्णय'मिति यदुक्तं, तत्प्रतिकूल-यितुमभिनन्दति या तावदित्यादि ।

दिना 'व्यासवचनाच्चे'त्यन्तेन निर्णयरीतिश्चतुर्दशपद्ये प्रदर्शिता, सा तु शिष्टसहृदयङ्गमा; परन्तु न तया तदभिमते परत्वविश्रान्तिः । यतोऽथर्वशिखायाः सोपबृंहणाया अपि यथा तात्पर्यं तथा पूर्वमेवोपपादितमिति तयेतरार्थासिद्धेः । तथा शम्भ्वीशानादिशब्दैरपीत्यपि । अतो भवदभिमतस्य तुरीयस्यापि जन्यतयैव सिद्धत्वेन कारणकोटावनिवेशादथर्वशिखायाः पुरोवादत्वेऽपि न तदिष्टसिद्धिः ।

किञ्च, 'मायिनं तु महेश्वरं' 'उमासहायं परमेश्वर'मित्यादिश्रुतिभिर्मायोपहित एव परमेश्वरो भवतामभिमतः, स च बिम्बेश्वरवादप्रतिबिम्बेश्वरवादान्यतरोपगमेन । तत्र प्रतिबिम्बत्वे तापनीयोपपादितदिशा कार्यत्वे एव पर्यवसाने अन्तवत्त्वेन, नित्यत्वोपगमेऽपि तस्य बिम्बानुविधायित्वनियमेन तद्बिम्ब एव परत्वपर्यवसितिर्नास्मिन् । बिम्बत्वेऽप्यथर्वशिखाया अनुत्कृष्टविद्यात्वस्य दर्शितत्वात्तत्र जन्यतया प्रतिपादितस्य तुरीयस्य मुख्यतया प्रतिपाद्यस्य शिवस्य च नोत्कृष्टरूपत्वमित्युभयथापि निष्फलो व्यवसायः । अत एव प्रथमश्लोकाभासोक्ते, 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्ये'ति, 'ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः । स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठति शङ्करे' इति कौर्मादौ प्रोक्तेष्वप्यङ्गाव्ययाख्येषु गुणेषु न यशःश्रियोरुक्तिः । अथर्वशिरसि च भगवच्छब्दस्य नोक्तगुणवत्तया निरुक्तिः । भगवति तु 'ऐश्वर्यस्य समस्तस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणे'ति वैष्णवाग्नेययोस्तदुभयोक्तिरिति युज्यते ।

यत्तु ज्ञानघनः 'ऐश्वर्यस्ये'ति वाक्यमुपन्यस्य, 'सोऽस्यास्तीति भगवच्छब्दः परमपुरुषे वर्तत' इत्युक्त्वा, ईश्वरोग्रशिवसर्वज्ञकामरिपुशब्दैः श्रीव्यतिरिक्तान् गुणान् समर्थयित्वा, श्र्यर्थं 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम् । पदं यद् विष्णोरुपमं निधायीति' दाशतयर्चा च श्रियः समर्थनेन षड्गुणवत्तया शिवं भगवत्त्वेनोक्तवान् ।

तदप्यपेशलम् । वायूक्तब्रह्माण्डपुराणविरोधे नाममात्रस्य गुणासमर्थकत्वात् । तत्रोपक्रम एव 'प्रपद्ये देवमीशान'मिति नमस्कृत्य, स्वरूपगुणादीन् वदता सूतेन 'ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टय'मिति चतुर्णामेव सहसिद्धत्वोक्तेरन्येषामागन्तुकत्वेनाध्रुवत्वात्तदसिद्धेः । मन्त्र एव जन्माङ्गीकाराच्च । न चोक्तश्रुतेर्महालिङ्गप्रादुर्भाव-

---

मायोपहितस्य परमेश्वरत्वं श्रुतिभिर्निराकृत्य युक्त्या निराकरोति किञ्चेत्यादि ।

गमकत्वं, 'नारायणाद्रुद्रोऽजायत' इति 'त्र्यक्षः शूलपाणिः पुरुषोऽजायते'त्यादि-श्रुतिभिर्नारायणाज्जन्मसिद्धौ महालिङ्गाकृतिप्रादुर्भावस्यैव जनिमत्त्वेनाङ्गीकारे गमकाभावात्। मन्त्रार्थस्तु—हे रुद्र, तव जनिम चारु सुन्दरं, चित्रं अद्भुतम्। तत्र हेतुः यद् यस्माद्, विष्णोः सकाशात्। उप मण्डपसमीपे, मा लक्ष्मीर्यस्य 'बिभ्रच्छ्रिय'मिति श्रुतेः। तादृशं पदं स्थानं निधायि नितरां स्थापितम्। तस्मात्तव श्रयथं मरुतस्तव पुत्राः देवविशेषाः, मर्जयन्त्यर्चयन्तीति बोध्यः।

किञ्च, अथर्वशिरसि रुद्रे भगवन्महेश्वरशब्दयोः प्रवृत्तिरेवं श्रूयते। 'अथ कस्मादुच्यते भगवान्महेश्वरो यस्माद् भक्ता ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजति च यः सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते, तस्मादुच्यते भगवान् महेश्वरस्तदेतद्रुद्रचरित'मिति।

नारायणकृते तद्व्याख्याने च भक्ता भजनकर्ता, तस्यैवार्थो ज्ञानेनेति। यद्वा भक्तान् ज्ञानेन भजति, सेवतेऽनुगृह्णाति चेति भगशब्दार्थः। वाचं वेदाख्यां संसृजति ब्रह्मादिमुखे विसृजति स्वमुखादिति वान्शब्दार्थः। महेश्वरशब्दार्थमाह य इति। भावान् विषयान् परित्यज्य त्याजयित्वा, देवमुपदिश्य, तदर्थबोधनद्वारा विषयवैरस्यमुत्पाद्य, अधिकारिणं कृत्वा, दत्तेनात्मज्ञानेन मनःस्थिरतायै चाष्टाङ्गयोगजन्यैश्वर्येण च 'भक्तान् महति ब्रूया'दितिन्यायेनेदं निर्वचनमिति व्याख्यातम्। तथाच भगश्चासौ वाँश्चेति रुद्रे भगवच्छब्दस्य श्रौती व्युत्पत्तिः। सा च पूर्वोक्तरीत्या भगवन्महिमरूपत्वमुपदेश्यान् प्रति गुरुत्वं च दृढयतीति तामभिभूयान्यथावदन्नतिसाहसिक एवेति दिक्।

एवञ्च, यत्तेन सर्वक्रतुशेषित्वात् सर्वोत्कृष्टत्वं शिवस्य साधितं, तदपि न निर्व्याजं तत्र सिध्यति, सर्वक्रतुषु परमपुरुषस्य वासुदेवस्यैव शेषित्वात्। 'अहमात्मा गुडाकेशे'ति, 'देवा नारायणाङ्गजा' इति, 'यक्ष्ये विभूतीर्भवत' इति 'सम्प्रचरत्सु नानायागेषु विरचिताङ्गक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थं नियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु यजमानो यज्ञभाजो देवांस्तान् पुरुषावयवेष्वभ्यध्याय'-दित्यादिवाक्यैर्विभूतीनां अवयवानामेव तत्रेज्यत्वात्तद्वारान्तर्यामिणि विभूतिमत्यवयविन्येव भोक्तृत्वपर्यवसायात्, 'नाहं तथापि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदं हुतभुङ्मुखेने'ति यज्ञभोगलिङ्गाच्च तस्यैव शेषित्वसम्भवात्। विभूतिष्वपि याग इन्द्रस्यैव मुख्यत्वं, 'ऐन्द्रो यज्ञ आस१स्थातेरि-

त्याहु'रित्यादिश्रुतेः । न तु रुद्रस्य, तस्य सर्वयज्ञपतित्वगमकानुपलम्भात् । न च 'गाथपतिं मेधपतिं रुद्र'मिति मन्त्रवर्णाद् रुद्रस्य सर्वयज्ञपतित्वं साधयिष्याम इति वाच्यं, सर्वशब्दाभावात् । 'व्रीहीणां मेध' इत्यादौ पवित्र्यसारादिवाचित्वस्यापि दर्शनेन मेधशब्दस्य सन्दिग्धवृत्तिकत्वाच्च । न च मेधानां पतिरिति विग्रहे नानुपपत्तिरितिवाच्यं, 'आ वो राजानमध्वरस्य रुद्र'मिति भवदुपदर्शितमन्त्रान्तरेऽध्वरस्येत्येकवचनेन तथाविग्रहस्य कर्तुमशक्यत्वात् । न चात्रैकत्वं ग्रहैकत्ववदविवक्षितमितिवाच्यं, अनूद्यगतसङ्ख्याया एवाविवक्षितत्वस्य न्यायात्सिद्ध्या स्मर्तव्यगतायास्तस्यास्तथात्वाभावात् । नापि यज्ञियहविःशेषित्वेन यज्ञशेषित्वसिद्धिः, हेत्वभावात् । 'इमं पशुं पशुपते ते पशुपतेः पशवो विरूपा' इत्यादीनां पशुपतित्वमात्रबोधकत्वेन शेषित्वाबोधकत्वात् । तादर्थ्यस्यैव शेषशेषिभावनियामकत्वात् । 'शेषः परार्थत्वा'दिति पारमर्षलक्षणात् । अतो ये तत्पतिकास्तेऽपि न तच्छेषाश्चेत् कुतस्तरामतत्पतिकानां हविषां शेषित्वं ? 'त' इति तु न चतुर्थी,मन्त्रस्यानुज्ञालिङ्गत्वेन तत्र षष्ठ्या एवौचित्यात् । पूर्वमन्त्रे 'प्रजापते'रिति षष्ठ्या तथानिश्चयात् । 'प्राजापत्या वै पशवस्तेषां रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रति प्रोच्यालभत आत्मनोऽनौव्रस्काये'तिब्राह्मणेऽप्यनपराधायानुज्ञामात्रस्य तत्सम्बन्धित्वेनोक्ततया तादर्थ्यस्य ततोऽप्यलाभात् । उपाकरण 'उपो देवान् देवीर्विश'इति मन्त्रस्यापि कल्पे विनियुक्तत्वेन, तत्राग्नीषोमादीनामपि प्राप्तत्वेन पशौ केवलरुद्रशेषत्वस्याशक्यवचनाच्च । किञ्च, पशुपतित्वमपि न तस्य स्वाभाविकं, किन्तु वरप्राप्तम् । 'सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिरिति स एतमेव वरमवृणीत पशूनामाधिपत्यं, तदस्यैतत्पशुमन्नाम पशुमान् भवति योऽस्य तदेवं नाम वेदेति, देवा एनं मृगयुमिति वदन्ति, एतेनैव स उभयेषां पशूनामाधिपत्यमवृणुत' इति श्रुतिभिर्वारत्रयं वरयाचनेन प्राप्तत्वबोधनात् । न चैकेनैव वरेण प्राप्ते पाशुपत्ये पुनःपुनर्वरणस्यासङ्गतत्वादयमर्थवादोऽसन्तमेवार्थं ब्रूत इति गुणवादत्वान्नायं स्वार्थे प्रमाणमिति वाच्यम् । 'अब्रवीद्वृणीतावृणुते'ति भूतार्थप्रयोगबाधापत्तेः । यथाक्रममेतेषां वाक्यानां त्रिपुरदाहप्रजापतिशासनोपादानमृगयुवेशपरिग्रहोपादानविषयतायाः स्वयमेवोक्तत्वात्, तथैव दैत्यमनुष्यदेवप्रसङ्गावगमादेकैकवरेण देवासुरमानुषपाशुप-

१ 'ग्रहं मार्जये'दित्यत्रेति शेषः । २ अनपराधायेत्यर्थः ।

त्यस्य क्रमाल्लाभेन विरोधाभावे गुणवादत्वकल्पनस्याप्रयोजकत्वात्। अत एवोपाकरणोत्तरहोममन्त्रेषु, 'येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदां? निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्त्वि'ति द्वितीये मन्त्रे येषां पशूनां पशुपतिरीश्वरस्तेषां पशूनामध्ये स्वामिनः सकाशान्निष्क्रीतोऽयं पशुर्यज्ञयोग्यं भागत्वं प्राप्नोत्वित्युच्यते । यदि सर्वेषामीशः स्यात्तर्हि येषामिति न वदेत्। यदि च सर्वदा ईशः स्यान्निष्क्रीतत्वेन न तन्निवारयेत्। एवं सति ये अभागवतास्तेषामेव पशुत्वाद्विपात्सु तेषामेव पतिः। 'श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः। न यत्कर्णपथोपेतो जातु नाम गदाग्रज'इति द्वितीयस्कन्धात् । अत एव पञ्चमस्कन्धे भरतचरिते भद्रकाल्यर्थं जडस्यालभन आरब्धे भद्रकाल्युच्चाटनोक्तिरपि सङ्गच्छते ।

स्यादेतत्। 'अयं सोमः कपर्दिने घृतं न पवते मध्वि'त्यभिषवमन्त्रे तादर्थ्यश्रवणात्सोमस्य तच्छेषत्वं दुर्निवारं, 'रुद्र आहुत' इति हूयमानावस्थस्य सोमस्य तादात्म्यप्रतिपादनमुखेन रौद्रत्वकथनाच्च; एवं 'रौद्रं गवी'ति मन्त्रे गव्यस्य रौद्रत्वमुक्तं, तेन तस्यापि तादर्थ्यं कल्प्यं, इत्येवं हविरन्तरशेषित्वसिद्धौ तद्दृष्टान्तबलेन पशुशेषित्वमपि साधनीयमिति चेत् ;

अप्रयोजकमेतत्। 'अयं सोमे'ति मन्त्रस्य पवमानसोमदेवताकत्वेन रुद्राप्रकाशकत्वात्। 'कपर्दिन' इत्यस्य 'कल्याणमुकटाये'ति सायणभाष्ये व्याख्यानात्। रूढेराग्रहेऽपि 'अयं ते आघृणे सुतो घृतं न पवते शुची'ति मन्त्रान्तरेण पूषणेऽपि श्रवणात्तेनास्य तौल्ये भवदभिमतासिद्धेः। 'रुद्र आहुत' इत्यस्य 'प्रजापतिर्मनसान्धोऽछेत' इत्यनुवाके पाठात् सोमस्य तत्तदवस्थासु तत्तदात्मकतावगम्यते, इति हुतस्य रुद्रात्मकताया एव सिद्ध्या रौद्रत्वासिद्धेश्च। 'वैश्वदेव उन्नीत' इत्यनेन सर्वदैवत्यत्वप्रासेश्च। 'रौद्रङ्गवी'त्यपि सम्बन्धितद्धितो न तु देवतातद्धितः, रुद्रस्य पशुपतित्वेन गोनिष्ठत्वदशायां गव्यस्य तत्सम्बन्धित्वौचित्यात्। देवतातद्धितत्वेऽपि तत्तदवस्थायां तत्तद्दैवतत्वस्य 'वायव्यमुपावसृष्टमाश्विनं दुह्यमानं सौम्यं दुग्ध'मित्यादिना तत्रैवाम्नानात्तस्याकिञ्चित्करत्वात्। अत एव पशुबन्ध एव तदनुज्ञापेक्षा न तु यागान्तर इत्यपि युज्यते।

ननु सर्वकर्मारम्भजप्यः प्रपदाख्यो मन्त्रः सामगैराम्नायते, 'तपश्च तेजश्चे'त्युपक्रम्य 'कर्माधिपतये नम'इत्यन्तम्। अत्र 'विरूपाक्षोऽसी'ति प्रस्तुत्य, 'त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि, तन्मे समृध्यतां, तन्म उपपद्यता'मिति तत्तत्कर्मारम्भेषु देवाभ्यनुज्ञानं कार्यते। एवं सति कथं न सर्वत्रानुज्ञापेक्षेति चेत्,

अस्त्वेवम्। तथापि प्रपदमन्त्रोपसंहारे ‘विरूपाक्षाय ब्रह्मणः पुत्राय नमः’ इति ब्रह्मपुत्रत्वं विरूपाक्षस्य श्राव्यते। तथा सति तस्य स्वतन्त्रेश्वरत्वादिकं भवत्साधितं दूरं निरस्यत इति ‘वृद्धिलोभेन धावतो मूलस्य हानि’रित्यपि ज्ञेयम्।

किञ्च, अनुज्ञाकारणमात्रेण न तच्छेषित्वसिद्धिः। अभ्यनुज्ञाप्रार्थनमात्रेण शेषित्वस्य दुःसम्पादत्वात्। अन्यथा ‘ब्रह्मन् प्रवर्ग्येण प्रचरिष्याम’ इति प्रार्थनया ब्रह्मण ऋत्विजोऽपि तच्छेषित्वापत्तेः। नाप्यनुज्ञातृत्वेन, ‘होतर्घर्मम-भिष्टुही’त्यनुज्ञातुरध्वर्योरपि तदापत्तेः। नापि तत्पतित्वेन, दत्तोत्तरत्वात्। एवं सति ‘रौद्रीं रोहिणीमालभेताभिचरन् रुद्रमेव स्वेन भागधेयेनोपधावतीति, अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्र’ इत्याद्युक्तेषु यागेष्वेव तस्य शेषित्वम्। मन्थिग्रहे च, ‘एष ते रुद्रभागोऽयं निरयाचथास्तं जुषस्वे’तिमन्त्रवर्णात्। एतद्ब्राह्मणे ‘हीयते’ इत्यस्य ‘विद्यते’ इति व्याख्यानमप्ययुक्तम्। ‘ओहाक् त्यागे’ इति त्यागरूपस्य धात्वर्थस्य बाधात्। दक्षाध्वरे यज्ञशिष्टस्य रुद्रभागत्वेन दानस्य स्मरणाच्च। ‘उच्छेषणभागो वै रुद्र’इति श्रुतेश्च। ‘मम वा इदं मम चैवास्त्वि’तिबह्वृचब्राह्मणमप्यनेनैव व्याख्यातं ज्ञेयम्। एतद्ब्राह्मणे च ‘पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै मह्यममानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम वैतदिति तस्माद्यज्ञवास्तुनाभ्यवेत्यँ सोऽब्रवीद्यज्ञे मा भजाथ ते पशून्नाभिमँस्य इति तस्मा एतं मन्थिनः सँस्रावमजुहात्ततो वै तस्य रुद्रः पशून्नाभ्यमन्यत यत्रैतमेवं विद्वान्मन्थिनः संस्रावं जुहोति न तत्र रुद्रः पशूनभिमन्यत’ इति नाभानेदिष्टोपाख्यानस्योभयत्र समानत्वात्। पशुष्वपि मूषकस्तदीयः। ‘आखुस्ते रुद्र पशुस्तं जुषस्वे’तिमन्त्रवर्णात्। यच्चात्र व्याख्यातं, ‘खन अवदारणे,’ महीमहीधरादिकमाखनतीत्याखुर्वराहः, पारम्पर्येण महावराहो विष्णुरित्यर्थ इति ;

> इमं व्याख्यानरोगं तु रूढिरेव भिषज्यति ॥
> यन्महेश्वरशब्दस्य सञ्ज्ञात्वाय त्वयादृता ॥ १ ॥

किञ्चैतद्भाष्ये हे रुद्र, मूषकस्ते प्रियः पशुरतस्तं सेवस्वेति रूढिमेव पुरस्कृत्य व्याख्यातम्। ‘प्रतिपूरुषमेककपालान्निर्वपत्येकमतिरिक्त’मिति साकमेधपर्वणि त्र्यम्बकेष्टौ यावन्तो गृह्यास्तावतां रक्षणाय तावतः पुरोडाशानुक्तातिरिक्तस्य विनियोगं कल्पकार आह ‘आखूत्कर एकं पुरोडाशमुपवपत्यसौ पशुरिति वा द्वेष्यं मनसा ध्यायन् यदि न द्विष्यादाखुस्ते पशुरिति ब्रूया’दिति। तच्च

व्याख्यातं वेदभाष्ये । 'आखूत्करो मूषकैर्बिलादुद्धृतः पांशुराशि'रिति । शिष्टाचारोऽपि तथैव, 'ब्राह्मणमपि यदि न द्विष्यात्, आखुस्ते पशु'रिति ब्रूयादिति । यद्येतेषु कश्चिदपि तथाभिप्रेयाद्वराहशब्दं ब्रूयाद्वराहोत्खाते वा पुरोडाशमुपवपेत् । अतोऽभिमानमात्रमेतत् ।

प्रकृतमनुसरामः । पञ्चदशे श्लोके,

> यत्तु देवान्तरैश्वर्यं कर्मतन्त्रादिषूदितम् ॥
> शिवस्य मोक्षशास्त्रेऽत इदं तेभ्यो बलोत्तरम् ॥ १ ॥
> इति प्राबल्यमाश्रित्य शिवोत्कर्षो य इष्यते ॥
> सोऽपि दत्तोत्तरस्तापनीयस्योत्कर्षदर्शनात् ॥ २ ॥
> तेनापरिमितैश्वर्यमव्याजं सुस्थिरं हरौ ॥
> शिवस्यापेक्ष्यैश्वर्यमन्येषां तु न केनचित् ॥ ३ ॥
> उररीक्रियते तेन तन्निकर्षकथा वृथा ॥
> अतः श्रुतिपुराणेषु नानानामाङ्कितेष्वपि ॥ ४ ॥
> परत्वं येषु कथितं तद्धरौ निरुपाधिके ॥
> ब्रह्मण्येवावगन्तव्यं लिङ्गैः श्रुत्यर्थनिश्चयात् ॥ ५ ॥

व्यासैस्तथा तल्लिङ्गाधिकरणादिषु निर्णयात् । अतो निरर्थकः—'अस्य लोकस्य का गति'रिति तल्लिङ्गाधिकरणविषयवाक्यमप्युपन्यस्य शिवोत्कर्षार्थ-

---

एवं प्रसङ्गात् ज्ञानघनोक्तं दूषयित्वा पुनरप्यपेयमतमेव दूषयामीत्याह प्रकृतमनुसराम इति ।

पञ्चदशे श्लोके यत्तेन शिवस्योत्कर्षो देवान्तरेभ्य उक्तस्तस्य सव्याजत्वं देवान्तरापकर्षस्य वृथाकथात्वं च कारिकाभिराह यत्त्वित्यादि ।

तल्लिङ्गाधिकरणादिष्विति । समन्वयाध्यायस्थेषु 'आकाशस्तल्लिङ्गात्' 'अत एव प्राण' इत्यादिषु । विषयवाक्यं तु, 'अस्य लोकस्य का गतिरिति, आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ती'त्यादि । द्वितीयस्य विषयवाक्यं तु, 'कतमा सा देवता प्राण इति होवाच, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ते'ति । द्वयमपि छान्दोग्यस्थम् । अत्र च रूढ्या भूताकाशप्राणौ ग्राह्याविति पूर्वः पक्षः । भूतोत्पत्त्यादिलिङ्गस्य भूताकाशकौष्ठ्यवाय्वोरनन्वयाद् ब्रह्मैव लिङ्गबलान्निर्धार्यते । श्रुतिस्तु सङ्कुचितत्वाद् भूताकाशप्राणावभिधत्ते, न त्वसङ्कोच इति न तद्विरोध इति । एतेन सिद्धमाह अतो निरर्थक इत्यादि ।

---

१ ज्ञानघनोक्तम् । २ देवतान्तरापेक्षयेत्यर्थः ।

मथर्वशिखाया अनन्यथासिद्धत्वसाधनप्रयासः। तथा देवान्तरोत्कर्षपरश्रुत्यन्तरसङ्कोचनप्रयासश्च ।

वस्तुतस्तु कर्ममार्गे साक्षाद्भगवद्विभूतीनामेवेज्यत्वस्य पूर्वमुपपादितत्वाद् 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता' इति बह्वृचब्राह्मणे विष्णोः परमत्वं, 'अग्नये पृथिव्यधिपतये स्वाहे'त्यादि 'ब्रह्मणे लोकाधिपतये स्वाहे'त्यन्तैरग्न्यादिब्रह्मान्तानामेकैकाधिपत्यं प्रदर्श्य, विष्णवे सर्वाधिपतये स्वाहे'ति पूर्वोक्तसर्वाधिपत्यं च लोकाक्षिगृह्ये मूलस्वरूपसारूप्यादिमात्रेणापि विभूतिरूपे तस्मिन् बोध्यते इति किं वाच्यं मूलरूपपरमत्वसर्वाधिपत्ययोः? तथा विभूतिरुद्रस्यावान्तरतया 'तन्मूलरुद्रस्यावान्तरत्व'मित्यत्रापि । एवमेष सङ्कुचितोऽपि शब्दो भवदभिमतापेक्षया पारम्यमेव गमयतीति च।

किञ्च, 'विश्वस्मादिन्द्र उत्तर' इत्यत्रापि भवदभिमतः शिव एवेन्द्रशब्देनोच्यते, अथर्वशिखायां तथासिद्धत्वात् । अतस्तस्य सङ्कोचसहिष्णुत्वेऽपि कान्यस्य हानिः ? उत्तरत्वाच्च । अन्यथोत्तमत्वमेव वदेत् । एतद्दृष्टान्तेन 'पतिं विश्वस्ये'ति नारायणोपनिषत्स्थपदार्थसङ्कोचनं तु ब्रह्मणोऽप्यशक्यं, युक्तीनामुक्तत्वाद्वक्ष्यमाणत्वाच्च। अतो यत् षोडशे श्लोकेऽर्थान्तरत्वादिव्यपदेशाधिकरणन्यायेनोपसंहारप्राबल्यमथर्वशिखाया विभावितं, तदप्यस्माकमेवानुगुणीभवति, तत्र रूपानिर्देशात्। नाम्नां च परब्रह्मवाचकत्वस्य पूर्वमेव व्यवस्थापितत्वात् । परन्तु 'आकाशो वै नामरूपयो'रित्यादिवाक्यस्य उपक्रमस्थाभ्यामाकाशश्रुतिप्रसिद्धलिङ्गाभ्यां पाश्चात्यानामप्यसङ्कुचितानामरूपनिर्वोढृत्वतदर्थातदर्थान्तरत्वामृतत्वलिङ्गब्रह्मात्मश्रुतीनां भूयस्तया प्राबल्यात्तदनुरोधेन उपक्रमप्रापितमपि भूताकाशपरत्वमपोह्य ब्रह्मपरत्वं व्यवस्थापित'माकाशोऽर्थान्त-

---

'अग्निर्वै देवानामवम' इत्यादीनां विभूतिपरत्वमङ्गीकृत्यापि स्वसिद्धान्तं साधयन् पञ्चदशश्लोकोक्तं तन्मतं दूषयति वस्तुत इत्यादि । तेनेन्द्रशब्दस्य सङ्कोचसहिष्णुत्वं पञ्चदशश्लोके उक्तं, तदङ्गीकृत्य तं सङ्कोचं तदुपर्येव पातयति ।

किञ्च विश्वेत्यादि । षोडशे श्लोकेऽथर्वशिखायामुपसंहारप्राबल्यं तेनाङ्गीकृतम् । तदभ्युपगम्य तन्मतं दूषयिष्यन् पञ्चदशश्लोकोक्तं 'पतिं विश्वस्ये'त्यस्य सङ्कोचसहिष्णुत्वं न युज्यत इत्याह एतद्दृष्टान्तेनेत्यादि । सिद्धमाह अतो यत्षोडशेत्यादि । अर्थान्तरत्वादिव्यपदेशेति । इदमधिकरणं समन्वयतृतीयपादेऽस्ति । तत्कृतमुपन्यासप्रकारं दूषयति परंत्वित्यादि ।

रत्वादिव्यपदेशा'दित्यत्रेत्ययमुपन्यासप्रकारः सूत्रादिविरुद्धः । यद्येवमभिप्रेयाल्लिङ्गादिभूयस्त्वमेव हेतुं वदेन्नार्थान्तरत्वादिकम्। अतः प्रकारान्तरमुच्यते ।

तथाहि, तत्र हि आकाशो भूतभेदो ब्रह्म वेति सन्देहे; रूढ्याऽवकाशदानकृतनामरूपनिर्वोढृलिङ्गेन चावशिष्टवाक्यगतब्रह्मामृतात्मशब्दानामवकाशकृतबृंहणनित्यत्वव्यापकत्वगुणयोगेन गौण्यापि नेतुं शक्यत्वाद्व्यापकतयैव रूपनामान्तरवर्तित्वस्यापि सिद्धेरसञ्जातविरोधित्वेनोपक्रमप्राबल्याच्च भूतभेदपक्ष एवोचित इति प्राप्ते आह, 'आकाशोऽर्थान्तरत्वादिव्यपदेशा'दिति। अर्थः प्रयोजनं यद्भूताकाशस्य श्रुतिसिद्धं, तस्मादन्यत्। तथाच अन्तरः अन्यः अर्थो यस्मादित्यर्थान्तरम्। 'वाहिताग्न्यादिषु' इति अन्तरशब्दस्य परनिपातः। एवमत्र बहुव्रीहिणा तत्कर्तृत्वं बोध्यते। अन्यः अर्थोऽर्थान्तरमिति नित्यसमासपक्षे च लक्षणया स बोध्यते।'तस्य भावस्तत्त्वं, तदादीनि ते यदन्तरे'त्यनेनोक्तं नामादेरन्तःस्थापनं, ब्रह्मपदोक्तं बृंहणं च, कार्यात्मकं लिङ्गममृतत्वादिश्रुतयश्च, तेषां व्यपदेशात् कथनादाकाशो ब्रह्मैव। नहि रूपान्तर्गतस्याकाशस्य निरूढस्य निर्वोढृत्वं सम्भवति, न वा तन्माहात्म्यहेतुत्वेन श्रुतौ तत्कचिदुक्तमस्ति, नाप्यसङ्कुचितं नामरूपयोरन्तःस्थापनं बृहणं वा तथा। वायुजनकत्वस्यैवोक्तत्वात्। अत आकाशकार्यातिरिक्तकार्यकर्तृत्वस्यात्रोक्तत्वात् तदर्थापत्त्या रूपनामान्तःस्थापनादेर्लिङ्गस्य च ब्रह्मण्येव स्वतःसिद्धत्वेन ब्रह्मादिश्रुतीनां चानुकूल्यादावश्यकोपपत्त्यैवोपसंहारस्य प्राबल्यमिति ब्रह्मैवाकाशः । स्वतःशब्दानां ब्रह्मपरत्वान्न लक्षणादोषश्च । इति हि तत्र सिद्धान्तो न तु लिङ्गभूयस्त्वेनेति । ये तु लिङ्गेनाहुस्तेषां मतेऽधिकरणवैयर्थ्यमेव । तल्लिङ्गाधिकरणादेवार्थसिद्धेः । एवं तु लिङ्गस्यास्य स्पष्टत्वादुचितोऽधिकरणान्तरारम्भः ।

एतेनैव मुक्तजीवावपि व्युदस्तौ, आद्यस्य जगद्व्यापारराहित्याद्, द्वितीयस्य 'जीवेनात्मने'तिकरणत्वश्रावणात् । ब्रह्मणस्तु विरुद्धधर्माश्रयत्वेन जगन्निर्मातृत्वं व्यापारराहित्यं चाविरुद्धम् । तस्माद्ब्रह्मैवाकाशः ।

केचित्तु 'ते यदन्तरे'त्यस्य यद्ब्रह्म, ते नामरूपे, अन्तरा विना; तथा च अनामरूपमित्यर्थमाहुः। शेषं समानं तेषामपि ।

---

तस्मादन्यदिति, सूत्रैकदेशे 'व्यपदेशा'दितिपदेऽन्वेति । यस्मादिति, कर्तुः। तदिति, आकाशः। तथेति, कचिदुक्तमस्ति । वायुजनकत्वस्येति, 'आकाशाद्वायु'रिति श्रुतौ। शाङ्करोपन्यासं दूषयति केचित्त्वित्यादि ।

ये पुनरर्थान्तर्वर्तित्वं हेतूकृत्याधिकरणं योजयन्ति, तेषामप्यर्थान्तर्वर्तित्वस्य 'ते यदन्तरे'त्यत्र निर्वोढृत्वोत्तरमुक्तत्वान्निर्वोढृत्वस्य साधारणधर्मत्वप्रसक्तिरादिपदविरोधः, 'आकाशवत्सर्वगतश्च नित्य' इति व्यापकत्वकृतान्तरत्वस्याकाशसाधारण्यस्फोरणपूर्वकव्याख्यानादाकाशपदेनात्र केवलब्रह्मासिद्ध्या अधिकरणवैयर्थ्यं च । तस्मादावश्यकोपपत्त्यैवोपसंहारानुग्रहात्तत्प्राबल्यं न लिङ्गभूयस्त्वेनेति निश्चयः ।

यश्च 'पूर्वतन्त्रेऽपी'त्यादिना कस्मिंश्चित्काम्येष्टिविशेष 'ऐन्द्राग्न एकादशकपालः प्राजापत्यं दधि मधु घृतमाप' इति पञ्चानां हविषामाद्ययोरैन्द्राग्नदध्नोः सान्नाय्यविकारत्वेनामावास्यविध्यन्तप्राप्तौ उपांशुयाजविकाराणां चरमश्रुतत्वेऽपि भूयस्तया तदनुग्रहाय पौर्णमासविध्यन्त इति निर्णीतम् । 'विप्रतिषिद्धसमवाये भूयसां स्यात्स्वधर्मत्वमित्यत्रे'तिन्याय उपन्यस्तः,

तत्रापि कश्चिदस्ति विशेषः। तथाहि, उक्ताधिकरणविचारितकाम्येष्टावपि, ऐन्द्राग्नपुरोडाशस्य दध्नश्चामावास्यविध्यन्तस्यासन्दिग्धत्वादसोमयाजिन उपांशुयाजस्यापि कात्यायनकल्पश्रुत्या प्राप्तत्वेनामावास्यविध्यन्तस्य तत्रापि सिद्ध्या तेनापि पौर्णमास्यविध्यन्तस्य कथं निर्णयः ? न चोपांशुयाजस्य तत्रानियतत्वात्तथेति वाच्यम् । नियतस्यैवादरणे नियामकादर्शनात् । न च सूत्रविरोधः । सूत्रकृता भूयस्त्वस्यैव हेतूकरणात् । एवं प्राप्त आमावास्यविध्यन्ते दध्न्यपि दोहनातञ्चनादि प्राप्यते । पौर्णमास्यग्रहणे तु न तत्प्राप्तिः । तस्मादनेन न्यायेनोपक्रमस्यैव प्राबल्यं प्राप्यते नोपसंहारस्येत्यनर्थकोऽस्योपन्यासः ।

किञ्चाष्टमप्रथमपादे चित्रायागे 'दधि मधु घृतमापो धानास्तण्डुलास्तत्संमिश्रं प्राजापत्य'मितिवाक्ये श्रुतयोर्मधूदकयोः किं सान्नाय्यविध्यन्तो विधेय उतोपांशुयाजविध्यन्त इति शङ्कायां, मधूदके द्रवत्वसामान्यात् 'पयोविकारः स्या'दितिसूत्रेण सान्नाय्यस्य पयोविकारत्वाद् द्रवत्वसामान्यात्

---

भैक्षवोपन्यासं दूषयति ये पुनरित्यादि ।

पूर्वत्रीयाधिकरणेऽपि तस्य भ्रान्तिमुद्घाटयति यश्च पूर्वेत्यादि । अर्थान्तरव्यपदेशाधिकरणविषयवाक्यं तु 'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म तदमृतं स आत्मे'ति । विप्रतिषिद्धसमवाय इति न्यायो द्वादशाध्यायस्य द्वितीयपादेऽस्ति ।

प्रकारान्तरेणाप्येतदुपन्यासवैयर्थ्यमाह किञ्चाष्टमेत्यादि । सिद्धान्तितमिति । वाशब्दस्यैवकारार्थकत्वं विमृश्य सिद्धान्तितम् ।

पयोविध्यन्तो विधेय इत्युपक्षिप्य, 'आज्यं वा वर्णसामान्या'दिति द्वितीयेन सामान्यतौल्याद्विकल्प एवोक्तः । व्याख्यातृभिः परं घृते नैमित्तिकं द्रवत्वमस्ति, वर्णश्चाशुक्लो मधुना तुल्य इति घृतधर्माणामुत्पवनादीनां च सम्भव इति दोहनादीनां पयोधर्माणां चासम्भव इत्युपांशुयाजगताज्यधर्मास्तत्र कर्तव्या इति सिद्धान्तितम् । एवं च विचार्यमाणे योग्यत्वरूपयोपपत्त्यैवाज्यविध्यन्तादरो न भूयः सामान्यात् । अन्यथाप्सु द्रवत्वशुक्लत्वयोः साहजिकत्वेन, पयःसामान्यस्य भूयस्त्वादाज्यवर्णाभावाच्च तासु पयोविध्यन्त एव प्राप्नुयात्, अतो 'योग्यतैवादृते'त्यत्रापि सैवादरणीया। न च पौर्णमासविध्यन्तं गृहीतुं, तत्र मधुवत्सिद्धमेव दधि गृहीत्वा तत्र यथोचित आज्यविध्यन्त एव कार्य इति वाच्यं, नियामकाभावात्। अतोऽप्यस्य न्यायस्योपन्यासोऽनर्थक इति।

अस्तु वा यथा तथा । तथापि न तेन भवदभिमतसिद्धिः । उपसंहारेऽस्मदनुकूलत्वस्य स्थापितत्वादिति दिक् ।

यच्चाग्रे, 'अपि चोपक्रमानुरोधेऽप्यस्याः शिवपरत्वमेवे'त्यादिना 'यावसाने चतुर्थ्यर्धमात्रा सा सोमलोक' इत्यत्र शिवपुराणोक्तोमासहाय शिवलोक एवोच्यते इत्युपक्रमोपसंहारैकार्थ्ये मध्यस्थं देवतान्तरलिङ्गादिकं प्रतर्दनाख्यायिकास्थजीवमुख्यप्राणलिङ्गमिवान्यथा नेयमित्युक्तं;

---

नन्वस्त्वेवं; तथापि पूर्वोक्तन्यायविषयत्वेनेयमेवेष्टिरङ्गीकृतेति न योग्यताबलादत्र निर्णयः, किन्तु भूयस्त्वबलादेवेत्यत आह अस्तु वेत्यादि ।

उपक्रमविचारेणास्याः शैवत्वस्थापकं तन्मतमनुवक्ति यच्चेत्यादि । प्रतर्दनाख्यायिकास्थेत्यादि । कौशीतकीब्राह्मणे 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगामे'त्यादिनोक्तोपाख्याने, प्रतर्दनायेन्द्रेण 'मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्य' इति वरो दत्तः । तत्र कस्त्वमित्याकाङ्क्षायां त्वाष्ट्रवधादिनात्मानं प्रशस्य, 'प्राणोऽहमस्मि प्रज्ञात्मे'त्यादिना तं 'मामायुरमृतमित्युपास्वे'त्यायुरमृतत्वं शरीरस्थितिसाधकत्वेनोपपादितवान् । तदिदमासन्यस्य मुख्यप्राणस्य लिङ्गम् । ततो 'न वाचं विजिज्ञासीत वक्तारं विद्या'दित्युक्तवान् । इदं च जीवलिङ्गं वक्तृत्वादेस्तद्धर्मत्वात् । ततः 'अनन्तोऽजरोऽमृतो न साधुना कर्मणा भूया'नित्याद्युक्त्वा 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु तं यमधो निनीषते, एष लोकपाल, एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्या'दित्युक्तवान् । इदं 'प्राणस्तथानुगमा'दित्यस्य विषयवाक्यम् । अत्र जीवमुख्यलिङ्गाद्ब्रह्मधर्माणां जीवादिधर्मत्वं वा त्रयाणां स्वतन्त्रत्वं वा लिङ्गद्वयस्यापि ब्रह्मधर्मत्वं वेति सन्देहे, पूर्वसूत्रेण अनुगमात् पौर्वापर्येण पर्यालोचनाद् ब्रह्मपरत्वमुक्तम् । उपक्रमे हिततमत्वेनोपदिश्यमानः

तदप्यसङ्गतम् । प्रसिद्धपाठे नारायणकृतटीकायां च सोमलोक इति न पठ्यते न व्याख्यायते च, किन्तु या चतुर्थ्यर्धमात्रा सा लुप्तप्रकार इति पठ्यते। 'नादसञ्ज्ञा लुप्तप्रकार इति पृथिव्यादयो लोका गायत्र्यादीनि छन्दांसि रूपाणि च त्रिष्वेव सन्ति न चतुर्थे' इति पादादिपङ्क्तौ नोक्तानीति च व्याख्यायन्ते। अतः पक्ष एवायमसङ्गतः। न च पाठप्रसिद्धेरप्रामाण्यं शक्यशङ्कम्। मन्त्रलक्षणाधिकरणव्याकोपात्। तत्राभियुक्तानां मन्त्रोऽयमिति प्रसिद्धिमादायैव मन्त्रलक्षणस्य सिद्धान्तितत्वात्। क्वचिच्छाखादेशभेदेन सत्यपि तथा पाठे, तत्रोपक्रमत्वस्याशक्यवचनत्वात्। शास्त्रप्रकरणान्यतरारम्भस्यैवात्र निर्णयार्थोपक्रमत्वेन विवक्षणात्। तस्य चावान्तरवाक्यारम्भगतत्वेनात्र निर्णयेऽनुपयोगात्। एवञ्चात्रोपक्रमे 'ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमोमित्येतदक्षरस्य पादाश्चत्वारो देवाश्चत्वारो वेदाश्चत्वारश्चतुष्पादेतदक्षरं परं ब्रह्मे'ति कथनादन्ते च 'विष्णुर्मनसि नादान्ते ध्येयमीशानं प्रध्यायन्ती'त्युक्त्वा, ब्रह्मविष्णुरुद्रेन्द्राणामुत्पत्तिकथनपूर्वकं प्रणवस्य पञ्चदैवत्यत्वोपसंहाराच्च, प्रणवसमष्टिवाच्यं नादवाच्यं वा परं ब्रह्मैव नादान्ते मनसि स्थाप्यं विष्णुशिव-

---

प्राणः कथं परमात्मा न भवेत्? तस्यैव परमानन्दरूपत्वेनान्यस्य हिततमत्वाभावात्। तथा 'स यो मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यये'ति मध्ये उच्यमानः पापाभावोऽपि ब्रह्मज्ञानादेव, 'क्षीयन्ते चास्य कर्माणी'त्यादिश्रुतेः। उपसंहारस्य तु स्फुटं ब्रह्मपरत्वमित्यनुगमाद्ब्रह्मपरत्वमुक्त्वा, ततः सूत्रत्रयेण जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वेन नयनं कृतम्। तत्र 'न प्राणेनापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रिता'विति श्रुत्या शरीरस्थितिसाधकत्वं ब्रह्मण एवोक्तमिति ब्रह्मधर्मः, 'यद्वाचानभ्युदितं, येन वागभ्युद्यते, तदेव ब्रह्म त्वं विद्धी'त्यादौ वा वागादिप्रेरकत्वेन वक्तृत्वादिकं तत्रैव निश्चाय्यत इति सोऽपि ब्रह्मधर्म एवेति। तदिवात्रत्यं पुरुषपदं विष्णुपदं सर्ववर्णत्वं च, 'पुरुषो वै रुद्र' इति श्रुत्यन्तराद्, 'विष्णुः सर्वप्रवेशनादि'ति लैङ्गात्, 'नानावर्णाकृतीनि चे'ति गीतावाक्यबोधितरूपाणां विश्वरूपप्रदर्शनेऽपि 'पश्य मे योगमैश्वर'मिति वाक्येन तस्य रूपस्य शैवत्वनिर्णयाच्च शिवपरत्वेन नेयमित्यर्थः।

इदं दूषयति तदपीत्यादि। मन्त्रलक्षणाधिकरणेति। द्वितीयस्य प्रथमे भावार्थपादे तच्चोदकेषु मन्त्राख्येत्यधिकरणेऽस्तमामन्त्रणा स्यन्तत्वान्तप्रभृतीनामव्याप्तिग्रस्तत्वं दर्शयित्वा, 'यत्राभियुक्तानां 'मन्त्र' इति प्रसिद्धिः स मन्त्र' इति लक्षितस्तद्व्याकोपादित्यर्थः। एतदेवाह तत्रेत्यादिना।

नामभ्यां बोध्यत इत्युपक्रमोपसंहारयोरेवमैकार्थ्ये देवतान्तरलिङ्गादेरन्यथानयनौचित्यं न तु तथेति बोध्यम् ।

एवञ्चात्रत्यः पुरुषशब्दोऽपि त्रिमूर्त्युत्कर्षलिङ्गसादेश्ययोर्बलान्मैत्रायणीयोदितप्रतिपुरुषपरो न तु परमपुरुषपर इति, तमादाय पुरुषशब्दस्य विष्णौ विशिष्य शक्तिकल्पनमपि ये कुर्वन्ति तदपि मुधास्तु । तावतापि न काचित् क्षतिर्वैष्णवानाम् ।

स्वरूपाख्यानमत्रातः प्रत्याख्यानं भवादृशाम् ॥
न्यायादिभिरसिद्धत्वादिति बुद्ध्या विभाव्यताम् ॥ १ ॥
अनन्तशाखासापेक्षे वैदिकार्थस्य निर्णये ॥
स्वबुद्धिकल्पितन्यायाद्गरीयो ह्युपबृंहणम् ॥ २ ॥
दर्शितं हरिवंशीयं यत्तदर्थोऽनुवर्णितः ॥
नोपबृंहणतां याति यस्मात्तस्मादसङ्गतम् ॥ ३ ॥
वागाडम्बरमात्रेण न्यायाभासैरुदाहृतैः ॥
सर्वथेदं मूर्खतरप्रतारणमिति स्थितिः ॥ ४ ॥
यत्तु शैवे महालिङ्गप्रादुर्भावोपवर्णने ॥
यच्चादित्यपुराणेऽपि शिवयोगोपवर्णने ॥ ५ ॥
यच्च पाराशरे स्कान्दे शैवत्वं प्रकटीकृतम् ॥
शिखायास्तदपि प्रोक्तरीतौ नैवं विरुध्यते ॥ ६ ॥
अतो मतं वैष्णवानामबुध्वा गालनादिकम् ॥
यत्तेषां क्रियते तच्च ज्ञानानुत्पत्तिकारणम् ॥ ७ ॥

---

'स्वरूपाख्यानमेवास्य प्रत्याख्यानं प्रतीयत' इत्यादिना यत्तेन पुरुषस्य पुरुषोत्तमस्वख्यापकवैष्णवमतदूषणायोक्तं, तद्दूषयति स्वरूपाख्यानमित्यादि । अत्र तुरीयमात्रादेवतात्वेन प्रतिपाद्यस्य पुरुषशब्दोदितस्य स्वरूपाख्यानमुक्तरीत्या जन्यकोटौ निवेशपूर्वकं कथनमत्राथर्वशिखायामतो वैष्णवक्षत्यभावाद्भवादृशामेवेत्यर्थः ।

हरिवंशीयमिति । 'अहं ब्रह्मा कपिल' इत्यादिकम् ।

प्रोक्तरीताविति । 'प्रणवसमष्टी'त्यादिनोक्तायां पूर्वोक्तनिष्कर्षात्मिकायां विधायामित्यर्थः ।

वैष्णवानामिति, मध्वाचार्याणाम् । तच्च द्वात्रिंशे अनेन कृतम् । अन्यदपि चतुर्थादिश्लोकोक्तं ज्ञेयम् ।

'तव द्रोहस्तदीयानां प्रद्वेषश्चापि माधव ॥
त्वदीयवधवाञ्छा च ज्ञानानुत्पत्तिकारणम्' ॥ ८ ॥
इत्युक्तिः शाम्भवी सूतसंहितामध्यगा ततः ॥
विष्णोर्विभूतिरूपस्य ये जनास्तद्विषामपि ॥ ९ ॥
चेद्दोषस्तर्हि ते पूर्णं हरिं ब्रह्म परात्परम् ॥
भजन्ति तेषां द्वेषस्य फलं सेत्यस्य का कथा ? ॥ १० ॥

यत्तु 'पुरुषो ह वै नारायणोऽकामयत' 'सहस्रशीर्षा पुरुष'इत्यादिश्रुतिषु; 'तमादिदेवं पुरुषो ददर्शे'त्यादिपुराणेषु, 'संहृत्य लोकान्पुरुषोऽधिशेत' इत्याद्यभियुक्तोक्तकाव्येषु च पुरुषशब्दस्य विष्णौ विशिष्य प्रयोगो दृश्यते, तथापि 'पुरुषौ चात्ममानवौ' इत्यभिधानकोशस्मृतेर्लौकिकवैदिकप्रयोगप्राचुर्याच्च आत्मसामान्ये तस्य शक्तेरावश्यकत्वेन, तत एवोपपत्तेर्न विष्णौ विशिष्य शक्तिः कल्पयितुं शक्या, बर्हिराज्याधिकरणविरोधादित्युक्त्वा, तदधिकरणमुपन्यस्य, 'एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः । तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पने'ति तत्र वार्तिककारिकामुक्त्वा, तदा म्लेच्छसामान्यप्रसिद्ध्या सामान्यशक्तिसिद्धौ तद्द्वारैवार्यव्यवहारसिद्धविशेषलाभान्न विशेषशक्तिकल्पनम् । तदा का कथा प्रकृतविषये ? इह सामान्यप्रसिद्धेरप्यार्यगतत्वेन दौर्बल्यशङ्काया अभावादित्युक्तं ;

तन्न । पुरुषशब्दस्य बर्हिराज्यादिशब्दवदत्र केवलरूढत्वाभावात् । 'स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत्तस्मात्पुरुष' इति बृहदारण्यकश्रुत्या तत्र योगस्याप्युक्तत्वात् । न च यौगिक एवेति शङ्क्यम् । सर्वेषां शब्दानां ब्रह्मणि रूढेः पूर्वमेवोपपादितत्वात् । तस्याश्च शक्तिसङ्कोचोत्तरमपि 'तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते । विना तं पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक् ? भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे

षोडशाभासोक्तकारिका दूषयित्वा, षोडशश्लोकोक्तमर्थं दूषयितुमुपक्षिपति यत्तु पुरुष इत्यादि । तदधिकरणमुपन्यस्येति । नामधेयपादे 'बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्द' इत्यत्र बर्हिराज्यपुरोडाशशब्दाः शास्त्रानुयायिभिः संस्कृतेषु प्रयुज्यन्त इतरैस्त्वसंस्कृतेषु । तथा सति किमेषां यूपादिवत्संस्कारः प्रवृत्तिनिमित्तमुत जातिरिति संशये, पीलवादिशब्दवच्छास्त्रानुसारिप्रसिद्धेर्बलीयस्त्वात् संस्कारस्यैव निमित्तत्वमिति पूर्वपक्षः । उत्तरस्तु अन्वयव्यतिरेकाभ्यां जातेरेव निमित्तता, न संस्कारस्य; व्यभिचारादित्येतदुपन्यस्येत्यर्थः ।

सनातने। ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिन्नराः। ते सर्वे पुरुषांशत्वादुच्यते पुरुषा इति' इत्यादिषु निरुपाधिपदेन तदुपबृंहणादन्येषु पुरुषांशस्य हेतूकरणाच्च विशिष्यापि तत्रैव व्यवस्थितेः। अत एव कल्पनाभावान्न तद्गौरवम्। एवञ्च 'पुरुषौ चात्ममानवा'वित्यभिधानस्मृतिरपि व्यावहारिकशक्तिसङ्कोचरूपेति भगवति पूर्वोक्तवाक्यैर्विशिष्य व्यवस्थापितां शक्तिं न प्रतिबद्धुमीष्टे।

किञ्च, बर्हिराज्याधिकरणेऽव्यभिचारः सिद्धान्तयुक्तिः। सा च लौकिकस्यापि पुरुषपदप्रयोगस्य वस्तुतो भगवदव्यभिचारान्न हीयते। बर्हिराज्यादिशब्दानां जातिशब्दत्वे 'बर्हिषा यूपावटमस्तृणाती'त्यादिवाक्योपपत्तिः फलम्। विशिष्यसंस्कारवाचित्वे चासंस्कृतेषु तृणादिषु बर्हिराज्यादिशब्दप्रवृत्त्यभावात्तेन शब्देनानुवादाशक्त्या प्राथमिकसंस्कारानुपपत्तिः, शब्दप्रवृत्तौ संस्कारसिद्धिः, तत्सिद्धौ च शब्दप्रवृत्तिरित्यन्योन्याश्रयश्च दोषः। प्रकृते तु पुरुषशब्दस्य जातिशब्दत्वे 'पुरुष एवेदꣳ सर्व'मित्याद्युक्तसर्वत्वादेः सर्वेष्वात्मसु प्राप्तौ महिम्नः साधारणत्वापत्त्या, 'एतावानस्य महिमा अतो ज्यायांश्च पूरुष' इति श्रुत्युक्तपुरुषोत्कर्षासाधारण्यबाधप्रसक्तिर्दोषः। विशिष्यभगवद्वाचित्वे च तदुपपत्तिरिति वैपरीत्यम्। किञ्चात्मशब्दोऽपि सत्त्वमूर्तौ विशिष्य रूढः। अन्यथा ब्रह्मादिषु त्रिष्वप्यात्मत्वस्य तुल्यत्वाद्, 'अत्रेः पत्न्यनुसूया तु त्रीन् पुत्रान् समजीजनत्। दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवा'नित्यस्यासङ्गतत्वापत्तेः। एवं चात्मशब्दस्य विशिष्य विष्णुवाचकत्वे, आत्मपर्यायस्य पुरुषशब्दस्यापि गुणमूर्तिवाचकत्वमप्यप्रत्यूहं यदा, तदा साक्षाद्भगवद्वाचकत्वे किं वाच्यं? अतः कथमपि न बर्हिराज्याधिकरणन्यायेन प्रत्यवस्थानावकाशः।

किञ्च, निर्मन्थ्याधिकरणे 'निर्मन्थ्येनेष्टकाः पचन्ती'त्यत्र निर्मन्थ्यशब्देन किं लौकिकनिर्मन्थनजन्यो ग्राह्य उताधानकाले निर्मथ्य गार्हपत्ये नित्यं धृतश्चिरनिर्मथितो ग्राह्य आहोस्विदलौकिकेन तात्कालिकमथनेनोत्पाद्य ग्राह्य इष्टकापाकार्थमिति सन्देहे, मन्थनजन्यस्याग्नेराशुतरविनाशित्वादिदानीमभावेन मन्थनकर्मत्वस्याप्यभावाद्, अपां सेचनसाधनत्वस्येव वास्य सार्वदिकत्वाभावेन व्यभिचारान्न प्रोक्षणीन्यायेन यौगिकत्वं शक्यवचनमिति जात्यव्यभि-

---

निर्मन्थ्यन्यायोऽपि तत्रैव 'तथा निर्मन्थ्य' इति सूत्रे द्रष्टव्यः। प्रोक्षणीन्यायेनेति। 'प्रोक्षणीष्वर्थसंयोगा'दित्यत्र 'प्रोक्षणीरासादयती'ति दर्शपूर्णमासप्रकरणे श्रुतः प्रोक्षणीशब्दः किं संस्कारनिमित्तः, उत जातिनिमित्त उत यौगिक इति संशये, तावदसंस्कृतास्वप्सु प्रोक्षणीत्वा-

चाराद्रूढत्वमादरणीयमिति पूर्वपक्षे, रूढेरत्यन्तापारेदृष्टत्वेन कल्पयितुमशक्यत्वाद्भूतपूर्वमपि योगं निमित्तीकृत्य सन्तानाभिप्रायेण प्रयोग उपपादनीय इति विचारिते, योगस्यापि सर्वसाधारणत्वाद्वाक्यवैयर्थ्यापत्तिभियाऽचिरनिर्मथिते पङ्कजादिशब्दवद्योगरूढिराश्रिता । तथा प्रकृते 'एतावानस्य महिमे'त्यादिश्रावितपुरुषोत्कर्षासाधारण्यबाधभिया योगरूढिरेवाश्रयणीया ।

वस्तुतस्तु योगरूढ्योरुभयोरप्यत्र श्रुतिस्मृतियुक्तिसिद्धत्वेनाकल्पनीयत्वान्न न्यायापेक्षापि ।

इदमपि पूर्वतन्त्रमनुस्मृत्योच्यते । उत्तरतन्त्रानुसरणे तु ब्रह्मवादे व्यक्तेर्नित्यत्वेन 'जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पित' इति षष्ठस्कन्धे जातिव्यक्तिविभागस्य कल्पितत्वकथनात्तदभावेन 'स एकधा भवती'त्यादिश्रुतिबलादेकस्यानेकरूपत्वादनुपपत्त्यभावेन, अनित्यपक्षेऽपि प्रवाह एव शक्त्या, जातौ शक्तेर्लक्षणादोषग्रस्तत्वेनानादरणीयत्वमतोऽपि तथा ।

---

भावादासादनविधिबाधप्रसक्तिरनुष्ठितेष्वभिमन्त्रणादिषु अपां प्रोक्षणीत्वसिद्धिः, तत्सिद्धौ च प्रोक्षणीशब्देनानूद्य तत्राभिमन्त्रणादिविधिरिति संस्कारस्य न प्रवृत्तिनिमित्तत्वम् । किं तु सेके जलक्रीडादौ 'प्रोक्षणीभिरुद्वेजिताः स्म' इत्यसंस्कृतास्वपि प्रयोगाद् बर्हिराज्यपुरोडाशादिशब्दवदयमपि शब्द उदकजातौ रूढ इति विचारिते, सिद्धान्तितम् । न जातिपक्षो युक्तः । उदकजातौ प्रोक्षणीशब्दस्य वृद्धव्यवहारे पूर्वमक्लृप्तत्वादितः परं शक्तिः कल्पनीयेति गौरवग्रासादत्र गोशब्दादिवद्रूढिर्न वक्तुं शक्या । तस्माद्व्याकरणस्मृतौ सोपसर्गादुक्षधातोः[1] करणे ल्युप्रत्ययेन व्युत्पादितोऽयं प्रोक्षणीशब्दो यौगिक एवेति तेन न्यायेनेत्यर्थः ।

ब्रह्मवादे व्यक्तेर्नित्यत्वेनेति । वेदोक्तपदार्थानामाधिदैविकानां पुरुषावयवरूपत्वस्य पुरुषसूक्तेन द्वितीयस्कन्धस्थतद्व्याख्यानाध्याये 'यदास्य नाभ्यान्नलिनादहमासं महात्मनः । नाविदं यज्ञसम्भारान्पुरुषावयवादृते । तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः' इत्यारभ्य 'पुरुषावयवैरेतैः सम्भाराः सम्भृता मये'त्यन्तैर्वाक्यैश्च बोधनात्तद्रूपतया नित्यत्वेनेत्यर्थः ।

अनित्यपक्षेऽपि प्रवाह एव शक्त्येति । 'नासदासीन्नो सदासी'दित्यादिश्रुतौ सृष्टिकथनादनित्यव्यक्तिपक्षेऽपि 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पय'दित्यादिश्रुत्या प्रवाहानादित्वसिद्धौ, समानरूपव्यक्तिषु समाननामनियमस्य समाननामरूपत्वसूत्रे सिद्धत्वात् समानप्रवाह एव शक्त्येत्यर्थः । तथेति । न पूर्वतन्त्रन्यायापेक्षेत्यर्थः ।

उक्तेऽभिधानकोशे पुरुषपदस्यार्थद्वयकथनादाकृत्यधिकरणन्यायाप्रवृत्त्या केवलात्मव्यक्ते-

---

१ उक्ष सिञ्चने ।

किञ्चाभिधानकोशोऽपि नहि शक्तेर्नियामकः ॥
ग्राहकः सम्मतो लोके किन्तु व्याकरणादिवत् ॥ १ ॥

तथा च कोशेनात्मस्विव वाराहादिवाक्ये ब्रह्मनामत्वेन प्रसिद्धस्य नारायणपदस्य 'सहस्रशीर्षापि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षयागत' इति चतुर्थस्कन्धे भगवन्नामत्वेन प्रयुक्तस्य सहस्रशीर्षपदस्य च समभिव्याहारेणाभिध्योपदेशसृष्टिकर्तृत्वादिलिङ्गेन च पुरुषशब्दस्य विशिष्य भगवति शक्तौ गृहीतायां उक्तेषु पुराणवाक्येषु गुणवादत्वाप्रतीतेः । तथात्व उपबृंहणत्वहानिप्रसङ्गेन भवदभिमतशिखाशैवत्वादेरप्यसिद्धेः । 'पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः । तैरर्जितानि पुण्यानि तद्वदेव भवन्ति ही'ति बृहन्नारदीयोक्तनिन्दया त्वज्जल्पनस्यासङ्गतत्वाद्, वस्तुतः शक्तिकल्पनस्याप्यस्माकमभावात् । 'वेदेन नामरूपाणि विषमाणि समेष्वपि । धातुपूर्द्धव कल्प्यन्ते एतेषां स्वार्थसिद्धये' इत्येकादशे वेदस्य कल्पकतायाः पूर्वकाण्डस्य च व्यवहारार्थतायाः स्फुटमेव कथनादुत्तरतन्त्रार्थस्य तेन केवलेनासिद्धेश्च पुराणवाक्यानामन्यथासिद्धत्वस्याशक्यवचनत्वात् न पृष्ठशब्दन्यायेनापि प्रत्यवस्थानावकाशः ।

किञ्च, तत्र 'पृष्ठैरुपतिष्ठते' इत्यात्मनेपदस्य 'उपान्मन्त्रकरण' इत्यनन्यथासिद्धपाणिनीयसूत्रेण मन्त्रकरणेऽनुशिष्टत्वात्तृतीयान्तस्य पृष्ठपदस्य स्तोत्रनामत्वं विहाय स्तोत्रकरणभूतमन्त्रोपलक्षकत्वमादृतमिति लक्षणाप्रवृत्ति-

---

राक्षेप्तुमशक्यत्वात्तेन न निर्णयः, किन्तूपायान्तरेणेति । सोऽप्रयोजक इत्याशयेनाह किञ्चाभिधानेत्यादि । वेदान्तनये 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्त' इत्यादिश्रुतेरीश्वरस्यैव कल्पकत्वेन पूर्वतन्त्रेऽप्यनादिवृद्धव्यवहारस्यैव तथात्वेन तथेत्यर्थः ।

**पृष्ठशब्दन्यायेनेति** । नामधेयपादे चित्राधिकरणे 'पृष्ठैः स्तुवत' इत्यत्र ज्योतिष्टोमे माध्यन्दिनसवनगतस्तोत्रविशेषनामत्वेन सिद्धस्य पृष्ठशब्दस्याग्निचयने, 'पृष्ठैरुपतिष्ठन्त' इत्यत्र स्तोत्रसाधने रथन्तरादौ लक्षणया प्रवृत्तिर्वादिप्रतिवादिनोस्तुल्या । पृष्ठसदृशैः कर्मभिः कुर्यादिति । पृष्ठसाधनै रथन्तरादिभिः समीपे स्थित्वाऽग्निमभिदध्यादित्यर्थकथनात् । उपतिष्ठतेस्तु नाभिधानलक्षकत्वं, किन्तु मन्त्रकरणेऽनुशिष्टस्यात्मनेपदस्य बलात्समीपस्थितिकरणत्वं मन्त्रस्य लभ्यते । तच्च समीपस्थितेरभिधानार्थत्वे सिध्यतीति मन्त्राभिधानमनुमीयते इति न लक्षणान्तरकल्पनेति सप्तमतृतीयान्ते स्थितं 'कर्मणः पृष्ठशब्दः स्या'दित्यधिकरणे, तन्न्यायेनेत्यर्थः ।

**आपो वा ऋत्वियमिति** । साम्नः कौथुमीशाखायां वामदेव्यब्राह्मणेऽस्ति ।

निमित्तप्रतिपादनेन चरितार्थस्य 'आपो वा ऋत्वियमासँस्तासां वायुः पृष्ठे व्यावर्तते'त्यर्थवादस्यान्यथासिद्धत्वं, न तथा प्रकृते पदसमभिव्याहारस्य तथात्वे किञ्चिद् गमकमस्तीत्यतोऽपि तथेति दिक् ।

एवञ्च सिद्धमेव मूलपुरुषत्वं नारसिंहेऽप्यनूद्यते 'स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः। प्रकृतिस्पर्शराहित्यात्स्वातन्त्र्याद्वैभवादपि । स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते। स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरःसर'मिति। न चात्र गुणवादत्वं शक्यवचनं, तदतिरिक्तस्य प्रकृत्यस्पृष्टमूलपुरुषस्याभावात् ।

'अपरिमाणे शिष्टस्ये'त्यधिकरणोक्तरीत्या सामान्यशक्तिकृतपर्यवसानस्यापि तत्रैव सिद्धेः। प्रत्युत शिव एव कल्पनाया अयुक्तत्वाच्च । न च 'तमीशानं पुरुषमीड्यं पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि पुरुषं कृष्णपिङ्गल'मित्यादौ शिवस्य पुरुषत्वं श्रुतमिति वाच्यम्। मन्त्रोपनिषदि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति प्रकृतिस्पृष्टस्यैव सिद्धत्वात्। भवतापि साम्बत्वं वदता तथैवाभ्युपगमात्। सूतसंहितायामपि तथैव सिद्धेर्वक्ष्यमाणत्वाच्च। तत्र पुरुषगुणपौष्कल्यात्तत्प्रवृत्तेः। 'पुरुषस्य विद्मे'ति मन्त्रस्य त्विन्द्रपरत्वम्। योगरूढसहस्राक्षपदेनाग्रिमेण 'तत्पुरुषाय विद्महे'इति रुद्रगायत्रीमन्त्रेण च तथानिश्चयात्। रुद्रपरो वा,लिङ्गभूयस्त्वात्।'पुरुषं कृष्णे'तिमन्त्रस्य तु भगवत्परत्वं, तथोपपादितचरत्वात्। 'अङ्गुष्ठमात्रः पुरुष'इति तु ब्रह्मवाचकमेव। 'अङ्गुष्ठं च समाश्रित'इति चेन मस्तकेऽप्याश्रितत्वसङ्ग्रहाद् ब्रह्माण्डपुरुषापादमस्तकव्यापित्वबोधनेन, एकदेशपातालवासिकालाग्निरुद्रव्युदासाद्विरुद्धधर्माधारत्वस्फोरणाद् 'ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभु'गित्युत्तरार्धे सर्वशब्दवाच्यशिवनियन्तृत्वादिकथनेन च तथानिश्चयात्। न तु कालाग्निरुद्रवाचकं, अनुपपत्तेरुक्तत्वात्।'तस्य ललाटाद् अक्षः शूलपाणिः पुरुषोऽजायते'त्यत्र तु नारायणजातपरमशिवपरः। 'बिभ्रच्छ्रियं सत्यं ब्रह्मचर्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवव्याहृतय ऋग्यजुस्सामाथर्वाङ्गिरसः सर्वाणि छन्दांसि तान्यङ्गेष्वाश्रितानी'ति

---

आपो वा ऋत्वियमासँस्तासां वायुः पृष्ठे व्यावर्तत ततो वसुवामं समभवत्तन्मित्रावरुणौ पर्यपश्यतां तावब्रूतां वामं व इदं देवेष्वजनीति तस्माद्वामदेव्य'मिति। चित्रान्यायेन पृष्ठवामदेव्यादिशब्दानां स्तोत्रनामत्वेऽपि साप्तमिकन्यायेन मन्त्रलक्षके वामदेवपदे लक्षणाप्रवृत्तेर्निमित्तप्रतिपादनार्थं वादस्यान्यथासिद्धत्वेन शक्त्यन्तरकल्पकत्वं यथा, तथा सहस्रशीर्षादिपदसमभिव्याहारस्य कार्यान्तरेण चारितार्थ्यान्न पुरुषपदशक्तिग्राहकताविघटनमित्यर्थः ।

महिमदर्शनात्। न तु संहाररुद्रपरः, तद्धर्मकाभावात्। एतेनैव 'पुंसा तु पुरुषः श्रीमान् ज्ञानगम्यो न चान्यथे'ति शैवमपि व्याख्यातप्रायम्। 'यत्पुरुषेण हविषे'त्यत्र तु विराट्पुरुषपरः। यत्तु पुरिशयनप्रयुक्तं पुरुषत्वं, तत्तु प्रथमं ब्रह्मण एव। 'स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तते'ति, 'पुरुसञ्ज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरि'रित्यादिभवदुपदर्शितवाक्येभ्यः। न तु शिवस्य, 'यस्मात्पुर्यनुशेते च तस्मात्पुरुष उच्यते'इति भवदुपदर्शितलैङ्गेऽनूपसर्गेण पश्चात्प्रवेशबोधनात्। 'पुरुषो नाम सम्पूर्णः शिवः सत्यादिलक्षणः। साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वे'ति स्कान्दब्रह्मगीतायामपि पुरुषगुणपौष्कल्यादेव पुरुषत्वबोधनम्। 'श्रिय'मित्यनेन तदंशभूते तस्मिञ् श्रीसाहित्यबोधनपूर्वकं सत्यादीनां तेषां तत्र पूर्वोक्तश्रुतौ बोधितानामत्र परामर्शात्। 'साम्ब'मित्यनेन तदीयश्रीव्याकरणाच्च। 'नान्य'इति तु शिवादिचतुष्टयातिरिक्तस्य पुरुषगुणपौष्कल्यपर्युदासकं, न तु शिवे तदसाधारण्यबोधकं; युक्तीनामुक्तत्वात्। निर्णयस्तु न पुरुषपदेनेति तु युक्तमेवोक्तम्। अन्यथा 'अन्तस्तद्धर्मोपदेशा'दितिसूत्रवैयर्थ्यप्रसक्तेः। शक्तिसङ्कोचग्रस्तानां श्रुतीनां सामर्थ्यकौण्ठ्यमवधार्यैव भगवता सूत्रकारेण ब्रह्मविचारे लिङ्गाद्याद्रियते इत्यस्य दृश्यमानत्वात्।

यत्तु गीतोक्तविश्वरूपस्य शैवत्वमङ्गीकृतं, तत्तात्पर्यं त्वग्रे वक्ष्यामः।

यत्पुनः शिवादिनाम्नां विष्णुवाचकत्वे वृत्त्यन्तरोच्छेद इति दूषणमुक्तं, तदपि गुणमूर्तिवाचकत्व एव, न तु परब्रह्मपरत्वे; युक्तीनामुक्तत्वात्। अत एव 'नामानि तव गोविन्द यानि लोके महान्ति च। तान्येव मम नामानि नात्र कार्या विचारणे'ति हरिवंशीये शिववाक्येऽपि स्वस्य तदात्मत्वेन तन्नाम्नां स्वनामत्वमुक्तं शिवेन, न तु स्वनाम्नां तन्नामत्वमिति युज्यते। मैत्रायणीयोक्तप्रतिपुरुषत्वेन वा। 'सर्वाणि ह वा एतस्य नामधेयानि' इत्याश्वलायनस्मरणमपि श्रद्धाविशेषप्रयुक्तमिति न तेन वस्त्वन्तरनिर्णयलोपः। अतो वृथायमाडम्बर इति दिक्। मन्त्रोपनिषदर्थमप्यग्रे विचारयिष्यामः।

यत्तु तत्र 'शब्दादेव प्रमित' इत्यत्र 'ईशानशब्द एव शब्दशब्देन विवक्षितः' इत्युक्तं, तन्न। भवदुपजीव्यमतेऽपि विषयवाक्यस्थ ईशानो भूतभव्यस्येति

---

ईशानपदश्रुत्या पुरुषसूक्तस्य शैवत्वप्रतिपादनाय 'शब्दादेव प्रमित' इति सूत्रे 'शब्दशब्दे वेशानपदमुच्यते' इति शिवतत्त्वविवेककृताङ्गीकृतं, तदुपक्षिप्य दूषयति यत्तु तत्रे-

चरणरूप एव शब्दः प्रकृष्टमानहेतुत्वेन विवक्षितो न तु पदरूपः। इमं पादमेव धृत्वा 'न ह्यन्यः परमेश्वराद् भूतभव्यस्य निरङ्कुशमीशिते'ति व्याख्यानात्। श्वेताश्वतरे 'प्राणाधिपः सञ्चरति स्वकर्मभिः अङ्गुष्ठमात्रो रवितुल्यरूप' इति जीवे प्राणाद्याधिपत्यस्योक्तत्वात्। केवलेन सन्देहानिरासाच्च।

यत्तु चतुर्विंशे श्लोके ब्रह्मतर्कस्तवे च ईशितव्योपादानेऽप्यवयवशक्त्या यौगिकार्थं प्रतिपादयत एव तस्य समुदायशक्त्या शिवप्रतिपादकत्वस्यौत्सर्गिकत्वं दुर्वारमित्युक्तं,

तन्न। अथर्वशिरसि तैत्तिरीये च 'ईशानमस्य जगत' इति, 'ईशानः सर्वविद्याना'मिति योगपुरस्कारेणैव शिववाचकत्वव्यवस्थापनात्, तद्विरुद्धाया अभिधानस्मृतेः सर्ववेष्टनस्मृतिवदनादरणीयत्वात्। आदरणीयत्वेऽपि शिवव्युदासकत्वेनैव भूतभव्यपदसार्थक्यात्। अन्यथा यौगिकार्थग्रहणस्यात्र प्रयोजनाभावेन तद्वैयर्थ्यापत्तेर्दुर्वारत्वात्।

वस्तुतस्तु सम्पूर्णवाक्यरूप एवात्र शब्दोऽभिप्रेयते। दहरवाक्ये सूक्ष्मस्य व्यापकत्ववदङ्गुष्ठमात्रस्य भूतभव्येशानत्वबोधनस्यात्र विवक्षितत्वात्। शब्दशब्दस्य शाब्दबोधकरणभूते वाक्य एव प्रसिद्धत्वेन यथाश्रुतार्थसमर्थनसम्भवे क्लिष्टार्थान्तरकल्पनस्य लिङ्ग इव श्रुतावपि तौल्यात्। पदपदज्ञानपदार्थकर-

---

त्यादि। उपजीव्यविरोधं सोढ्वाऽपि ईशानश्रुत्या निर्णयाङ्गीकारे दूषणमाह श्वेतेत्यादि। तथा च ईशितव्योपादानमन्तरेण केवलश्रुत्या पूर्वार्धसहितया च तया निर्णय इत्यर्थः।

ईशितव्योपादानेऽपि तस्य तात्पर्यग्राहकत्वमेव, निर्णयस्तु योगरूढेशानपदश्रुत्यैवेति मतमुपक्षिप्य दूषयति यत्त्वित्यादि। ईशानपदप्रसङ्गेन क्रमप्राप्तसप्तदशश्लोकदूषणं विहाय चतुर्विंशश्लोकोक्तं ब्रह्मतर्कोक्तं चैकहेलया दूषयति यत्तु चतुर्विंश इत्यादीति। अथर्वेत्यादि। तथा च श्रुतिविरुद्धत्वान्नेशानपदस्य शिवे रूढिरिति केवलयौगिकत्वदूषणं भ्रान्त्यैवेत्यर्थः।

नन्वभिधानस्मृतेः सर्वसम्मतत्वान्न सर्ववेष्टनस्मृतितुल्यत्वमित्यत आह आदरणीयेत्यादि। शिवव्युदासस्याविवक्षितत्वे ईशानपदेनैव भूतभव्येशानशीलशिवप्राप्तौ सत्यां श्रुत्यैव परमात्मनिर्णयात्तद्वैयर्थ्यमिति यदीशितव्यभूतभव्योपादानं तेनेशानपदवाच्ये भवदभिमते कथञ्चिदीशानशीलमेव, नतु निरङ्कुशं तदिति स्फोर्यते इत्यर्थः।

शङ्करमतेऽप्यस्वरसं स्फुटीकरोति वस्तुत इत्यादि। लिङ्गयोः समानसङ्ख्यत्वेन श्रुतेश्च साधारणत्वेनानिर्णायकत्वाद्वाक्यरूपस्य विवक्षितत्वेऽपि विरुद्धधर्माधारत्वस्याधिकधर्मस्य सम्पूर्णेनैव लाभात्तथेत्यर्थः। शब्दशब्देन लिङ्गग्रहणे शब्दासामञ्जस्यं यत्तेनोक्तं, तत् श्रुतिग्रहणेऽपि तुल्यमित्याह शब्देत्यादि। क्लिष्टार्थान्तरकल्पनस्येति। शब्दविशेषे विवक्षित-

णपक्षादेर्वैयाकरणैरेव दूषितत्वेन वाक्यकरणपक्षस्यैवादरणीयत्वात्। एवं सति 'उतामृतत्वस्येशान' इतीशानपदश्रुतिः रूढ्या शिवमुपस्थाप्य 'सूक्तनयति तद्वश'मिति पुरुषसूक्तस्य शैवत्वं यदुद्भावितं, तदपि निरस्तम्। ईशानादिपदानां भगवत्परत्वस्य पूर्वमुपपादितत्वात्। 'अमृतत्वस्येशान' इतीशितव्यामृतत्वस्य 'अमृतस्य वा एतानि नामधेयानि' इति जाबालोक्तशतरुद्रियलिङ्गितामृतशब्दवाच्यशिवत्वरूपस्य सामर्थ्येन 'अग्निमूर्धा' 'शन्नो देवी'रित्यादीनां कुजशनैश्चरादिष्विव शिवे विनियोगस्यापि सम्भवात्। विनियोगविधिविचारेऽपि बोधायनसूत्रादौ शिवपरत्ववत्सामविधानब्राह्मणाथर्वणीयमहाशान्तिप्रकरणशौनकबोधायनस्मृतिषु मतान्तरप्रतिपन्नविष्णुपरत्वस्यापि सत्त्वादैन्द्र्याधिकरणन्यायस्योभयत्र तौल्यादुपबृंहणादिसाधारण्याच्च न भवदभिमतशिवैकान्तं भवितुमीष्टे। 'नान्यः पन्था अयनाय विद्यत' इत्यादिमन्त्रैर्ब्रह्मपरत्वस्यैव निर्णयाच्च।

यत्तु पुरुषसूक्तविवरणस्मृतीनां विनियोगनिर्वाहार्थत्वमुक्तं, तत्तु आदित्यपुराणे 'अथर्वशिरसा वापि रुद्रेण च तथैव चे'तिस्नानमन्त्रेष्वथर्वशिरसोऽपि गणनात् 'प्रणवः शतरुद्रियं तथाथर्वशिरःशिखे'ति शिवयोगनिरूपणे स्वाध्यायत्वेनाथर्वशिरःशिखयोर्गणनात् शिखाशैवत्वव्यापकशैवलैङ्गाद्युक्तविवरणस्मृतीनामपि विनियोगनिर्वाहकत्वं स्फोरयद् भवत्पाण्डित्यशैवोपप्लावकमिति, किमतोऽधिकं वदामः ?

---

त्वकल्पनस्य। वाक्यकरणपक्षस्येति, ज्ञायमानवाक्यकरणपक्षस्येत्यर्थः। एवमीशानपदस्य श्रुत्याभासत्वं समर्थयित्वा, तत्प्रयासवैयर्थ्यमाह एवं सतीत्यादि। निरासिकां युक्तिं स्मारयति ईशानादीत्यादि। 'नमकं चमकं चैव पूर्षसूक्तं च नित्यशः। जपन्नोति महादेवं गृहं गृहपतिर्यथा' इत्यादिपुराणे बोधायनसूत्रादौ च पुरुषसूक्तस्य शिवप्राप्तिरूपफलकथनात्पुराणान्तरे शिवजपे विनियोजनात्तदभिषेकमन्त्रेषु गणनाच्च, पुरुषसूक्तस्य वैष्णवविद्यात्वमनादृत्य शिवैकान्तत्वमभिमन्यमानेन या युक्तय उक्तास्तासां साधारणत्वं बोधयन् हेत्वन्तराण्याह अमृतत्वस्येत्यादि।

शैवलिङ्गाद्युक्तविवरणस्मृतीनामिति। चतुर्दशश्लोके 'यस्मात्सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रपूर्वकम्। सहभूतेन्द्रियैः सर्वैः प्रथमं सम्प्रसूयते' इत्यादिरूपायाः शिवपुराणीयशिखाविवरणस्मृतेः षोडशश्लोकाभास उक्तानां 'सर्वमन्यत्परित्यज्य शिव एव शिवङ्कर' इत्यादीनामित्यर्थः। उपप्लावकमिति। तेनापि निष्कर्षाभावात् पाण्डित्यवैयर्थ्यापादकमित्यर्थः।

यत्तु ज्ञानघनापरनामा 'वेदरहस्य एवार्थोऽयं पशुबन्धो न तु लौकिकः, तथाहि, 'देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् । तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः । तेन देवा अयजन्ते'ति । अत्र कमयजंत ? महेश्वरम् । कथं ? तं 'यज्ञं पुरुष'मिति' प्रतिसन्धानाद्'यज्ञो वै विष्णु'रिति श्रुतेः । 'यज देवपूजायाम्' । देवः शिवः । यज्ञः क्रिया, न द्रव्यादि । यज्ञपुरुषो विष्णुः पशुरूपेण यज्ञोपकरणं, न क्रिया । एवमन्वयः । देवा ब्रह्मादयो यष्टारः, यज्ञोपकरणानि विष्णुप्रभृतयः, यज्ञः या क्रिया, तया सन्तोष्यो महेश्वरः । अपि च, आलम्भनार्थं प्रोक्ष्यमाणस्य बलिरूपस्य पशोरवश्यं पशुपतये निवेद्यमानत्वसिद्धेः । 'इमं पशुं पशुपते त इति' पशुना रुद्रं यजेतेति च विधिः । एवञ्च, 'यज्ञेन यज्ञमयजन्त देवा' इत्यत्रापि, देवा यज्ञेन क्रियाकर्तारः, करणभूतेन विष्णुना पशुना यज्ञमयजन्त, अध्वरराजस्य महेश्वरस्य पूजां निर्वर्तितवन्त इत्यर्थः । यथा 'विधिं विधत्ते' इत्यत्र 'विधिं करोती'त्यर्थो नान्य' इत्याह ।

तत्रास्मिन् पशुबन्धे वेदरहस्यत्वमलौकिकत्वं च सत्यमेवोक्तवान्, परं त्वबोधात् । तथाहि, 'अत्र हि मानसो यज्ञः कल्पनयोपदिश्यत' इति सायणभाष्ये व्याख्यातं, नारायणस्यैवेज्यत्वं च । उचितं चैतज्जरामर्याग्निहोत्रवत् । न तु द्रव्यमयः । अत एव 'वसन्तोऽस्यासीदाज्य'मित्यादिभिः कालावयवादीनामाज्यत्वादिकल्पना । अग्रे 'कतिधा व्यकल्पय'न्निति प्रश्नश्च । तदिदं न बुद्धमिति ।

अथास्तु द्रव्ययज्ञ एवायम् । तथापि तत्प्रकारो न बुद्धः । यतः, 'सहस्रशीर्षा' इत्यादिनोक्तस्य पुरुषस्य जन्मानिरूपणात् 'तस्माद्विराडजायते'त्यादिना विराड्देहस्य तदभिमानिपुरुषस्य च तस्मादुत्पत्तिकथनाद्, 'यदास्य नाभ्यान्नलिनादहमासं महात्मनः । नाविदं यज्ञसम्भारात्पुरुषावयवादृते' इत्यारभ्य, 'तमेव यज्ञपुरुषं तेनैवायजमीश्वर'मिति द्वितीयस्कन्धे पुरुषसूक्तव्याख्यानाध्याये ब्रह्मोक्तेश्च तस्य सहस्रशीर्ष्ण आदिपुरुषस्यैवेज्यत्वम् । तदुत्पन्नविराडवयवा एव द्रव्याणि, स च विराट् । तदवयवोत्पन्ना ब्रह्मादयश्च कर्तारः । 'स आत्मनो वपामुदखिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरः समभवत[१] स्वायै देवताया आलभते'तिवत्स्वेन स्वयागस्य लोकवैलक्षण्यादलौकिकत्वं

पुरुषसूक्तस्य शैवत्वकथनमुपहसितुं तच्छैवत्वख्यापकं ज्ञानघनमतं यत्त्वित्यादिना-

१ शृङ्गविहीनः ।

वेदरहस्यत्वं च, नतु भवदभिमतरीत्या। शिवेज्यतागमकस्यात्राभावात्। यज्यर्थविशेषणाक्षेपेऽपि 'देवः पूज्ये पिनाकिनी'ति कोशात्पूज्यस्यैव प्रथममुपस्थितिर्न शिवस्येति बुध्यताम्। यदि च पूज्यपदं पिनाकिविशेषणमिति मनुषे, तर्हि सर्वरूपो भगवान् परमपुरुष एव सोऽस्तु। 'त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम्। बह्वाचार्यविभेदेन भगवन्समुपासते' इति वाक्यात्।

अथाग्रहवाद एव चेत्तव रोचते, तदा स एव भवन्तं चिकित्सति। तथाहि अमृतशब्दो महेश्वरवचनो भवतोपदर्शितः शतरुद्रियेणेति। 'अमृतस्य वा एतानि नामधेयानी'ति जाबालश्रुतिमालम्ब्य पुरुषसूक्ते च 'उतामृतत्वस्येशान' इति 'विराजो अधिपुरुष'इति चोक्तम्। एवं सति अमृतपदाभिधेयस्य शिवस्य यदमृतत्वं तदीशिता सहस्रशीर्षेति तमिज्यं तोषयितुं विराजोऽधिजातेनामृतपुरुषेण हविषा देवा ब्रह्मादयो यज्ञमतन्वत' । अत एव भवदभिमतः पशुपतिरिति पशुश्रेष्ठत्वात्तमेव पुरुषं पशुमबध्नन् प्रौक्षंश्च। तदेव गमयति 'पुरुषं जातमग्रत'इति, हिरण्यगर्भादप्यग्रे जातमित्यर्थः। 'पुरुषो वै रुद्र'इति च श्रुतिः। एवं च सति 'यज्ञेन यज्ञमयजन्ते'त्यत्रापि इज्यते देवत्वेन पूज्यते इति यज्ञस्त्वदभिमतः पिनाकी, तेन करणेन 'यज्ञमयजन्त' आदिपुरुषस्य पूजां निवर्तितवन्तः। 'यथा विधिं विधत्ते'इत्यत्र विधिं करोतीत्येवार्थो नान्य इति भवदुक्तमेवात्र पोषकम्।

किञ्चात्र 'तस्माद्यज्ञात्सर्वहुत'इत्युक्तं तदप्येतत्पोषकम्। सर्वस्य रुद्रस्य हुत् होमो यत्रेति सर्वहुदिति व्युत्पत्तेः। सर्वशब्दश्च शिववचनः। 'सर्वो वै रुद्र' इति 'सर्वाय नम' इत्यादिश्रुतेः। अग्रे च 'ऋचः सामानि जज्ञिरे' इत्याद्युक्तं, तदपि युज्यते। 'वेदः शिवः शिवो वेद'इत्यादिवाक्यात्। अग्रे च ब्राह्मणाद्युत्पत्तिरुच्यते देवानां च। तेन ब्राह्मणादयोऽपि रुद्रविष्णुब्रह्मेन्द्रा एव देवप्रकरणत्वाद् ग्राह्याः। 'ब्राह्मणो भगवान् रुद्रः क्षत्रियो विष्णुरुच्यते। ब्रह्मा वैश्यस्तथा प्रोक्तो वासवः शूद्र उच्यते'इति स्कान्दात्। एवं हुतः सन् पश्चादवध्यत्वाय ब्राह्मणो जात इत्यलमाग्रहवादैः।

तस्माद्यदत्र वैष्णवैरेकदेशिभिरुक्तं, पुरुषशब्दस्यानेकसाधारण्येऽपि

---

ऽनूद्य प्रकारत्रयेण दूषयति तत्रेत्यादिना आहग्रहवादैरित्यन्तम्। तथा च यमुपजीव्यायं शिवतत्त्वविवेकाडम्बरस्त्वया कृतः स त्वेवं भ्रान्तः, तेन तवापि तत्तुल्यकक्षत्वमित्यर्थः।

तेन सिद्धमाह तस्मादिति। पूर्वोक्तमतद्वयस्याप्याग्रहेण दुष्टत्वादित्यर्थः। अत्रेति।

आरुणकेतुके 'पूर्वमेवाहमिहास'मितीति कूर्माकृतिलिङ्गोपस्थापितस्य नारायणस्य वचनं प्रदर्श्य, 'तत्पुरुषस्य पुरुषत्व'मिति तदर्थं तत्र पुरुषशब्दस्य प्रवृत्तिनिमित्तमभिधाय, 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद् भूत्वोदतिष्ठ'दित्यनन्तरं पाठात्, 'सहस्रशीर्षे'त्यादिमन्त्रस्थपुरुषशब्दस्य तत्प्रवृत्तिनिमित्तकत्वेन नारायणपरत्वनिर्णयात्तस्य च सूक्तादौ श्रवणात्, 'महादेवं वा महापुरुषं वार्चये'दिति कल्पसूत्रप्रयोगावगमिततदसाधारण्यस्य महापुरुषशब्दस्य 'वेदाहमेत'मितिमन्त्रे पाठात्, 'श्रीश्च ते लक्ष्मीश्च पत्न्या'विति लक्ष्मीपतित्वलिङ्गोपन्यासेन 'यमन्तः समुद्रे कवयो वयन्ति विद्युतः पुरुषादधी'ति समुद्रशायित्वविद्युद्वर्णपुरुषत्वलिङ्गितपुराणादिप्रदेशविशेषप्रतिपादितकनकवर्णनारायणमूर्तिप्रतिपादनपरेण 'अम्भस्य पार'इति सूक्तेन, स्मृतिषु तत्समाराधने हविर्निवेदनविनियुक्तैः 'हिरण्यगर्भः समवर्तताग्रे'इत्यादिमन्त्रैश्च, 'सहाद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टा'विति तदनुवादकश्रुतिवाक्यापादितैनैकवाक्यत्वेन च, नारायणपरतया प्रसिद्धेन समनन्तरानुवाकेन स्वप्रतिपाद्यमहापुरुषमहिमवर्णनप्रवृत्तेनैकवाक्यत्वान्नारायणानुवाकेन नारायणे प्रतिपन्नस्य सहस्रशीर्षत्वादिधर्मजातस्य सुबालोपनिषदि 'चक्षुश्च द्रष्टव्यं च नारायण' इत्यादिना नारायणात्मकत्वं सर्वस्योक्त्वा, तदुपसंहारे पठितस्य 'पुरुष एवेदꣳसर्व'मिति मन्त्रस्य च प्रत्यभिज्ञानात् 'पुरुषे नारायणेन यजमान उपतिष्ठेते'त्यापस्तम्बादिभिस्तन्नाम्ना सूक्तव्यपदेशाच्च, नारायणपरत्वमस्य स्फुटमिति।

तदपि युक्तमेव। यत्त्वेतस्य गगनकुसुमायमानत्वमुक्तं, तदेव परं तथा, आरुणकेतुकसन्दर्भविरोधात्। तथाहि, तत्र हि'स तपोऽतप्यते'त्यादिना कामानन्तरभाविनीं सृष्टिमुपक्रम्य, शरीरधूननानन्तरमरुणकेतुवातरशनवैखा-

---

चतुर्विंशे श्लोके 'निर्णया'दित्यारभ्य 'व्यपदेशाच्चे'त्यन्ता षड्हेतवः पुरुषसूक्तस्य नारायणपरत्वे बोध्याः। सूक्तेनेति तृतीयान्तस्य मन्त्रैश्च सहेति सहपदेनान्वयादुपन्यासेनैकवाक्यत्वेन चेति तृतीयान्तद्वयं नारायणपरतया सिद्धेनेत्यस्य साधकम्। नारायणानुवादक इति। 'सहस्रशीर्षं देव'मित्यनुवाके।

नन्वारुणकेतुके कूर्मस्यापूर्वपुरुषभावापत्तिकथनेन सहस्रशीर्षमन्त्रस्थपुरुषपदस्य 'पूर्वमेवाहमिहास'मित्येतद्वाक्योक्तयोगनिमित्तकत्वं दूषयित्वा, 'पुरुषो नाम सम्पूर्ण' इति स्कान्दोक्तं शिवस्य पूर्णत्वं वाधूलसूत्रसहायादङ्गीकृतमिति न पूर्वोक्तं साधीय इत्याकाङ्क्षायां यत्त्वेतस्येत्यादिना तत्स्मारयित्वा दूषयितुमुपक्रमते तथा हीत्यादिना। आरुणकेतुकश्रुति-

नसवालखिल्यानामुत्पत्तिरसस्यापां सम्बन्धित्वं चोक्त्वा पठ्यते, 'अन्तरतः कूर्मं भूतꣳसर्पन्तं तमब्रवीत्। मम वै त्वङ्मांसात्समभूत्। नेत्यब्रवीत्। पूर्वमेवाहमिहास'मिति तत्पुरुषस्य पुरुषत्वं, 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद् भूत्वोदतिष्ठत्, तमब्रवीत्, त्वं वै पूर्वं समभूः, त्वमिदं पूर्व कुरुष्वेति' इत्यादि। अत्र हि ऋषीणां सृष्टिः कामितेति प्रश्नाद्यभावादवसीयते। 'ततो जले पतिताद्रसात्कामिता न कापीति किं ततः कूर्मं सृष्टिरभूद्' इति जिज्ञासमानस्योत्कटकोट्या 'मम वै त्व'मित्यादिप्रश्ने कूर्मेण नात्कृत्य 'पूर्वमेवाहमिहास'मिति स्वस्य ततः पूर्वस्थितिकथनेन प्रजापतिशरीररसात्स्वोत्पत्तिर्निराकृता। तामेव स्थितिं निमित्तीकृत्य श्रुतिः 'कूर्मो वा निराह तत्पुरुषस्य पुरुषत्व'मिति। तथापि मयायमिदानीं दृष्टः कथमेवं वक्तीति प्रजापतेः संशयानपाये स परमात्मा कूर्मरूप एव स्वसामर्थ्यप्रकटनाय, तमपि स्वरूपमेकदेशे दर्शयिष्यन् सहस्रशीर्षादिरूपो भूत्वोत्थितः। तच्च रूपं न स्वकामितं न वा काकतालीयमिति। तदा जाते पूर्वत्वनिश्चये सामर्थ्यान्तरस्यापि ज्ञानाय सृष्ट्यर्थं चोदनं 'त'मित्यादिनोच्यते। तथा च व्यापक एव परमात्मा यः पूर्वं परिछिन्नः कूर्मो दर्शनगोचरोऽभूत्स एवैवं दर्शनगोचरो भूत्वोत्थित इति 'त्वं वै पूर्वं समभू'दितिकथनादवसीयते। अन्यथा पूर्वमृषीणामुत्पन्नत्वादत्रैवं न वदेत्। तस्माद्दर्शनगोचरीभाव एव 'भूत्वा' 'समभू'रित्येताभ्यामुच्यते इति कूर्मस्यापूर्वपुरुषभावापत्तिकथनं भ्रम एव। 'पुरुषो नाम सम्पूर्ण' इति स्कान्दं तु गौण्या वक्तीत्युक्तं प्राक्।

प्रकृतिविरुद्धं चैतत्। अत्र हि पूर्वस्थित्या पुरुषत्वं निरुक्तं, न तु पूर्णत्वेनेति। 'यत्र यत्र कर्मभ्रेषो यज्ञभ्रंशो वा तत्र तत्र पुरुषं चिन्तयन् पुरुषसूक्तं ब्रूयात् पूर्णत्वात्पुरुष इति विज्ञायते ही'ति वाधूलसूत्रमपि 'स भूमिं विश्वतो

---

स्तु 'स तपोऽतप्यत, स तपस्तप्त्वा शरीरमधुनुत। तस्य यन्मांꣳसमासीत्, ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्। ये नख्यास्ते वैखानसाः, ये वालास्ते वालखिल्याः, यो रसः सोऽपा'मिति। एतां व्याकरोति तत्रेत्यादि। एतत्सन्दर्भादग्रिमा श्रुतिस्तु मूले उपन्यस्तैव। पूर्वमिति रसस्याप्सम्बन्धात् पूर्वम्। एवं न वदेदिति। 'पूर्वं समभू'रिति न वदेदित्यर्थः। सिद्धमाह तस्मादिति।

ननु भवतु स्कान्दे गौणी। तथाऽप्यारुणकेतुकश्रुतिः पुरुषसूक्ते स्कान्दं नोपेक्षते इत्यत्र किं गमकमत आह प्रकृतीत्यादिना। ननु पुरुषशब्दस्य शिवे गौणत्वे 'पुरुषो वै

वृत्वा अत्यतिष्ठद्दशाङ्गुल'मिति मन्त्रेणैव चरितार्थमिति न स्कान्दमप्यपेक्षते । 'सर्वो वै रुद्र' इत्युक्त्यनन्तरं 'पुरुषो वै रुद्र'इति नारायणोपनिषन्मन्त्रेऽपि तस्य पुरुषत्वे हेतुत्वेन 'सन्महः'इति कथनाद्भगवद्विभूतित्वेनैव गौण्या पुरुषत्वं विवक्षितमित्युक्तमेव पूर्वम् ।

महापुरुषशब्दस्य भगवद्वाचकत्वं तु षष्ठस्कन्धे वृत्रवधे 'शूलं प्रगृह्याभ्यपतत्सुरेशं यथा महापुरुषं कैटभोऽप्स्वि'ति भगवद्धर्ष्यकैटभपदसमभिव्याहारादेव गम्यते । शक्तेः स्वतःसिद्धत्वेनाभिधानकोशे तदभावेऽप्यदोषात् । तथा वृत्रेन्द्रसंवादे 'भवानतारषीन्मायां वैष्णवीं जनमोहिनीम् । यद्विहायासुरं भावं महापुरुषतां गतः'। अग्रे च, 'निगीर्णोऽप्यसुरेन्द्रेण न ममारोदरं गतः । महापुरुषसन्नद्ध' इति नारायणवर्मसन्नद्धत्वकथनेन, दशमे 'अथैनमात्मजं वीक्ष्य महापुरुषलक्षण'मिति[1], एकादशे च 'महापुरुषमभ्यर्चे'दिति श्रीभागवते स्पष्टम् । तथा वराहे चेति न चोद्यावकाशः । तेन 'वेदाहमेतं पुरुषं महान्त'मिति पदभेदेऽपि न काचित् क्षतिः । उभयथापि सामर्थ्यस्य तुल्यत्वात् । शिवे गौण्याः सिद्धत्वेनात्रावयवार्थव्यवस्थितिसिद्धेर्योगरूढत्वनिश्चयात्, कल्पसूत्रे 'महावेदं महापुरुषं वा पूजये'दिति वाशब्देन रुद्रव्यवच्छेदाच्च, भवादिनामाष्टके 'महा-

---

रुद्र' इति निश्चयार्थकाव्ययघटितश्रुतिविरोधस्तेन दर्शितस्तं परिहरति सर्व इत्यादि ।

उत्तरनारायणस्य शिवपरत्वाय महापुरुषपदस्य न नारायणनामत्वमनुशासनाभावात्, प्रयोगमात्रस्य योगेनाप्युपपत्त्या शिवसाधारण्याच्च न तस्याभिधानश्रुतित्वमिति यत्तेनोक्तं, तत्रानुशासनविरहस्याप्रयोजकत्वं हृदिकृत्य प्रसिद्धपदसमभिव्याहारेण प्रचुरप्रयोगेण शक्तिग्रहं साधयति महापुरुषेत्यादि । तथा च 'एतद्वा अपां नामधेयगुह्यं यदाधावाः' 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इत्यादिश्रुतिस्मृतिषु कोशाननुशिष्टानामपि नाम्नां दर्शनात् 'कस्त्वमित्या'हमिति होवाचैवमेवेदं सर्वं तस्मादहमिति सर्वाभिधान'मिति तापनीयश्रुतौ प्रचुरप्रयोगस्यापि नामत्वगमकतयाङ्गीकारात् । कादाचित्कप्रयोगे लौकिक एव च तदुक्तदोषः, सोऽपि क्वचिदेवेति नात्र चोद्यावकाश इत्यर्थः । नन्वस्तु महापुरुषपदस्य भगवद्वाचकत्वं तथाऽप्यत्र 'पुरुषं महान्त'मिति पदद्वयश्रवणाद्यौगिक एवार्थो ग्राह्यः । तथा सति त्ववयवार्थस्याव्यवस्थित्या योगस्य शिवेऽपि साधारण्यान्नानुवाकस्य विष्ण्वेकान्तत्वं इत्याशङ्कायां, पूर्वोक्तादेव तस्याः दत्तोत्तरत्वमाह तेनेत्यादि । क्षतिरिति । विष्ण्वेकान्तत्वहानिः । उभयथापीति;

---

१ ततोऽग्रे "शुकोक्तौ, 'महापुरुष सत्पते' इति सुदर्शनवाक्ये, एकादशे च जनकजायन्तेयसंवादे 'महापुरुषमभ्यर्चेन्मूर्त्याभिमतमात्मन' इति, 'वन्दे महापुरुष ते चरणारविन्द'मिति, भगवद्वाक्ये च 'स्वर्णघर्मानुवाकेन महापुरुषविद्यया । पौरुषेणापि सूक्तेने'त्यादौ" इतीदृशः पाठो दृग्गोचरीभवति ।

देव' इति नामपाठात्, साम्बपुराणेऽपि 'पूज्यते यत्सुरैर्नित्यं महांश्चैव प्रमाणतः। धातुर्महेति पूजायां महादेवस्ततः स्मृत' इति महादेवनामनिर्वचनात्, केवलमहच्छब्दस्य तदवाचकत्वेन 'वेदाह'मितिमन्त्रे कथमपि भवदभिमतशिवप्रतीतेरभावात्। 'ह्रीश्च ते लक्ष्मीश्च पत्न्या'वित्यत्र ह्रीशब्दस्य 'श्रियं लक्ष्मीमौपलामम्बिकां गा'मिति तापनीयोदितदिशा हृल्लेखाया अपि भगवत्पत्नीत्वव्यवस्थापकतया, वाराहे 'ओमित्येकाक्षरीभूताया उमाया नारायणदारत्वकथनेन, ब्रह्मवैवर्ते प्रकृतिखण्डे भगवद्दर्शनक्षुभिताया गौर्याः शिवेन भगवदालिङ्गनोपदेशे लज्जिताया जाम्बवतीरूपावतारकथया च सिद्धे हृल्लेखाया गौर्या भगवच्छक्तित्वे, 'ह्रीश्चे'ति मन्त्रस्य स्मृत्यर्णवाद्युक्तग्रहयज्ञस्थसोमाधिदैवतगौरीपूजाविनियोगेऽपि दोषाभावात्, 'श्रियं लक्ष्मी'मिति मन्त्रस्यायुष्यसूक्तगतत्वेऽपि, 'एको रुद्र'इति संहितामन्त्रस्य कर्मविशेषे देवताविशेषपरताव्याख्यानमनादृत्य, श्वेताश्वतरमन्त्रोपनिषद्रूपपरविद्यास्थत्वानुरोधेन भवन्मते परशिवपरत्वं, तथा तापनीयरूपपरविद्यानुरोधेन भगवत्पत्नीपरत्वस्यैवोचित्यात्तव मते परशिवपराणां मन्त्रादीनां गौण्या गुणिरुद्रपरत्ववदस्यापि गौण्या भवदुपन्यस्तवायुसंहितावाक्ययोः 'तत्र माहेश्वरी लक्ष्म्या मूर्ति'रिति 'शक्तिर्माहेश्वरी परा महालक्ष्मीरिति ख्याते'तिभेदनिर्देशपरशब्दाभ्यां च तत्सदृक्षशक्त्यन्तरपरत्वेऽपि बाधकाभावाद्, द्व्याम्नानस्यैवमर्थवत्त्वसम्भवेनाप्रत्यवस्थयेत्वाद् वाजसनेयिनां 'श्रीश्च ते लक्ष्मीश्चे'ति पाठे सन्देहाभावाद्

---

पदोक्तौ वाक्योक्तौ चेत्यर्थः। सामर्थ्यतौल्यहेतूनाह–शिव इत्यादि। ह्रीशब्दस्य हृल्लेखाख्यगौरीवचनत्वेन 'ह्रीश्चे'ति मन्त्रस्य गौरीपूजाविनियोगेन 'श्रियं लक्ष्मी'मिति मन्त्रस्यायुष्यसूक्ते गौर्यां प्रयोगेण श्रीपदस्यापि गौर्यवस्थाविशेषवाचकतया तेनानुवाकस्य शिवैकान्तत्वं यदुक्तं तद्दूषयति ह्रीत्यादि सन्देहाभावादित्यन्तेन। दोषाभावादिति। भगवत्परत्वभङ्गाभावात्। अस्येति, 'श्रियं लक्ष्मी'मिति मन्त्रस्य। द्व्याम्नातस्येत्यादि। तृतीयस्याष्टमे 'द्व्याम्नातेषूभौ द्व्याम्नातस्यार्थवत्त्वा'दित्यधिकरणे। 'वाजस्य माप्रसवेणोदग्राभेणोदग्रभी'दित्यादयो मन्त्रा याजमान आध्वर्यवेऽत्र पठितास्ते किमुभाभ्यां पठितव्या उतैकेनेति सन्देहे स्थलद्वये कथनाद् द्वाभ्यां पठनीयाः, अन्यथा द्व्याम्नानवैयर्थ्यं स्यादिति सिद्धान्तितम्। तथा अत्रापि 'श्रियं लक्ष्मी'मिति मन्त्रस्य तापनीय आयुष्यसूक्ते चाम्नानादेकत्र विनियोगे द्व्याम्नानवैयर्थ्यं स्यादिति परविद्यायां मुख्यया वृत्त्या भगवच्छक्तिपरत्वम्। आयुष्यसूक्ते च गौण्या शिवशक्तिपरत्वमित्येवं तस्यार्थवत्त्वसम्भवेन उमापरतया समर्थनस्य क्लिष्टत्वेनापर्यवस्थेयत्वादित्यर्थः।

'अम्भस्यपार' इति सूक्तस्य समुद्रशायित्वविद्युद्वर्णत्वलिङ्गोपबृंहणतयादित्यपुराणीयसन्दर्भस्य विनिगन्तुमशक्यत्वाद्, 'हिरण्यगर्भ' इत्यादिमन्त्राष्टकस्थस्य 'य ईशेऽस्य द्विपदश्चतुष्पद' इत्यस्य पशुपदाभावेनालिङ्गत्वाद्वास्तविकेशत्वस्य भगवत्येव सत्त्वाच्च, 'अम्भस्यपार' इत्यादावसञ्जातविरोधत्वेन मध्यस्थरुद्रगायत्र्यादेरप्यङ्गत्वकथनेन, रुद्रशब्दस्य साधारणत्वेन च उपक्रमस्यैव प्रबलत्वात्, 'नैनमूर्ध्वं न तिर्यञ्चमेष हि देवः प्रदिशो नु सर्वा विश्वतश्चक्षु'रित्यादीनामुपक्रमप्रबलनारायणोपनिषन्मन्त्राणां प्रत्यभिज्ञानाद्, अथर्वशिरोमन्त्रोपनिषदादिष्वप्युक्तचररीत्या भगवत्परत्वस्यैव स्फुटीभावात्, 'प्रजापतिश्चरति गर्भे अन्त'रित्यत्र प्रजापतिशब्दस्यापि 'पाति यस्मात्प्रजाः सर्वाः प्रजापतिरिति स्मृतः । 'हिरण्यमस्य गर्भेऽभूद्धिरण्यस्यापि गर्भजः । तस्माद्धिरण्यगर्भोऽसा'विति भवदुपदर्शितलिङ्गनिर्वचनेन शिवनामसु प्रजापतिहिरण्यगर्भशब्दयोरपि

---

ननु 'अम्भस्य पार' इति सूक्तोक्तलिङ्गयोरादित्यपुराणे 'मध्ये लिङ्गं महाघोरं महाघोरेऽम्भसि स्थित'मिति 'तप्तहेमनिकायाभं शितिकण्ठं त्रिलोचन'मित्येताभ्यामुपबृंहणाद्, हिरण्यगर्भादिमन्त्राष्टकस्थे'य ईशेऽस्य द्विपदश्चतुष्पद' इति मन्त्रे 'एतावन्तो वै पशवो द्विपदश्चतुष्पादश्चे'ति श्रुत्यन्तरोक्तलिङ्गसद्भावान् मध्ये रुद्रगायत्रीश्रवणान् 'नैनमूर्ध्व'मित्यादीनां मन्त्रोपनिषन्मन्त्राणां प्रत्यभिज्ञानात्, प्रजापतिहिरण्यगर्भयोर्यौगिकशिवनाम्नोरत्र दर्शनाच्च, सिद्धे शैवत्वे तत्रो'क्ताद्भ्यः सम्भूत' इति वाक्यापादिततदन्तर्भावस्योत्तरनारायणानुवाकस्यापि शैवत्वात्, 'अहोरात्रे पार्श्वे' इत्यस्यार्धनारीश्वरे स्वारस्येन, 'नक्षत्राणि रूप'मित्यस्य वामनपुराणोक्ते त्रिपुरघ्नकालरूपे स्वारस्येन, रुद्राङ्गमन्त्रतया विधानेन च तथात्वात्, 'नारायणे'तिसूक्तसमाख्याया ऋषिसम्बन्धेनाप्युपपत्तेः, 'वेदाह'मिति मन्त्रेऽहम्पदस्यर्षिपरत्वेन तस्य वेद्याद्भेदे 'कर्मकर्तृव्यपदेशाच्चे'ति वैयाससूत्रे 'एतमितः प्रेत्यभिसम्भवितास्मी'ति श्रुत्युक्तप्राप्यप्राप्तृभावेन यथा मनोमयत्वादिगुणविशिष्टादुपास्यादुपासकस्य भेदः साधितस्तथा सिद्धे एकस्यैव नारायणस्यर्षित्वदेवतात्वाङ्गीकारे न्यायविरोधाच्च दृढे उत्तरनारायणानुवाकस्य शैवविद्यात्वे, पूर्वोक्तहेतूनामपि शिवपरत्वेनैव नेयत्वान्न पुंसूक्तस्य वैष्णवविद्यात्वं साधीय इत्याशङ्कायामाह अम्भस्येत्यादि । विनिगन्तुमशक्यत्वादिति । उत्तरतापनीये 'क्षीरोदार्णवशायिनं नृकेसरिविग्रह'मिति श्रावणात्पुराणेषु ब्रह्मविष्ण्वोस्तत्त्वप्रसिद्धेश्च तथेत्यर्थः । अलिङ्गत्वादिति । श्रुतौ 'येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदा'मिति यत्पदेन सर्वेश्वरत्वव्यवच्छेदात् 'शिवस्य पशवो जीवाः सर्वे संसारवर्तिनः' इति पुराणेऽपि संसारवर्तिन इति विशेषणेन तादृशामेव शिवेशितव्यत्वबोधनादितरद्विपाच्चतुष्पादीशत्वासिद्धेस्तथात्वादित्यर्थः । साधारणत्वेन । 'अग्नये रुद्रवते' इत्युपक्रम्य, 'एषा वा अस्य घोरा

शिव एव योगेन, तस्य च श्रुतौ गर्भचारित्वजातत्वकथनेन तज्जनकत्वस्य भगवति निश्चायनाद् 'अहोरात्रे पार्श्वे'इत्यत्रापि 'शर्वरी त्वमहं दिन'मित्युमामहेश्वरसंवादेऽर्धनारीश्वरस्य रूपे स्वारस्येनैव पार्श्वत्वबोधनात्, 'नक्षत्राणि रूप'मित्यस्यापि 'देवग्रहा वै नक्षत्राणी'तिश्रुत्युक्तनक्षत्राणां रूपत्वकथनेन सर्वदेवतामयत्वबोधनाद् रुद्राङ्गमन्त्रत्वेन विधानस्यापि 'उत्तरनारायणेन आदित्यमुपस्थाये'त्यापस्तम्बवाक्याद्, अन्यत्राप्यैन्द्र्याधिकरणन्यायेन सूपपादत्वाद्भेदवादेऽप्युत्तरनारायणस्य भगवत्परत्वनिश्चये, अभेदवादे सुतरां तथात्वाद् 'ऋषिर्नारायणः पुरुषो देवता पुरुषस्य हरेः सूक्त'मिति शौनकस्मरणादापस्तम्बेन च 'पुरुषेणे'ति देवताकथनाच्छौनकवाक्यैकवाक्याच्च 'नारायणाये'ति त्रिर्जपेदित्यत्रापि हरेरेव परामर्शोपपत्तेः, नारायणनाम्न ऋषित्वेऽपि बाधकाभावाद् 'वेदाहमेत'मित्यहम्पदस्याहङ्काराधिष्ठातृशिवपरतयाप्युपपत्तेः, कर्तृकर्मव्यपदेशादपि सूक्तस्य शिवपरत्वं न कथमपि जाघटीतीति बुद्धिमद्भिरवधेयम्। आग्रहवादिषु तद्रीत्यापि, किमधिकं वदामः?

अथर्वशिरस्तु शिखाविचारणैव विचारितप्रायं, रुद्रस्य मुख्यभगवद्विभूतिरूपत्वेन प्राज्ञवत्सार्वात्म्याद्युपदेशस्योपपत्तेश्च, तथापि परेषामाग्रहदर्शनात्त्रापि किञ्चिद्वदामः। तत्र प्रथमखण्डे 'देवा ह वै स्वर्गं लोकमगमन्स्ते देवा रुद्रमपृच्छन् को भवानिति,' अनेन रुद्रस्यापरलोकवासित्वं स्फुटति। ज्ञानोपासनादीनामग्रे वाच्यत्वात्तदतिरिक्तकर्मादिसाध्यस्वर्गताया लोके स्फुटीभावात्। ततः 'सोऽब्रवीदहमेकः प्रथममासीद्वर्तामि च भविष्यामि चे'ति प्रतिवचनभागेन नारायणललाटाज्जातत्वं, प्रतिकल्पं तथाभावश्च स्फुटीभवति। 'यस्याहं हृद-

---

तनूर्यद्रुद्र' इत्यादावग्नावपि प्रयोगात्तथेत्यर्थः। सर्वदेवतामयत्वबोधनादिति। तेन विश्वरूपात्मककालरूपे त्रिपुरघ्नरूपस्याप्यन्तर्भावबोधनादित्यर्थः। बाधकाभावादिति। भगवतः सर्वरूपत्वेन तथात्वादित्यर्थः।

एवं पुरुषसूक्तस्य वैष्णवविद्यात्वं दृढीकृत्य चतुर्विंशश्लोकार्थो दूषितः। अतः परं पञ्चविंशादिश्लोकत्रयोक्तरीत्याथर्वशिरसः शिवपरत्वस्य पुरःस्फूर्तिकत्वेऽपि न तदभिमते शिवे तात्पर्यमाह अथर्वेत्यादि। शिखाया यथा मायानुपहिते भगवद्रूपे शिवे तात्पर्यं तथास्यापीत्यर्थः। नन्वथर्वशिरसि रुद्रशब्दात्कथं शिखानिर्णयेन निर्णय इत्याकाङ्क्षायामाह रुद्रस्येत्यादि। आग्रहवादिनः प्रति तदुपपादयति तत्रेत्यादि। पञ्चाशे श्लोके महोपनिषदर्थव्याकुलीकरणाय या युक्तिस्तेनोक्ता तामत्र प्रदर्शयन्नथर्वशिरोऽर्थं तस्मात्प्रतिकूलयति यस्याह-

यादासं स ईशो विदधातु मे' 'लोहितो रोहितादासीत्' 'नन्दपत्न्यां भविष्यसि' 'ततो युद्धमवर्तते'त्यादावस्तिवर्ततिभवतीनामुत्पत्त्यर्थकत्वदर्शनात् सत्तार्थकत्वे 'आसी'दित्येकेनैव पदेन 'भविष्यामी'त्येतस्य साहित्ये द्वाभ्यां वा निर्वाहात् स्वस्य दर्शनगोचरत्वेन 'वर्तामी'त्यस्यानर्थक्यादुत्पत्त्यर्थत्वे 'त्वेक' इत्यनेन सर्वदेतरयौगपद्येनोत्पत्तिवारणे त्रयाणां सार्थक्यात्, 'नान्यः कश्चिन्मत्तो व्यतिरिक्त' इति भागस्य'कः प्रजापतिरन्योऽपि मद्व्यतिरिक्तो नोत्पन्न' इत्यर्थकत्वात्। 'सोऽन्तरादन्तरं प्राविश'दिति गुह्याद्गुह्यतरं परब्रह्मरूपं प्रविष्टः, अभेददृष्टिरित्यर्थात् । 'दिशो व्यन्तर'मित्यारभ्य 'एवं मां यो वेदे'त्यन्तेनोक्तदिक्प्रवेशसहितसार्वात्म्यसर्वोपास्यत्वयोरपि विभूतिमुख्यत्वाद्वा, शास्त्रदृष्ट्या वामदेववद्वामदेवत्वाद्वा उपपत्तेः। तथैव द्वितीयखण्डोक्तसार्वात्म्योपपत्तेस्तृतीयचतुर्थखण्डोक्तनामनिरुक्तेरपि वाच्यवाचकाभेदोपचारेण, प्रणव इव विभूतिविभूतिमतोरप्यभेदोपचारेणैवोपपत्तेः केषाञ्चित्पूर्वव्युत्पादनाच्च । पञ्चमखण्डे च तस्य सार्धचतुर्थमात्रयोपासने, पद्मनामकपदप्राप्तिकथनेन, पद्मस्य प्रजापत्यासनतया रुद्रोपासकानां मैत्रायणीयोक्तप्रजापतिप्राप्तिसिद्धेस्तस्यापि प्रजापत्यभेदसिद्धेः, 'तदुपासीत मुनयोऽवाग्वदन्ति तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो, येनर्षयः परमं पदं परायणं चे'ति तस्य मार्गपूर्वरूपताबोधनाद् 'बालाग्रमात्रे'त्यारभ्य 'रुद्रमेकत्वमाहु'रित्यन्तेन रुद्रमाहात्म्यमुक्त्वा, 'रुद्रो हि शाश्वतेन वै पुराणेनैष मूर्जेन तपसाभियन्ते'ति रुद्रस्यापि गन्तृत्वश्रवणाद् 'अग्निरिति भस्मे'त्यादिनोक्तपाशुपतव्रतस्य पशुपाशविमोक्षणत्वश्रावणेनाविद्वदधिकारित्वस्फोरणात् । षष्ठे खण्डे 'योऽग्नौ रुद्र' इत्यादिना व्याप्तिमुक्त्वा, 'अक्षरात्सञ्जायते कालः कालाद्व्यापक उच्यते । व्यापको हि भगवान् रुद्रो भोगायमान' इत्यनेन रुद्रस्वरूपं व्याप्तिहेतुभूतमुक्त्वा, सृष्ट्यादिकं पुनरप्युक्त्वा, तदर्चनस्य परमतपस्त्वं चोक्त्वा, सप्तमखण्डे 'अथर्वशिरोऽध्ययनेन श्रोत्रियभावा'दारभ्य 'तृतीयं जप्त्वा तमेवानुप्र-

---

मित्यादि । इत्यर्थकत्वादिति । तथा च देवैः 'कस्त्व'मिति पृष्टे 'सर्वदैव ब्रह्मणोऽपि पूर्वोत्पन्नोऽह'मिति प्रत्युत्तरं दत्तवानित्यर्थः । ननूत्पन्नत्वेऽग्रिमं माहात्म्यवाक्यमनुपपन्नं स्यादित्यत आह स इत्यादि । तदुपासीतेत्यादि । तत्पद्मनामकं पदमुपासीत ध्यायेत् । तत्र हेतुः मुनयः, वेदार्थवेत्तारः । अवागर्वाचीनं, अर्थात् परब्रह्मस्थानतः न, तस्य ग्रहणमुपासनादिसाधनमन्तरेण ज्ञानम् । अयं पूर्वोक्तोपासनरूपः पन्थास्तस्य विहितः । येन देवादयः परमं यान्तीति सम्बन्धः ।

विशत्यों सत्य'मिति पूर्वोक्तरुद्रानुप्रवेशकथनाच्च तावन्मात्रतासिद्धिरेव, न परमप्राप्तिरिति न सर्वतोज्यायस्त्वं, अतोऽत्र वस्तुयाथात्म्यमेवं प्रतिपाद्यते, न तु भवदभिमतरीत्येति दिक् ।

यत्तु 'स्वेन तेजसे'त्यन्तशिववाक्यमनन्तरं 'ततो देवा रुद्रं नापश्य'न्नित्यादेः श्रुतिवाक्यत्वस्य स्फुटत्वादित्युक्तं, तत्तु प्रसिद्धपाठाद्व्याख्यानतश्च विरुध्यते । 'तर्पयामि स्वेन तेजसा, ततो ह वै देवा रुद्रमपृच्छंस्ते रुद्रमपश्यंस्ते रुद्रमध्यायंस्ते देवा ऊर्ध्वबाहवो रुद्रं स्तुवन्ती'ति पाठदर्शनात् । रुद्रमपृच्छन्, तात्पर्येण पारमार्थिकं रूपं पुनरपृच्छन् । अपश्यन् यथाभूतं ज्ञातवन्तः । ततोऽध्यायन्, ध्यातवन्तः । तत उच्चैःस्तुवन्ति स्तुन्वन्ति स्मेति व्याख्यानदर्शनाच्च । अतो मूल एव कुठारः ।

अथास्तु तथा पाठः । तथापि न तवाभिमतसिद्धिः । अदर्शनोपपादकान्तर्द्धेः 'सोऽन्तरादन्तरं प्राविश'दित्येतावन्मात्रेणैव सिद्धे'र्दिशो व्यन्तरं प्राविश'दित्यग्रिमवाक्यवैयर्थ्यापत्तेर्दुवारत्वाद्व्यवहितान्वयाङ्गीकारस्तदुपपादनप्रयासश्च द्रविडमण्डकन्यायमनुभावयति ।

ये तूपबृंहणोक्ते अन्तर्धानादर्शने ते तु ब्रह्मभावेन वह्न्ययोगोलकवद्रुद्रस्य ब्रह्मान्तर्भावे रुद्ररूपेणादर्शनार्थके व्यवहितान्वयविरहेऽप्युपपन्नतर इति न किञ्चिदेतत् ।

---

न तवाभिमतसिद्धिरिति । 'सोऽब्रवीदहमेक' इत्यारभ्य 'स्वेन तेजसे'त्यन्तस्य शिववाक्यस्य पर्यवसानबोधायेति करणं 'ततो देवा रुद्रं नापश्य'मित्यनेनोक्तस्यादर्शनस्योपपादनायान्तर्धानं चापेक्षितमतस्तदर्थं 'मत्तो व्यतिरिक्त इति सोऽहं नित्यानित्य' इतिवाक्यमध्यगतस्येतिशब्दस्य व्यवहितान्वयः 'स्वेन तेजसे'त्यनेन कृत्वा, 'सोऽन्तरादन्तरं प्राविशद्दिशोऽन्तरं प्राविशत्ततो देवा रुद्रं नापश्य'न्नित्येवं श्रुतिवाक्यत्वेन कल्पनीयमित्येतस्य तवाभिमतस्य न सिद्धिरित्यर्थः ।

नन्वथर्वशिरउपबृंहणे सूतसंहितायां 'इत्युक्त्वा भगवान् रुद्रः पूर्णं रूपं समाविशत् । नापश्यंश्च ततो रुद्रं देवा विष्णुपुरोगमाः' इति, लैङ्गे च 'धर्मं धर्मेण सर्वं च तर्पयामि स्वतेजसा । इत्युक्त्वा भगवान् रुद्रस्तत्रैवान्तरधीयत । नापश्यंश्च ततो देवा' इत्युक्तं तस्य का गतिः? इत्यत आह ये त्वित्यादि । उपपन्नतरे इति । पूर्णं रूपं तत्रैवेताभ्यां ब्रह्मपरामर्शाङ्गुणे त्वन्यायकल्पनेतिन्यायेन पुराणवाक्य एव व्यवहितान्वयाङ्गीकारस्यौचित्याच्च तथेत्यर्थः ।

यच्च, प्रतर्दनाख्यायिकायां वामदेवसार्वात्म्यकथने च शास्त्रदृष्ट्या ब्रह्म-विषयत्वं युक्तं, इह तु 'को भवा'नित्यसाधारणरुद्ररूपप्रश्नात् तन्न्यायावकाश इत्युक्तं, तत्र नञस्त्याग एवोचितः। उत्पत्त्यर्थकास्त्यादिप्रयोगेणैव रुद्रेण स्वासाधारणरूपकथनादिभ्य इत्यलं वाग्जालैः।

अभेदवादे तु न कोऽपि विचारलेशः। तथापि यो विशेषः सोऽप्युपपादित एव।

ननु तर्हि श्वेताश्वतराणां मंत्रोपनिषदापरत्वं साधयिष्यामः। तथाहि, तत्रोपक्रमे ब्रह्मवादिनो वदन्ति, 'किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठाः। अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्था'मिति केषाञ्चिद्ब्रह्मवादिनां ब्रह्म जगन्मूलकारणमित्येतावन्निश्चितवतां कारणभूतः को देव इति विशिष्याऽबुध्यमानानां कारणं ब्रह्म किमित्यादिरूपान् संशयान् प्रदर्श्य, 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक' इत्यारभ्य 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः। संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं हरते विश्वमीश' इत्यादिभिस्तन्निर्णीतमर्थं प्रदर्शयद्भिर्मन्त्रैः कालाद्यवान्तरकारणवृन्दस्याधिष्ठाता हरेशादिशब्दवाच्यो भगवान् परमशिवः कारणमिति स्पष्टीकृतम्। न चात्र कारणं ब्रह्मब्रह्मादीनां मध्ये को देव इति संशयाकारादर्शनात् 'कालः स्वभावो नियतिर्यदृच्छाभूतानि योनिः पुरुष' इति चिन्त्यम्। 'संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतो'रिति मन्त्रे कालादिवादनिरासदर्शनात्तेषामेव कोट्यन्तरत्वस्फूर्त्तेर्न पूर्वोक्तं साम्प्रतमिति वाच्यम्।

---

युक्तमिति। तत्स्वरूपविषयकप्रश्नाभावाद्युक्तमित्यर्थः। कथनादिभ्य इति। आदिपदेन रुद्रप्रियधामव्यतिरिक्तस्वर्गस्थितेः 'सोऽन्तरादन्तर'मित्यादिवाक्यस्य च सङ्ग्रहः। तथा च तेजोविशेषदर्शनादपरलोकवासावगमाच्च संशयेन प्रश्ने रुद्रेण स्वस्वरूपं भगवद्विभूतिरूपं कथितं, तावता पूर्वौ न्यायानवकाशबीजाभावात् प्रश्नोत्तरवैयधिकरण्यस्य 'सत्यं भगवो विजिज्ञास' इत्यत्रेव मुख्योपदेशकथनप्रयोजनकत्वेन न्यायावकाशभङ्गाक्षमत्वाच्चेत्यर्थः।

एवं पञ्चविंशषड्विंशसप्तविंशार्थो निरस्तः। अत परं सप्तदशादिसप्तश्लोकार्थं दूषयितुं प्रथमतः सप्तदश उक्तमर्थं पूर्वपक्षिमुखेनोपक्षिपति ननु तर्हि श्वेताश्वेत्यादि। 'अमृताक्षर'मित्येकं पदम्। कर्मधारयेनामृतस्याक्षरत्वं विधीयते। 'सुपां सुलु'गित्यनेन लुप्तविभक्तिकं वा अमृतपदम्। क्षरात्मानावित्यादि। क्षरममृताक्षरपदोक्तमात्मानं चेत्यर्थः। पूर्वोक्तमिति। कारणब्रह्मधर्मिकत्वं संशयस्याङ्गीकृत्य तत्र को देव इति संशयाकारः। सामान्ये

द्वितीयकोटेस्तत्राश्रवणात्। संशयवाक्यं हि सामान्यतः सम्भावितयावत्को-ट्युपस्थापनक्षमकिंशब्दमात्रघटितं वा स्याद्, यथा कोयं वृक्ष इति विशिष्य-तत्तत्कोटिपरशब्दविशेषघटितं वा, यथायं वृक्षश्चूतः पनसो वेति। अत्र च विशिष्यैककोटिमात्रोपन्यासेन समभिव्याहृतब्रह्मपदान्वयलाभाय कोट्य-न्तराध्याहारावश्यकत्वेऽपि कालादीनां कोट्यन्तरत्वं न युज्यते। 'कालः स्वभा-वे'त्येतदग्रे पठितस्य 'ते ध्यानयोगानुगता अपश्य'न्नित्यस्यासङ्गतत्वापत्तेः। तत्र हि स्वतो निर्णयाशक्तानां तदर्थं देवताध्यानस्य श्रवणाद्विनैव देवताध्यानं तन्निर्णयाङ्गीकारे तद्वैयर्थ्यस्य दुर्वारत्वात्।

न च क्रमकोपाधिकरणन्यायेन पाठक्रमादर्थक्रमस्य बलवत्त्वाद्देवताध्यानो-त्तरमेव कोट्यन्तरनिरासोऽङ्गीकार्य इति वाच्यम्। कालादिकारणवादनिरासस्य ध्यानानन्तरत्वकल्पनाधीना कालादीनां कोट्यन्तरत्वसिद्धिस्तत्सिद्ध्यधीना च तन्निरासस्य ध्यानानन्तरत्वकल्पनेत्यन्योन्याश्रयत्वापत्तेः।

यदि च कारणधर्मिके तद्विशेषसंशये ब्रह्मातिरिक्तकालादिकोटिनिरा-सार्थत्वं मन्त्रस्य विभाव्यते; तदा तु यदृच्छापक्षासङ्गत्यापत्तिः। न किञ्चित्

---

नपुंसकम्। तत्रेति, श्रुतिवाक्ये। तथा च कारणधर्मिकमेव संशयमङ्गीकृत्य तत्किं ब्रह्म वा कालादिर्वेत्याकाराङ्गीकारे श्रुतिविरोध इत्यर्थः। तदुपपादयितुमादौ संशयवाक्याकारं सामा-न्यत आह संशयेत्यादि। न च किं यज्ञदत्त इतिवत्कारणधर्मिकोत्कटकोटिक एवायं संश-योऽस्त्विति वाच्यम्। 'कुतः स्म जाता'इत्यादीनामुत्कटकोटिशून्यविमर्शवाक्यानामसाम-ञ्जस्यापत्तेः। किं चास्मिन् पक्षे किंशब्दस्य विकल्प्यमानधर्मिपर्यन्तत्वं वा विकल्प्यमात्रपरत्वं वा। नाद्यः। प्रथमस्य सामान्यविमर्षपरत्वप्रतीत्या तदितरेषां विशेषविमर्षपरत्वमिति प्रतीत्या प्रतीतैकवाक्यताभङ्गप्रसङ्गो वाकाराद्यध्याहारप्रसङ्गश्च। द्वितीये 'कुतः स्म जाता' इत्यादौ धर्मिपर्यन्तानां किंशब्दानां प्रायः पाठानुरोधः। किं च कारणधर्मिके संशये कोटिद्वयो-पन्यासोऽपेक्षितः, सोऽपि न वक्तुं शक्य इत्याह अत्र चेत्यादि।

क्रमकोपेत्यादि। पञ्चमस्य चतुर्थे सूत्रं 'क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थ-परत्वा'च्चेति। तत्र 'ह्यग्निहोत्रं जुहोति यवागूं पचती'ति पाठक्रमः। स चेदाद्रियते तदा यवा-गूपाकस्य फलवत्त्वनियमाददृष्टार्थता स्यात्, सा च दृष्टे सम्भवत्यन्याय्येति। तं विहायार्थ-क्रमस्य बलवत्त्वं स्वीकृतं तन्न्यायेनेत्यर्थः।

प्रकारान्तरमनूद्य दूषयति यदीत्यादि। संशयाकारस्तु कारणं किं ब्रह्म वा काला-

कारणमिति पक्षस्य तत्स्वरूपत्वात्कारणकोटिप्रवेशालाभात् । संशयात् प्रागेव कारणस्य चेतनत्वसम्प्रतिपत्त्यभावेनाचेतनस्याधिष्ठातृत्वासम्भवेन चाधिष्ठिता केनेतिविमर्शानुपपत्तिश्च । तस्माद्ब्रह्म कारणमित्येतावन्निश्चितवतां कारणत्वेन सम्भाविता यावत्यः कोव्यस्तद्विकल्पविशेषितधर्मिपरेण किंशब्देन कारणं ब्रह्म ब्रह्मादीनां मध्ये किं रूपमित्येवं संशयाकारः पर्यवस्यति ।

एवं ब्रह्मणश्चेतनस्य कारणताया निश्चितत्वान्नाधिष्ठातृविमर्शानुपपत्तिः ।

नापि जगद्कारणकत्वान्यकारणत्वपक्षनिरासयोः। ताभ्यामेव ब्रह्मकारणतानिश्चयात् । पाठक्रमदौर्बल्यस्य पूर्वमेवोक्तत्वादिति सप्तदशे श्लोके शिवतत्त्वविवेककृतसाधनादिति चेत्,

अत्रोच्यते । नैवमत्रार्थः सम्भवति । 'कुतः स्म जाता' इत्यादिविमर्शग्रन्थासङ्गत्यापत्तेः । निश्चितकारणत्वाद् ब्रह्मण एव तत्सिद्ध्या विप्रतिपत्तेरेवानुदयात् । नच कुतो रूपादित्येवं विमर्शोऽप्युपपद्यत एवेति वाच्यम् । अप्रयोजकत्वादप्रयोजनकत्वाच्च । न च किं कारणं ब्रह्मेत्यस्य व्याख्यानभूतः शेषो भाग इति न कोऽपि दोष इति वाच्यम् । मानाभावात् । न च कौर्मशैवोपबृंहणमेव प्रमाणमिति वाच्यम् । तयोरितरेतरं त्वद्व्याख्यारीतेश्च विरुद्धत्वात् । 'समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः । वितेनिरे बहून्वादानात्मविज्ञानसंश्रयात् । किमस्य जगतो मूलमात्मा चास्माकमेव हि । कोऽपि स्यात् सर्वभूतानां हेतुरीश्वर

---

दिवेति बोध्यः । प्रवेशालाभादिति । तथा च तस्मिन् वाक्ये कारणधर्मिकत्वस्यैवासम्भव इत्यर्थः । दूषणान्तरमाहसंशयादित्यादि । कारणधर्मिके वाक्ये चेतनाचेतनान्यतरस्य कारणत्वेनानिश्चितत्वात्कारणे चेतनत्वनिश्चयाभावेनाचेतनाधिष्ठातृत्वासम्भवनिश्चितचेतनाधिष्ठातृकविमर्शवाक्यानुपपत्तिरित्यर्थः । यावत्य इति । नानाविधसृष्टिवाक्यश्रुतशब्दबोधित इत्यर्थः । तद्विकल्पा नारायणत्वादयः ।

ताभ्यामित्यादि । ताभ्यामधिष्ठातृविमर्शानुपपत्त्यभावान्यकर्तृत्वपक्षनिरासाभ्यां, तथा च शक्तिध्यानात् पूर्वमेव कालादिपक्षनिरासः । परंतु चिन्त्यमिति पदात्संशयधर्म्युपपादनपरतयान्वयो ब्रह्मशब्दस्य तदैव सम्भवति यदा स पूर्वं भवतीत्याशयं तस्याह पाठेत्यादि ।

परमनूद्य दूषयति अत्रोच्यत इत्यादि । अर्थ इति । कारणब्रह्मधर्मिकः संशय इत्याकारकोऽर्थः । निश्चितकारणत्वादिति । अत्र षष्ठ्यर्थे बहुव्रीहिः । अप्रयोजकत्वादिति । तद्गमकस्यात्रादर्शनेन तथात्वादित्यर्थः । अप्रयोजनकत्वादिति प्रयोजनाभावेन काकदन्तविचारप्रायत्वादित्यर्थः । विरोधं दर्शयितुं तदुपन्यस्तवाक्यान्युपक्षिपति सत्यमे-

एव चेति' कौर्मे । 'मुमुक्षया पुरा केचिन्मुनयो ब्रह्मवादिनः । संशयाविष्टमनसो विमृशन्ति यथातथम् । किं कारणं कुतो जाता जीवामः केन वा वयं ? क चास्माकं सम्प्रतिष्ठा केन वाधिष्ठिता वयं ? केन वर्तामहे शश्वत्सुखेष्वन्येषु वानिशं ? अविलंघ्या च विश्वस्य व्यवस्था केन वा कृता ? कालः स्वभावो नियतिर्यदृच्छा वात्र युज्यते । भूतानि योनिः पुरुषो योगो वैषां परोऽथवा । अचेतनत्वात्कालादेश्चेतनत्वेऽपि चात्मनः । सुखदुःखाभिभूतत्वादनीशत्वाद्विचार्यते ' इति शैवेऽम्बिकामाहात्म्ये । एवञ्च कौर्मे जगन्मूलस्वात्मनिमित्तभूतेश्वरधर्मिकाणां त्रयाणां संशयानां दर्शनाच्छैवे च कालादीनामचेतनत्वादात्मनो दुःखित्वानीशत्वाभ्यां यथासम्भवं जनकत्वाद्ययोगात्किंकारणमित्येकस्य कारणधर्मिकसंशयस्य दर्शनादुभयोरैकमत्याभावात् । जनकत्वादीनां कालादिनिरासकत्वेन प्रविष्टानां कारणव्याख्यारूपताया असम्भवाच्च । कारणभूतं ब्रह्म को देव इति संशयाकारस्योपबृंहणद्वयेऽप्यदर्शनाच्च । नापि निर्णयग्रन्थानुरोधादस्याकारस्य सिद्धिः । श्रुतौ 'उद्गीतमेतत् परमं तु ब्रह्मे' तिमन्त्रान्तग्रन्थेनैव तत्सिद्धेर्हरादिपदानपेक्षणात् । उपबृंहणयोर्विचार्यत्वाच्च । तस्मान्नैवं मन्त्रार्थः ।

---

त्यादि । 'कोऽपी' ति पदद्वय'मात्महेत्वीश्वर'पदैः प्रत्येकं सम्बध्यते । ऐकमत्याभावादिति । कौर्मे जडकारणधर्मिकः पूर्वः, द्वितीयतुरीयौ चेतनधर्मिकौ, तृतीयः साधारण इति नानेनोपबृंहणेन श्रौतस्य पाश्चात्यस्य पूर्वग्रन्थव्याख्यानरूपत्वप्रतीतिः । शैवे तथा प्रतीतावपि कौर्मविरोधेन ततो निश्चयस्यासिद्धिरिति भावः । जनकेत्यादि । कोव्यन्तरनिरासग्रन्थेऽपि अचेतनत्वादिभिर्हेतुभिः संशयवाक्यगतानां जनकत्वादीनां कालादिनिरासकत्वेनैव पर्यवसन्नानां तथात्वादित्यर्थः । यत्पुनः अत्र 'किमस्य जगतो मूल'मित्यनेन 'किं कारणं ब्रह्म ? कुतः स्म जाता ?' इत्येतदर्थो दर्शितः । 'आत्मा चास्माकमेव ही' त्यनेन 'जीवाम केने'त्यादिविमर्शजातार्थः। आत्मशब्दस्याधिष्ठातृपरत्वात् । 'कोऽपि स्या'दित्यादिना 'कालस्वभावे'ति मन्त्रप्रतिपादितकालकारणत्वादिवादनिरासस‍ामर्थ्यसिद्धसर्वकारणत्वसर्वेश्वरत्वविशिष्टपुरुषसम्प्रतिपत्त्युपन्यासेन संशयानां ब्रह्मधर्मिकत्वं स्पष्टीकृतमित्युक्तं, तन्न, कालादिकारणत्ववादनिरासस्यात्रादर्शनेन तादृशपुरुषसम्प्रतिपत्त्युपन्यासस्याशक्यवचनतया संशयानां ब्रह्मधर्मिकत्वस्य कौर्मेऽसिद्धेः । सन्दर्भे संशयानां नानाधर्मिकत्वस्यैव भानादेकधर्मित्वभानाभावेनापि तदसिद्धेश्च । तेनोभयोरप्युपबृंहणयोः कारणधर्मिक एवं संशयः स्फुटति न कारणब्रह्मधर्मिक इति भावः । व्याख्यातरीतिविरोधं स्फुटीकरोति कारणभूतमित्यादि । ननु निर्णयोपबृंहणानुरोधात्स आकारोऽस्त्विति चेत्तत्राह उपबृंहणेत्यादि । 'जीवाम केनेत्यादी' त्यात्रादिमदेन शिष्टविमर्शद्वयसङ्ग्रहः । ननु किञ्चित् कारणत्वं ब्रह्मणोऽस्तु किञ्चित्कालादीनामस्त्विति चेत्तत्राप्यनुपपद्यमानत्वमाह नापीत्यादी ।

कथं तह्यर्थः? उच्यते। 'किंकारणं ब्रह्मे'त्यत्र कारणावान्तरविशेषकोटिको ब्रह्मधर्मिक एव संशयः। ब्रह्म किंकारणं? निमित्तमुपादानं वेति। श्रुतिषु ब्रह्मणः कारणत्वाश्रवणेऽप्येकस्मिन्निखिलजगदुपादाननिमित्तभावस्यानुपपद्यमानत्वं तद्बीजम्। तदेवाहुः, न निमित्तं, 'कुतः स्म जाता' इति। नोपादानं 'जीवाम केने'त्यादि। नापि स्मार्तो वादः साधीयान्, विप्रतिपन्नत्वात्। नापि चतुर्विधो यदृच्छापक्षः, नियतावधिककार्यदर्शनात्। तदाहुश्चिन्त्यमिति। उत्तरार्धेन शिष्टपक्षद्वयदूषणम्। एवं सर्वेषु वादेषु स्मार्तेष्वसम्भवत्सु ब्रह्मणि कारणत्वोपचारोऽपि न शक्यशङ्क इति श्रुतेरनुपचरितार्थत्वमेवोचितमिति तन्निर्णयाय साधनमाह। 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्। यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक' इति। तथा च यः सकलकारणाधिष्ठाता तस्य काचिदात्मशक्तिर्वर्तते ययेदमेवं भवति। यथा पुरुषस्य कार्यकरणादौ सामर्थ्यं तद्वत्। इयं शक्तिर्न माया, न विद्या, नाप्यविद्या। प्रकृत्यमृताक्षरादिपदैस्तासामग्रे विवरणीयत्वात्। किन्तु 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'त्यनेन विवरिष्यमाणेयम्। अत एव भगवद्गुणैर्ज्ञानादिरूपैर्निगूढेत्युक्तम्। एवमस्याः साक्षात्कारे तेषामयं निश्चयो जातो यद्ब्रह्म स्वसामर्थ्येनैव सकलजगदाद्युपादाननिमित्तनियामकादिभूतमित्यर्थः। ततो विशेषजिज्ञासायां यादृशं ते स्मृतवन्तस्तदाह 'तमेकनेमी'त्यादिना 'अधीम' इत्यन्तेन मन्त्रद्वयेन। एवं बन्धहेतुत्वेनावगत्य मोक्षहेतुत्वेनापि तमेवावधारितवन्त इत्याह 'सर्वाजीव' इत्यादि। तथा च शबलत्वविशिष्टत्वादिना तस्य

---

शिष्टपक्षद्वयेति सर्वसंयोगकारणपक्षात्मकारणपक्षयोरित्यर्थः। तथा च 'ब्रह्म किंकारण'मित्यनेन ब्रह्मधर्मिकं कारणविशेषविकल्पकोटिकं सामान्यसंशयं प्रदर्श्य 'कुतः स्म जाता' इत्यादिना ब्रह्मण एकैकविकल्पपर्यवसाननिरासेन सर्वविधकारणरूपतामुत्थाप्य 'केनाधिष्ठितां व्यवस्थां वर्तामह' इत्यनेन सर्वविधकारणरूपत्वे व्यवस्थाभावप्रसज्जनेन तथात्वस्यापि निरासे कृते ब्रह्मणो यत्किञ्चित्कारणत्वं प्राप्तं, तदा कारणान्तरस्यावश्यकत्वेन स्मार्तान् कालादीनुपक्षिप्य, स्मार्तत्वसामान्येन तेष्वेकतरपक्षपातस्याशक्यत्वं हृदिकृत्य, चिन्त्यमित्यनेन च तान्निरस्य, ततो हेतुभ्यो शिष्टपक्षद्वये निरस्ते मन्त्राभ्यां ब्रह्मधर्मिकः कारणताविकल्पमात्रपरसंशयः पर्यवस्यति। तेन कौर्मस्य नैतदुपबृंहणत्वम्। शैवस्य तु ब्रह्मपदाध्याहारेणोपबृंहणत्वमनुमोदामह इति सूचितम्। तदेतद् हृदिकृत्याह एवमित्यादिना। अत्र ध्यानं ब्रह्मविषयकं ज्ञेयं, न तु शक्तिविषयकम्। यथा पुरुषस्येत्यादिना शक्तिस्वरूपविवरणेन ध्यानदर्शनयोर्विषयभेददोषः परिहृतः। तमेकेत्यादि। अत्र प्रथममन्त्रे 'विश्वरूपैकपाश'मित्यनेन द्वितीये च

ज्ञाने बन्धः। कैवलस्य तत्पृथग्भूतत्वेन ज्ञाने तेन जोषणेऽस्य मोक्ष इत्यर्थः। अत्रोत्तरार्धे पृथगात्मानं प्रेरितारं च मत्वेति कथनात् पूर्वत्र शक्तिसहितस्याधिष्ठातृत्वकथनाद्विशिष्टाद्वैतभ्रमः शबलाद्वैतभ्रमो वा स्यादिति तन्निवृत्त्यर्थमाह 'उद्गीतमेतत्परमं तु ब्रह्म तस्मिंस्त्रयं स्वप्रतिष्ठाऽक्षरं च। अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ता'इति। पूर्वं यदस्माभिरधीतं तत्तु परमेव ब्रह्मोद्गीतं न तु ततोऽतिरिक्तं किञ्चित्। ज्ञानप्रकारभेदादेव परं फलभेदः।' तं यथायथोपासते' इतिवदिति भावः। एतदेव विशदयन्ति। तस्मिन् परे ब्रह्मणि त्रयं सत्त्वादीनां ब्रह्मादीनां जाग्रदादीनां लोकानां वेदानां तेजोबन्नानामन्येषां च त्रयं, चोऽप्यर्थे, एतत्त्रयमपि स्वप्रतिष्ठाक्षररूपमेव न त्वतिरिक्तम्। तत्रापि विशेषः। अत्र एषु स्वप्रतिष्ठाक्षरात्मकेष्वपि सर्वेषु आन्तरं उत्कृष्टरूपं विदित्वा तत्पराः वेदविदः योनिमुक्ताः सन्तो ब्रह्मणि लीना इति। अतः पृथक्तया कथनं न दुष्टमित्यर्थः। एवं च 'संयुक्तमेतत् क्षरमक्षरं चे'त्यारभ्य षडध्याय्यायमेवार्थः समासव्यासाभ्यां प्रतिपाद्यते। हरादिशब्दास्तु भगवन्तमेव मुख्यवृत्त्याभिदधाना लिङ्गादिभिर्निर्णीता भवन्तीत्युक्तमेवाधस्तात्। अतो मन्त्रक्रमादिव्यत्ययमपि कृत्वा हरादिश्रुत्याऽन्यथाविचारो न रोचिष्णुः। एतेनैव सहकारिविचारो मायादर्शनकथनमविद्याकथनं च दत्तोत्तरम्।

यत्तु ब्रह्मविद्याधिदेवतायाः पराया शक्तेरम्बिकायाः प्रसादाद्विमृश्यमाणार्थनिर्णयो भविष्यतीत्यभिप्रायेण तां ध्यायतां तेषां तत्साक्षात्कारोपवर्णनपरत्वं 'ते ध्यानयोगानुगता' इति मन्त्रस्योक्तं, तत्किं मन्त्रसामर्थ्यादुपबृंहण-

---

विद्यानदीरूपप्रकाशनेन बन्धहेतुत्वं स्फुटति। जोषण इति। 'जुष्टस्ततस्तेनामृतत्वमेती' त्यनेनोक्त इत्यर्थः। अत इति। यत एकस्मिन्नपि ब्रह्मण्यान्तरबाह्यभावो वर्तते तस्मादित्यर्थः। एवं निर्णयः फलज्ञानपर्यन्तस्तेषां सिद्ध इति बोधयितुमुक्तार्थस्य सम्पूर्णोपनिषदर्थत्वं स्फुटीकरोति एवं चेत्यादिना। ननु तर्हि व्यासगतानां हरादिपदानां का गतिरित्यत्राह हरादीति। एतेन सिद्धमाह अतो मन्त्रेत्यादि। ननु ब्रह्म किंकारणमित्यस्य किमुपकरणकं किं सहकारिकमित्यर्थोऽस्तु, 'कुतः स्म जाता' इत्यादीनां किमुपकरणकात्किंसहकारिकादित्यर्थोऽस्त्विति पूर्वपक्षिमतं मायादर्शनानुरोधि यत्तेनोपन्यस्तं तदपि प्रदर्शितव्याख्यानेनैव परिहृतमित्याह एतेनेत्यादि।

मायाशक्तिं दूषयित्वा देवात्मशक्तिपदेनाम्बिका तेनाङ्गीकृता। तदुपक्षिप्य दूषयति तत्किमित्यादि। ईक्षतिकर्माधिकरणोक्तरीत्येति। समन्वयतृतीयपादे 'ईक्षतिकर्मव्यप-

बलाद्वा ? नाद्यः। तत्राम्बिकागमकस्य पदादेरभावात् । न च देवात्मशक्तिपदमेव गमकमिति शक्यवचनम्, अत्रत्यस्य देवपदस्य भवदभिमतशिववाचकताया एवात्र विप्रतिपन्नत्वेन तस्य तद्गमकत्वायोगात् । न द्वितीयः । तयोरितरेतर-विरुद्धत्वेनाबोधकत्वात् । कौर्मे 'इत्येवम्मन्यमानानां ध्यानकर्मावलम्बिनाम् । आविरासीन्महादेवी गौरी गिरिवरात्मजा ' इत्यारभ्य ' निरीक्षितास्ते परमेश-पत्न्या तदन्तरे देवमशेषहेतुम् । पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराण'मितीक्षणक्रियाकर्मत्वं शम्भोः पुराणपुरुषस्योक्तं न गौर्याः । अतो भवदुपन्यस्तेक्षतिधर्माधिकरणोक्तरीत्यापि ध्यानकर्मत्वं तस्यैव सिध्यति, नाम्बि-कायाः । प्रत्युताम्बिकेक्षणकर्मत्वं तेषामिति वैपरीत्यम् । शैवे तु 'ते ध्यानयोगा-नुगताः प्रपश्यन् शक्तिमैश्वरीम् । पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् । तया विच्छिन्नपाशास्ते सर्वकारणकारणम् । शक्तिमन्तं महादेवमपश्यन् दिव्य-चक्षुषा । यः कारणान्यशेषाणि कालात्मसहितान्यपि । अप्रमेयोऽनया शक्त्या साकमेकोऽधितिष्ठती'ति यथास्माभिः पूर्वमुपपादितं स्वरूपं तथैव शक्तेर्महादेवस्य च सिध्यति, न भवदुक्तरीतिकम् । न चाम्बिकामाहात्म्यं प्रस्तुत्यैवं कथनान्नेदं साम्प्रतमिति वाच्यम् । तापनीये भगवदीयासु सप्तशक्तिषु 'श्रियं लक्ष्मी-मौपलाम्बिकां गा'मित्यौपलायाः पार्वत्या अम्बिकायाश्च गणनादुभयत्रान्यान्य-शक्तियुक्तो भगवानेवोच्यते नान्यः,इत्येवं तस्यैव सामञ्जस्यात् । पुराणेषु सर्वेषु तत्तद्रूपेण ब्रह्मैव परं प्रतिपाद्यते न भवदभिमता अन्याभिमता वा शिवविष्णवा-दय इति । कूर्मवच्छिवपुराणस्यापि गतिर्वक्तव्येति पुराणानुरोधेनापि व्युत्थानं न युक्तम् ।

किञ्च मायोपधिकस्य ब्रह्मणः परमा मूर्तिः परमशिव इति हि भवतां प्रतिज्ञा । इह तु 'ननु युक्तमेव'मित्यादिना मायाविद्ययोरन्यतरस्याः सहकारित्व-माशङ्क्य, तत 'एवं सहकारिविचारे'त्यादिना तत्पक्षं दूषयित्वा, ब्रह्मविद्याधि-

---

देशात् स ' इत्यत्र प्रश्नोपनिषदि ' यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्या-यीते'ति वाक्ये ध्यातव्यत्वेन परं ब्रह्मोपदिश्यत उतापरमिति सन्देहे, पिण्डापेक्षया परत्वस्य जीवेऽपि सत्त्वादपरमेवात्रोपदेश्यमिति प्राप्ते, ' स एतस्माज्जीवघनात्परं पुरिशयं पुरुषमीक्षत' । इत्यग्रिमे वाक्ये परात्परस्यैवेक्षतिकर्मत्वेनोक्तेस्तस्यैव ध्यानकर्मत्वमादरणीयमुपक्रमोपसंहारयो-रैकार्थ्यस्यैवमेवोपपत्तेरिति सिद्धान्तितं तद्रीत्येत्यर्थः । वैपरीत्यमिति । तस्यैवेक्षतिकर्मत्वगम-कमित्यर्थः । तस्मान्न कौर्मस्योपबृंहणत्वमिति भावः ।

देवतारूपा अतिरिक्ता शिवाभिन्नाम्बिका शक्तिः सङ्क्षेपशारीरकोक्तविमल-चैतन्यरूपा सहकारिण्यङ्गीकृता । तेन परशिवो न मायोपाधिक इति भवति । तथा च प्रतिज्ञान्तरदोषः । पूर्वप्रतिज्ञात्यागे स एव दोषः परमतप्रवेशश्च । निर्विशेषाऽसिद्ध्या शङ्कराचार्यानुयायित्वहानिरिति च । सात्त्विकविग्रहाङ्गीकारे सत्त्वमूर्त्यनतिरेको मायोपाधिकतापत्त्या च तद्दूषणवैयर्थ्येन घट्टकुट्टिप्रभा-तन्याय इति किमधिकं वदामः ?

किञ्च, परमशिवस्यादिकारणत्वसमर्थनाय ह्येषोपनिषदाश्रिता भवद्भिः । तस्य तु नानया सिद्धिः । कालाद्युत्पत्तेरत्राकथनात् । किन्तुताननूद्याधिष्ठातृत्व-मात्रमिह शिवस्योक्तम् । तेन तेषां सिद्धवन्निर्देशः । शिवस्य सशक्तिकस्य तत आधिक्यं च सिध्यति । तेन चास्मदुपपिपादयिषितं परमेश्वरपरमविभूति-रूपत्वमेव भवदभिमतस्य सिध्यतीति बुद्धिमन्तो जानन्तु ।

यत्तु स्रष्टव्यपदार्थविशेषतत्क्रमादिप्रतिपादनेन कृतार्थेषु सृष्टिप्रकरणे कारणे प्रयुक्ता देवान्तरवाचिनः शब्दा मुख्यार्थतात्पर्यविधुराः शक्या कल्पयि-तुम्, तथा स्वीकृताश्च तद्विषयाः प्राणाकाशाक्षरादिशब्दाः । उदाहृते मन्त्रो-पनिषत्स्थे मन्त्रजाते श्रुत्यन्तरप्रतिपादितं स्रष्टृसद्भावादिकं सिद्धं कृत्वा स्रष्टु-र्ब्रह्मणो देवताविशेषरूपेण निष्कर्षार्थं प्रवृत्ते निर्णयवाक्ये कारणे प्रयुक्तं शिवा-साधारणं नाम स्ववाच्योपस्थापनैकप्रयोजनमनन्यपरं न स्वार्थतात्पर्यं विधुरं कल्पयितुं शक्यमित्याद्युक्तम् ।

तदप्यबोधादेव । सृष्टिप्रकरणानां तावन्मात्र एव तात्पर्यमित्यत्र गमकाभावात् । नानाविधनामरूपैर्नानाविधाभिर्नानाविधं सृजतीत्येवं ब्रह्म-माहात्म्यबोधनपरत्वात् । अन्यथा समन्वयाद्यसङ्गतेरित्युक्तम् । सर्वेऽपि

---

ननु तस्याः सहकारित्वाङ्गीकारेऽपि विग्रहार्थं मायाया अपेक्षितत्वात् न कोऽपि दोष इत्यत आह सात्त्विकेत्यादि । एवं च सप्तदशश्लोकस्यार्थो दूषितः ।

अष्टादशस्य दूषयितुमुपक्षिपति यत्तु स्रष्टव्येत्यादि । स्वीकृता इति । शारीरक-भाष्ये स्वीकृताः ।

दूषयति तदपीति । अन्यथेति, क्रमादौ तात्पर्येण ब्रह्मणि तात्पर्याभावे । नन्वस्तु ब्रह्मण्येव तेषां वाक्यानां तात्पर्यम् । तथापि तत्रत्यानां नाम्नां रूपविशेषे तात्पर्याभावेन रूपनिर्णयस्तु न भविष्यति । अतस्तदर्थं केषांचित्तु रूपे तात्पर्यं वाच्यमेवेत्याकाङ्क्षायां ब्रह्मणः सर्वरूपत्वं हृदिकृत्य, पूर्वतापनीयसिद्धं निर्णयं च हृदिकृत्य, शारीरकभाष्येऽप्यस्वरसं बोधयन् पूर्वोक्तं स्मारयति सर्वेत्यादि । सिद्धमाह अत इत्यादि ।

शब्दा मुख्यवृत्त्या ब्रह्मैव गमयन्तीति न क्वापि मुख्यार्थबाधः । लिङ्गादिभिः सङ्कोचमात्रस्यैव परं निवृत्तिरिति च । अतोऽन्यत्रेवात्र नाम्नां स्वार्थपरत्वेऽपि पूर्वोक्तदिशा उक्तोपनिषदः कारणताप्रकारनिर्णयार्थतायाः स्फुटत्वेन तस्या ब्रह्मगतदेवताविशेषरूपनिर्णयार्थत्वस्यासिद्धेर्न भवदभिमतसिद्धिः ।

किञ्च, 'किंकारणं ब्रह्मे'त्यत्र ब्रह्मादिदेवेषु को देवो ब्रह्मेति हि भवतां संशयाकारः शिव एवेति च निर्णयाकार इति ह्यत्र शिवासाधारणनामभिः स्ववाच्योपस्थानैकप्रयोजनैः सिद्धम् । तथासति शिवादिनामा मूर्तित्रयान्तर्गत एव परशिव इति ब्रह्मविद्भिर्हरादिशब्दैर्निर्णीतमिति पूर्वसाधिताय तुरीयत्वाय तिलाञ्जलिरेव सद्यः प्रदीयताम् । एतेनैव यथा पौर्णमास्यामित्यादिना पूर्वतन्त्रीयमन्त्रक्रमविधिवाक्यक्रमयोराद्यस्याग्नेयाग्नीषोमीयपुरोडाशक्रमनियामकत्वं स्मृतौ स्मारकस्यैव प्रबलत्वान्नेतरस्य विधानमात्रेण कृतार्थत्वादिति दृष्टान्तेन छान्दोग्यबृहदारण्यकादिसृष्टिवाक्येषूक्तस्य स्रष्टुर्विशेषपर्यवसाने नियामकं मन्त्रोपनिषदुक्तमन्त्रजातमेव, न तु सृष्टिप्रतिपादकवाक्यान्तरगतदेवतान्तरनामवृन्दम् । तत्र तात्पर्यवैधुर्यात् । यथा अश्वमेधेन चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयाद्, इत्यस्मिन् वाक्ये 'षड्विंशतिरित्येव ब्रूया'दिति चोदकप्राप्ताद्ध्रिगुवचनानुवादभागः षड्विंशतिपदस्योक्तसंख्यायां तात्पर्यवैधुर्यात् 'तूपरगोमृगाश्ववंक्रीणां समस्य' वचनस्याबाधेन चोदकप्राप्ताद्ध्रिगुवचनमात्र इव मन्त्रोपनिषदुक्ते विशेषे पर्यवस्यतीति यदुक्तं, तदपि परास्तम् । पूर्वतन्त्रेऽनुष्ठेयादेर्मन्त्रेणैव स्मरणस्य नियमवदुत्तरे तन्त्रे मन्त्रेणैव ज्ञेयमित्यादिनियमस्यादर्शनात् । 'षड्विंशतिरित्येवे'त्यत्रैवकारेण विधिशक्तिकौण्ठ्यस्येवोक्तवाक्येषु निस्तात्पर्यकत्वबीजस्या-

---

एतेनैवेति । सृष्टिवाक्यानां स्रष्टव्यपदार्थक्रमादितात्पर्यकत्वनिरासेनैव । यदुक्तमित्यस्य तात्पर्यं वैधुर्यादित्यनेनाप्यन्वयः । अत्राद्यस्य दृष्टान्तस्य दूषणं तु नियमस्यादर्शनादित्यन्तेन वैषम्यबोधनाद् बोध्यम् । द्वितीयदृष्टान्तस्तु नवमस्य चतुर्थचरणे 'तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्बाध्यत्वा'दित्यधिकरणे विषयवाक्ये निषेधस्य विधेयत्वात् षड्विंशतिविधिवाक्ये विधिशक्तिकौण्ठ्येन सङ्कुचायां तात्पर्यवैधुर्यादहेतुवादकत्वं स्वीकृतम् । तस्यानुवादस्य पर्यवसानं च संज्ञापनात्प्राङ्नीयमानेषु सवनीयपशुषु होत्रा प्रयुज्यमाने समस्याध्रिगुवचनेऽङ्गीकृतं 'षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वा'दित्यस्मिन्नधिकरणे इत्येवमुभाभ्यां सिध्यति । तद्दूषणं तु षड्विंशतीत्यादिना, प्रकृते तद्वैषम्यबोधनाद् बोध्यम् ।

---

१ एतस्येति ख. पाठः ।

सिद्धेश्च । औत्तरतन्त्रप्रमेयस्य पूर्वतन्त्रेण सर्वत्र निर्णेतुमशक्यत्वाच्च । किञ्च, ब्रह्मरूपनिर्णयार्थं प्रवृत्तो भगवान् बादरायणः 'अक्षरमम्बरान्तधृतेः' 'भूमा सम्प्रसादादध्युपदेशात्' 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशा'दित्यादिवत् 'शिवो निर्णया'दित्यपि सांख्यनिराकरणावसरे श्वेताश्वतरश्रुतीर्विचारयन् सूत्रयेद्, यदि भवदुक्तमभिप्रेयात् । अत उत्तरतन्त्रान्निराशो ग्रन्थकारः पूर्वतन्त्रमालम्बमानः स्वपाण्डित्यमतिलोकोत्तरं द्योतयतीति दिक् ।

एवञ्च प्राणाकाशादिशब्दवन्नारायणशब्दस्य बहुशोऽभ्यस्तस्यापि वृत्त्यन्तरकल्पनासहिष्णुत्ववद्धरशब्दस्यापि 'हरच्छागबस्तच्छगलका अज'इति कोशे छागवाचकत्वस्यापि दर्शनादितरतौल्यमेवेति वृथैवेयं कुसृष्टिः । शिवशब्दस्य पङ्कजशब्दवद्योगरूढत्वमादाय प्रकरणोपपदाद्यनुपपीडितात्तत एव सर्वत्र परमेश्वरत्वप्रतीतेः । स्वत एव तस्य निर्णायकत्वोक्तिरपि तथा । पुरुषपदतुल्ययोगक्षेमत्वात् । कल्याणेऽपि रूढत्वेन तेनैव निर्वाहे देवताविशेषे विशिष्यशक्तिकल्पनायोगात् । अनेकार्थत्वेऽपि नित्यपुल्लिङ्गतायाः 'शिवो घोले पद्मरागे हरे कील' इति कोशे चतुष्वर्थेषु दर्शनात् ।

---

अत्र आनुशासनाद्यदर्शनाद्धरशब्दस्य शिवे असाधारण्यमिति यदुक्तं, तदुक्तं दुषयितुमाह एवं चेत्यादि । यत्तु अनेकशक्तिकस्य सकृच्छ्रुतस्यानेकशक्यपरत्वं न क्वापि दृष्टं, युगपद्वृत्तिद्वयविरोधादयुक्तं चेत्याशङ्क्य, सभङ्गश्लेषस्थले आवृत्तिं विना युगपदनेकशक्त्यनुसन्धानाभावात्तथात्वेऽपि प्रकृते सङ्गत्वाभावेनावृत्त्यनपेक्षणात्, 'सैन्धवमानये'त्यादौ नानार्थस्थले क्रमानुसन्धेयभङ्गविश्लेषणानपेक्षणेन सामग्रीपौष्कल्याद्युगपदनुसन्निहितशक्तिद्वयेन, यथा चक्षुषा युगपदुत्पन्नसंयोगद्वयेनार्थद्वयस्य युगपत्प्रकाशस्तथार्थद्वयस्मरणोपपत्तावपि, स्वतन्त्रस्यार्थद्वयस्यापि प्रत्येकमानयनान्वयापत्त्या वाक्यभेदप्रसङ्गात्तथात्वेऽपि, प्रकृते स्वतन्त्रार्थद्वयपरत्वाप्रसङ्गेन वाक्यभेदापत्त्यभावात्, 'समा भवन्ति मे सर्वे दानवाश्चामराश्च ये । शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः' इति कर्णपर्वीयशिववाक्येन निखिलभवनक्षेमङ्करे शिवे प्रवृत्तिनिमित्तद्वयस्यापि विश्रान्त्या, शक्तिद्वयविरोधाभावाच्च योगरूढिस्थल इवात्र शक्तिद्वयस्याप्यनुग्राह्यत्वं शिवपदस्य निर्णायकत्वायोक्तम् । तत्सङ्क्षेपेणोपक्षिप्य दूषयति **शिवशब्दस्येत्यादि** । **तथेति**, व्यर्थकुसृष्टिरूपा । **पुरुषपदतुल्ययोगक्षेमत्वादिति** । 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इति गीतायां भगवद्वाक्येन सर्वात्मनि भगवति पुरुषपदप्रवृत्तिनिमित्तद्वयस्य विश्रान्त्या, विरोधाभावेन पुरुषपदेऽपि शक्तिद्वयानुग्राहसौकर्यात् । तथा च तत्र विशिष्य शक्तिखण्डनैवयर्थ्यम् । तदनुमतावेतत्प्रयासवैयर्थ्यमिति भावः । तस्माद्भेदवादे तव पित्राप्युत्कर्षो न साधयितुं शक्यः । अभेदवादे तु नाममात्रे कलह इतोऽपि तथा । वस्तुतस्तु तव

ननु कालाद्यधिष्ठातृत्वश्रवणादादिकारणत्वं न शिवे इति यदुक्तं, तन्मन्दम् । अस्यामेवोपनिषदि 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासन् शिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी'ति मन्त्राम्नानात् । अत्र च पूर्वार्धे 'यदा तम' इत्यादिना 'तमो वा इदमेकमास, नासदासीन्नो सदासीत्तदानीं तम आसीत्, 'प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत्सोऽस्मिन्नन्धे तमसि प्रासर्प'दित्यादिश्रुत्यन्तरप्रतिपन्नतमोविशेषाङ्कितकालविशेषानुवादेन तदित्यादिना शिवस्य तत्कालवर्तित्वेन विधानात् पुरोडाशादिद्रव्यसम्बन्धितया आग्नेयादिवाक्यप्रतिपन्नानां यागानामेव 'चतुरवत्तं जुहोती'ति तत्तत्पुरोडाशादिद्रव्यावदानसम्बन्धिहोमविधिबलाद्धोमरूपतेव तत्कालवर्तित्वेन पुरोवादप्रतिपन्नस्य परादिशब्दोदितस्य ब्रह्मण एव शिवरूपता पर्यवस्यतीति केषाञ्चित् कारणवाक्यानां विषयविशेषोपसंहारपरतां तत् पर्यवसाययति । उत्तरार्धेन 'तदक्षर'मिति मुण्डकादीनां 'तत्सवितुर्वरेण्य'मित्यादित्यमण्डलवर्तिनि परमपुरुषे कारणत्वाक्षेपकलिङ्गसर्वान्तर्यामित्वमुपवर्णयन्त्या गायत्र्याः 'प्रज्ञा च तस्मात्प्रसृता पुराणी'ति 'तदैक्षत बहु स्यां प्रजायेये'ति 'स ऐक्षत लोकान्नु सृजा' इति 'सो कामयत बहु स्यां प्रजायेये'ति 'तपसा चीयते ब्रह्मे'ति स्रष्टुरादिसृष्टिपूर्वकालीनस्रष्टव्यवस्तुजातालोचनं प्रतिपादयतां छान्दोग्यादिश्रुतकारणादिवाक्यानामीक्षादिशब्दैरुपात्तस्य स्रष्टव्यालोचनस्य तदन्यतमशब्देन ग्रहणे तच्छब्दयुक्तश्रुतिमात्रविषयोपहारशङ्का स्यादिति सर्वसाधारण्येन प्रज्ञाशब्देन तदुपपादाय च, विषयविशेषोपसंहारं पर्यवसाययतीत्यस्य कृत्स्नस्य मन्त्रस्य सकलकारणवाक्यविषयविशेषनिर्धारणार्थत्वादिति चेत्,

मैवम् । 'एतस्य यदे'ति कालविशेषप्राप्तानुवादकत्वेन पुरोवादसापेक्षतया तथा वक्तुमशक्यत्वात् । पुरोवादत्वं च सौबालवाक्यस्यैवं युज्यते । तत्र हि

---

पर्यवसानं सोपाधिके त्रिलोचनत्वादिविशिष्टे रूपे च । तयोर्मध्यमकक्षत्वं तु प्रागेवास्माभिर्व्युत्पादितमत एव तथेति दिक् ।

एवमष्टादशश्लोकोक्तं दूषयित्वोनविंशार्थं दूषयितुमाक्षेपमुखेनोपक्षिपति नन्वित्यादि ।

एतद्दूषयति मैवमित्यादिना । तथेति । निर्धारणार्थत्वस्येत्यर्थः । ननु संदिग्धे पुरोवादेऽनुवादस्य निःसंदिग्धस्य निर्धारकत्वमुचितमेवेति कथमशक्यवचनत्वमत आह पुरोवादेत्यादि । 'तमो वा इद'मित्यादि वाक्यस्याबाधितत्वात् सौबालस्यैव पुरोवादत्वं कथं युज्यत इत्याकाङ्क्षायां तदुपपादनाय सन्दर्भमाह तत्रेत्यादि । तथा च यदा तमसोऽपि लय-

'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देवे एकीभवती'ति सुबालोपनिषद्वाक्येन तमसः परे देवे एकीभावकथनादव्यक्ताक्षरक्रमेण 'यस्य शरीर'मित्युपक्रम्य, 'एष आत्मापहतपाप्मा दिव्यो देव एको नारायण'इति पाठाच्च तमसो नारायणाधिष्ठितत्वनिश्चायनेन यच्छब्दाभावेन चास्यैव तथात्वनिश्चयात्। एवं श्रुत्यन्तरमिह न पुरोवाद इति तदनुरोधादनुवादकश्वेताश्वतरमन्त्रश्रुततमोधिष्ठातृपरस्य शिवशब्दस्यापि नारायणप्रकारविशेषपरताया एवौचित्यात्। 'तमो वा इदमेकमासे'त्यादिश्रुत्यन्तरस्य पुरोवादत्वाश्रवणेपि तस्यापि सौबालवाक्यप्रतिपन्नविशेषपर्यवसायित्वेनाविशेषात्। एवञ्च 'तदक्षरमित्यादिनापि नारायणस्यैव प्रकारविशेषोपदेशः। सर्वत्र ब्रह्मण एकत्वात्' नाम्नां लिङ्गादिभिर्निर्णयादित्युक्तम्।

यत्तु यथा 'विश्वजित्सर्वपृष्ठो भवती'त्यत्र विधेयपरबहुविषयसर्वशब्दार्थानुरोधाद् बृहद्रथन्तररूपप्राकृतपृष्ठत्यागेन षाडहिकपृष्ठानुवादपरत्वं कल्प्यते, तथा 'यदा तम' इत्यस्यापि शिवविधितात्पर्यानुरोधादापाततोऽन्यविषयसौबालादिवाक्यत्यागेन श्रुत्यन्तरेषु विरुद्धानेकविशेषश्रवणात् क्वचिदप्यपर्यवसितमैत्रायणश्रुत्यादिप्रापितार्थानुवादपरतैव वक्तुं शक्येति परमते वृद्धिलोभेन मूलहानिन्याय इत्युक्तम्।

तदपि तद्वीपरीतमेव फलति। मैत्रायणीयेऽपि विष्णुशब्देनैव परब्रह्मण उल्लिखितत्वस्य पूर्वमेवोपपादितत्वेन वृद्धेरेवात्याधिक्यात्। सौबालवाक्येपि भ्रान्तानामेव देवतान्तरबुद्ध्युदयात्। सर्वत्र ब्रह्मण एकस्यैव प्रतिपाद्यत्वादित्युक्तम्।

---

स्तदा नारायणस्यावस्थानं चेत्सिद्धं तदा किं वाच्यं तमोविशेषाङ्कितकालेऽवस्थानमित्यर्थः। **तदनुरोधात्** इति। सौबालानुरोधात्। ननु विनिगमकाभावात् 'तमो वा' इत्यादीनामस्त्विति शङ्कायां तदुपगम्य, स्वोक्तं साधयति **तम** इत्यादि। इदमेव प्रकारमुत्तरार्धेऽप्यतिदिशति **एवमित्यादि**। **उक्तमिति**। पूर्वमेव मयोक्तमतो न चोद्यावकाश इत्यर्थः।

ऊनविंशोक्तं दूषितम्। अतःपरं यत्तेन विंशश्लोकाभासे सुबालवाक्यस्य पुरोवादत्वं निराकर्तुं साप्तमिकतृतीयस्थस्य 'विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्योतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्द' इत्यधिकरणविषयवाक्यमुपन्यस्य तत्सिद्धन्यायेन स्वाभीष्टं साधितं, तद् दूषयितुमुपक्षिपति **यत्तु यथेत्यादि**।

दूषयति। **तदपीत्यादि**। **विष्णुशब्देनैवेति**। षष्ठे प्रपाठके त्रयोविंशे खण्डके 'ओमित्येतदक्षरस्य यदग्रं तत् शान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं

किञ्च, 'विश्वजित्सर्वपृष्ठ' इत्यत्रापि न षाडहिकपृष्ठानुवादकत्वमात्रं किन्त्वतिदेशकत्वं सिद्धान्तितम् । तेन 'तमो वे'ति त्वदुक्तमैत्रायणीयोक्ते प्रतिपुरुषेऽनेन मन्त्रेण शिवनाम्ना मूलपुरुषधर्मातिदेशमेवावधेहि । किञ्च, तत्र प्राकृतपृष्ठत्यागोऽपि प्रकृतौ विकल्पितयोर्बृहद्रथन्तररूपपृष्ठयोः समुच्चयविधानेऽपि द्वित्वसिद्ध्या बहुत्वाप्राप्तौ तदर्थमाद्रियते । न तथा प्रकृते सुबालोपनिषदुक्तरूपत्यागबीजभूता कस्यचित्पदस्यानुपपद्यमानतास्ति । न च शिवपदस्य तथात्वमिति वाच्यं, उक्तरीत्या परब्रह्मणि विधितात्पर्येण नारायणग्रहणेऽपि शिवरूपप्राप्त्यभावेन तत्त्यागायोगात् । एवं चास्य मन्त्रस्य प्रकारविशेषोपदेशपरत्वादर्धपथे स्थितिरपि परिहृता । किञ्च, दशमस्य षष्ठे पादे 'सर्वपृष्ठे पृष्ठशब्दा'दित्यधिकरणे उक्तवचनातिदिष्टानां षाडहिकरथन्तरादिपृष्ठानां पृष्ठशब्देन निर्देशात्पृष्ठदेशे प्रयोगं पूर्वपक्षीकृत्य 'रथन्तरं पवमाने कुर्यादाभवे बृहन्मध्य इतराणि वै रूपं होतुः पृष्ठ'मितिविशेषवाक्यबलाद्यथास्थानं विभज्य निवेशः सिद्धान्तितः । तथा प्रकृतेऽपि बहुषु सामान्यविशेषकारणवाक्येषु ब्रह्मणोऽनुपहितस्यैव कारणत्वोपदेशात् क्वचिदेव मायिनः कारणत्वनिर्देशान्मायोपहितस्य तादृश्यामेव सृष्टौ कारणत्वं नतु सर्वत्रेति भवताप्यङ्गीकार्यम्, अस्यापि तत्परिकरत्वात् । अत उभयथाप्यस्मदुक्तस्यैव सिद्धिरिति किं बहु वदामः ?

---

विष्णुसञ्ज्ञितं सर्वापरत्वाय तदुपासीते'त्यत्र आवितेनेवेत्यर्थः । सर्वापरत्वायेतिल्यब्लोपे पञ्चमी । सर्वं अपरं यस्मादिति सर्वापरः । स्वस्य तथात्वायेत्यर्थः । एतदतिरिक्तस्य सर्वस्यापरत्वमवधार्येत्यर्थः ।

न्यायोपन्यासोऽप्यसङ्गत इत्याह किञ्च विश्वेत्यादि । तथा चानुवाद इति पूर्वपक्षिमतमुपन्यस्तम् । अत इदमपि तव हास्यायैवेत्यर्थः । शिवशब्दोऽपि यदि कथञ्चिदौत्सर्गिकार्थपरतां हित्वा पुरोवादविशेषप्राप्ते नारायण एव पर्यवस्येत्तदा पूर्वोक्तो 'यदा तम' इति मन्त्रः किञ्चिद्विधातुमुद्यम्यार्धपथे स्थितः । कं विधेयमासाद्य विश्राम्यत्विति यत्तेनोक्तं, तस्याप्युत्तरमुक्तेनैव जातमित्याह एवं चेत्यादि । उक्तरीत्या तमोरहिते काले नारायणस्य सिद्धेऽवस्थानेऽनेन मन्त्रेण तमोयुक्ते पूर्वकाले शिवरूपेणावस्थानं विधीयते । प्रलयस्य तदुपकार्यत्वात् । अतो विश्रान्तिसौकर्यान्न दोष इत्यर्थः । एवं च 'प्रजापतिर्वे'ति वाक्येऽपि मैत्रायणीयोक्तः प्रतिपुरुष एव दिवारात्र्यभावाङ्किते काले प्रसर्पन्नुच्यते । एतावान् परो विशेषो यदत्र प्रलयारम्भकालस्तत्र प्रान्तकालः, स शब्दविशेषादेवावगम्यते । अतो नात्र वचनीयं किञ्चित् । स्वोक्तमर्थं दृढीकर्तुं न्यायान्तरं दर्शयति । किञ्च दशमस्येत्यादि ।

एवमेवान्येऽपि मन्त्रा ज्ञेयाः ।

यदपि कूर्मपुराणीयोपबृंहणं सुशीलोपाख्यानरूपं, यच्च वायवीयं, तदपि 'त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् । बह्वाचार्यविभेदेन भगवन् समुपासत'इत्यक्रूरवाक्येनैव दत्तोत्तरम् । अतोऽस्याः शिवपरत्वाङ्गीकारेऽपि न भवदभिमतशिवपरत्वमिति सुमनसस्तिष्ठन्तु ।

ननु भवत्वेवं, तथापि शिवस्य भगवन्महिमरूपत्वं यदत्रोद्घोष्यते, तत्कुत्रोक्तमिति चेत् ,

उच्यते । तैत्तिरीयाणां नारायणोपनिषदि ज्ञाननिरूपणप्रसङ्गे उक्तम् । तथाहि, 'अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीश'मित्यत्र परमात्ममहिमरूपत्वेनैवेशकथनान्महिमवत्त्वेन चात्मन एवोपक्रान्तत्वात्तत्सिद्धेः। अत्र पूर्वमुपनिषदारम्भे 'अम्भस्य पार'इत्यादिभिर्विंशतिमन्त्रैर्महामहिम यद्ब्रह्म प्रकृतं, 'यमन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा'इत्यनेनान्तःसमुद्रवर्तितया परिचायितं, 'प्रजापतिः प्रथमजा ऋतस्यात्मानमभिसम्बभूवे'त्यनेन प्रजापतिना आत्मत्वेन ज्ञातमित्युक्तं, तदेवात्र 'अणोरणीया'नित्यादिना महामहिमत्वेन निरूपधिस्नेहायात्मत्वेन प्रदर्श्य, नैकट्याय गुहानिहितत्वेनानूद्य, 'वीतशोकः, तं अक्रतुं संकल्परहितं, भगवत्प्रसादात् पश्यतीति वदन् महिमानं तत्सामर्थ्यरूपं ईशं पश्यती'त्याह। ईशश्च मायोपहितः शिवः। 'शम्भुरीशः पशुपति'रितिकोशात् ।

---

एकविंशश्लोके अत्रत्या अन्ये मन्त्राः प्रदर्शितास्तेषामप्यत्रैव तात्पर्यमित्यादि । एवमेवेत्यादि ।

उपबृंहणस्यापि गमकमाह यदपीत्यादिना । एवमेकविंशार्थो दूषितः । द्वाविंशे तु पुरुषसूक्तमन्त्रप्रत्यभिज्ञानेन श्वेताश्वतरोपनिषदो विष्णुमहत्त्वसाधकं भेदवादिमतमुपक्षिप्य प्रत्यभिज्ञायाः स्थलद्वयापेक्षित्वेन शीघ्रोपस्थापकश्रुत्यपेक्षाया मन्थरगामित्वान्नैर्बल्यमुपपादितम्। त्रयोविंशे तेषां मन्त्राणां रुद्राध्यायमन्त्रसन्दंशपातः प्रदर्शितः। तेन तेषां न निर्णायकत्वमिति प्रतिपादितम् । तदत्र शिवादिपदानामनिर्णायकत्वव्यवस्थापनेन शिवस्य प्रकारविशेषत्वाङ्गीकारेण च निरस्तप्रायत्वादुपेक्षितम् ।

अतः परमेकत्रिंशे श्लोके तैत्तिरीयोक्तदहरविद्यायां शैवत्वं यत्तेनाङ्गीकृतं तद्दूषयितुं तत्र मन्त्रान्तराणामर्थं च विवेचयितुं तां व्याकरिष्यन्नाह ननु भवत्वित्यादि । नन्वत्रात्ममहिमत्वेनेशो भासते न भगवन्महिमत्वेनेत्याकाङ्क्षायां तदुपपादयति । अत्रेत्यादिना ।

महिमरूपस्यापीशस्य प्रकाशाश्रयन्यायेन तदात्मकत्वविवक्षया नात्र चकारः । न चात्र विशेषणविशेष्यभावप्रतीतेश्चकारानुक्तेश्च नायमर्थः साधीयानिति वाच्यम्। पूर्वार्धेनैवातिशयेन महत्त्वसिद्धेर्महिमपदेन पुनस्तस्यैव परामर्षे पुनरुक्त्यापत्तेः । न च निरुपाधिकमहामहत्त्वबोधनाय पुनस्तदुक्तिरिति वाच्यम् । पूर्वत्रात्रापि चोपाधिबोधकपदाभावेनैवंविभागस्याशक्यवचनत्वात् । नापीशशब्दस्य विशेष्यसमर्पकत्वम् । अनेकपदैर्व्यवधानेन तथा बुद्ध्यनुत्पत्तेः । व्यवहितान्वयदोषाच्च । यथाकथञ्चिदुत्पत्त्यङ्गीकारेऽपि तल्लिङ्गाद्यधिकरणन्यायेन शब्दानां परब्रह्मणि योगरूढ्यैव प्रवृत्तेर्निमित्तभेदेन 'योगरूढाभासत्वेन' शिववाचकत्वासिद्धेः । आद्यानुवाके 'यमन्तःसमुद्रे कवयो वयन्ति' इति उत्तरानुवाके च 'समुद्रेऽन्तं विश्वं शम्भुव'मिति समुद्रशायित्वलिङ्गेन मध्यस्थस्याप्यनुवाकस्य ब्रह्मपरत्वेनास्मिन्मन्त्रे शिवपरत्वप्रतिरोधाच्च । तस्मादुक्त एवार्थ इति परब्रह्ममहिमरूपत्वेनैवात्र शिवो विवक्षित इतिनिश्चयः ।

नन्वीशस्य कथं परमात्ममहिमरूपत्वमित्याकाङ्क्षायां तस्य महिमरूपत्वं स्फुटीकरोति, 'सप्तप्राणा' इति द्वाभ्याम् । 'येन हेतुना एष भूतः स्वतःसिद्ध

---

प्रकाशाश्रयन्यायस्तु उत्तरतन्त्रे साधनाध्यायस्य द्वितीयपादेऽस्ति । 'प्रकाशाश्रयवद्वा तेजस्त्वादि'ति । तत्र हि धर्मा ब्रह्मणः सकाशाद्भिन्ना वा ब्रह्मैव वेति संशये, कार्यस्यैव पटरूपादेस्तत्समवेतत्वात्कर्मत्वं लोके दृश्यत इति धर्माणां नित्यत्वकल्पनायां प्रमाणाभावादाकाशपरिमाणादिवत्स्वाभाविकत्वमात्रेण तथाकल्पने गौरवापत्तेरेकमेवाद्वितीयमिति श्रुतिविरोधापत्तेः । प्रपञ्चवत्ते कार्य एवाङ्गीकर्तव्यास्तथासति भिन्ना एव त इति पूर्वपक्षे, वाशब्दः पूर्वपक्षं व्यावर्तयति । यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशेन न भिन्नाः, भेदस्य पृथक्स्थितिनियतत्वात् । समवेतत्वं त्वाकाशपरिमाणादौ व्यभिचरन्न भेदसाधनायालं, गौरवं तु प्रामाणिकत्वान्न दुष्टम् । नापि सूर्यादिरेव प्रकाशः, भेदप्रतीतेर्विद्यमानत्वात्सूर्यस्य प्रकाश इति निर्देशाच्च । अतस्तादृशमेव तद्वस्तूत्पत्तिसिद्धम् । एवं ब्रह्मधर्मा अपि भिन्नाभिन्ना एव मन्तव्याः । न चाद्वितीयश्रुतिविरोधः । मध्यन्दिने नभस्येक एव सूर्यो दृश्यते नेतरः कोऽपीतिवदुपपत्तेः । न ह्येवमुक्तौ तत्प्रभासत्तापि निषेधगोचरा भवति । अतो धर्मविशिष्टमेव ब्रह्म धर्माश्च भिन्नाभिन्ना एव । एवं च वेदप्रवृत्तिर्निषेधशेषता सत्यज्ञानानन्तानन्दपदानां सामानाधिकरण्यं सम्भवति । सत्यादिपदानां लाक्षणिकत्वे तु सुतरां धर्मापेक्षा । तत्र हेतुः तेजस्त्वात्, तेजःशब्दवाच्यत्वात् । 'अथ यदितः परो दिवो ज्योतिर्दीप्यते' इत्यादि । अनेन न्यायेनेत्यर्थः । उत्पत्तौ दोषमाह । यथेत्यादि । तस्मादिति योगरूढ्यादेरपि तवाभिमतसिद्ध्यभावान्महिमपदवैयर्थ्यानपायाच्चेत्यर्थः ।

आत्मा अन्तस्तिष्ठति तेन हेतुना तस्मादीशात्सस प्राणाः प्रभवन्ती'त्यादि। तथा चेशस्यान्तःपरमेश्वरस्थित्यैव तथा सृष्ट्यादिसामर्थ्यं न स्वत इतीशः परमेश्वरस्य महिमरूप इत्यर्थः। ततः पुन 'ब्रह्मा देवाना'मित्यादिभिर्महिमानं नानाविधं वदन् ज्ञानानुकूलार्थप्रार्थनं च वदन् प्रणवप्रतिपाद्यत्वं च वदन् ज्ञानानुकूल्याय ब्रह्मादिभ्यो रुद्रस्य पूर्ववर्तित्वकथनपूर्वकं परोक्षेण रुद्रं प्रार्थयते 'यो देवानां प्रथम'मिति मन्त्रेण। तथा च यो देवानां प्रथमं हिरण्यगर्भं जायमानं पुरस्तात्पश्यतीति, सः अव्याकृतरूपः सर्वमहिमभ्यो मुख्यः परमेश्वरमहिमा 'रुद्रो महर्षि'रिति मन्त्रद्रष्टा रामतापनीयजाबालोक्तदिशा 'गुरुः स देवः न अस्मान् शुभया स्मृत्या परमेश्वरानुसन्धानरूपया संयुनक्तु। परमेश्वरदर्शनं हि वीतशोकस्य, वीतशोकत्वं शुभस्मृत्या, सा च रुद्राधीनेति तत्प्रार्थना। स्मृतेरहङ्काराधीनत्वादहङ्काराधिष्ठातृरुद्राधीनत्वम्। एवं चोपक्रममन्त्रस्थस्येशपदस्य विशेष्यसमर्पकत्वाङ्गीकारपक्षेऽपि महिमपदसमर्पितस्य प्राणादिजनकत्वेन चोक्तस्य तस्य स्वरूपनिश्चयो व्याख्यातरीत्यानेन मन्त्रेण क्रियत इति सर्वमसन्दिग्धम्।

एवं ज्ञानसिद्ध्यर्थं महिमरूपं रुद्रं प्रार्थयित्वा यस्यैवं रूपो महिमा स एव परमपुरुष इति निगमनाय साक्षात्पुनस्तमेवाह 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चि'दित्यादि। अत्र द्वितीयपादे अणोरणीयस्त्वादिरूपाद्ब्रह्मलिङ्गान्मन्त्रस्य परमेश्वरपरत्वम्। यथा 'घृतम्मिमिक्षिरे' इत्यग्निप्रकाशकमन्त्रोत्तरस्य 'समुद्रादूर्मि'रिति मन्त्रस्य साक्षाज्जगदुत्पत्तिरूपाल्लिङ्गात्।

एवं परमेश्वरं सपरिकरं निरूप्य क्रमेण तत्प्राप्तिं वदिष्यंस्तदुपासकान् तेषां तत्प्राप्तिं तस्योपास्यं च त्रिभिराह 'न कर्मणा ने'त्यादिभिः। तत्र पूर्वेण त्यागिनोऽमृतत्वप्राप्तिकथनाद्रुद्रभाव उक्तः। अमृतशब्दस्य रुद्रवचनताया 'अथ हैनं ब्रह्मचारिण ऊचुर्जप्येनामृतत्वं ब्रूहीति स होवाच याज्ञवल्क्यः शतरुद्रियेणेति। एतानि वा अमृतस्य नामधेयानि। एतैर्ह वा अमृतीभवतीति'जाबालोपनिषच्छ्रुतेः, 'शृण्वन्ति विश्वे अमृतस्य पुत्रा' इति मन्त्रोपनिषच्छ्रुतेश्च भवदभिमतत्वात्। गुहावस्थानं चास्याहङ्काराधिष्ठातृत्वादित्युक्तम्।

ततो द्वितीयेनेत उत्तमाधिकारिणां परप्राप्तिं वदति। तेन केवलत्यागिनां रुद्रभावो निःसन्दिग्धवेदान्तार्थज्ञानसहकृतानान्तु 'परान्तकाले ब्रह्मणोऽन्तकालेऽपुनर्भवकाले वा परामृतं परब्रह्म प्राप्य सर्वतोमुक्ति'रिति। क्रमिकत्वं चैत-

---

महिमपदसमर्पितस्येत्यादि। महिमपदसार्थक्यात्तस्य पृथक्कर्मत्वं वाच्यमेव। तथासति स को वेत्याकाङ्क्षायामयं मन्त्रो महिम्नः स्वरूपं वदतीति पूर्वोक्तं निर्विचिकित्समित्यर्थः।

योऽश्वतुर्थस्कन्धे प्रचेतसः प्रति रुद्रवाक्ये उक्तम् । 'स्वकर्मशुद्धः शतजन्मभिः पुमान्विरञ्चितामेति ततः परं हि माम् । अव्याकृतं भागवतोऽथ वैष्णवं ततो यथाहं विबुधाः कलात्यय'इति । अव्याकृतं मां प्राप्याथ भागवतः ततो वैष्णवं एतीत्यन्वयः । छान्दोग्ये सनत्कुमारेणाहङ्कारादेशकथनोत्तरं आत्मादेशकथनाज्जाबालोपनिषद्यमृतीभूत्वा मोक्षीभवतीति कथनाच्चापि तथा निश्चीयते । अमृतपदस्य रुद्रावाचकत्वपक्षेपि साधनविशेषोपदेशेपरामृतशब्दयोर्द्वितीयमन्त्रे दर्शनात् क्रममुक्तिपक्षो न विरुध्यते ।

ततस्तृतीयेन दहर उपास्यत्वं तस्याह । दहरान्तर्गतो दहराकाशश्च परब्रह्मैवेति 'दहरं उत्तरेभ्य' इत्यधिकरणे निर्णीतम् । ततो 'यो वेदादौ स्वर' इति मन्त्रेण तस्य नादनियामकत्वं वदन् परमेश्वरत्वमुपसंहरति 'स महेश्वर' इति । अयं च 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरि'त्यनेन समस्तो योगेन परमेश्वरमेव गमयति, न तु रूढं शिवम् । अनुपपत्तेरादावेवोक्तत्वात् । परामृतशब्देनेतः पूर्वं परमेश्वरपरामर्शाच्च ।

एवं दशमेऽनुवाके हृदयपुण्डरीके यः परमेश्वर उक्तस्तस्य गुणविशेषान् विस्तरेणैकादशानुवाक आह 'सहस्रशीर्षं देव'मित्यादिभिः । अत्र च 'सहस्रशीर्ष'त्यादिकं 'विश्वतश्चक्षु'रित्यादिनोक्तस्वरूपस्य ध्यानेऽप्यावश्यकत्वबोधनाय, नारायणशब्दस्य परमेश्वरेऽभ्यासः शक्तिसङ्कोचोत्तरमपि तस्य नामत्वबोधाय, द्वितीया विभक्तिश्च ध्येयत्वेन कर्मत्वबोधाय । एवं सार्धेन ध्येयत्वमुक्त्वा साक्षात्पुरुषत्वमर्धेन 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवती'ति । इदं परिदृश्यमानं विश्वमेव पुरुषो विराडात्मेत्यर्थः । सः तत् पूर्वोक्तं नारायणरूपं अन्तर्यामिणमुपजीवत्यनुसरति । एतमेव ध्येयत्वेन दृढीकर्तुं पुनर्द्वितीयान्तेनाह 'पतिं विश्वस्ये'त्यादिना । तत्र 'पतिं विश्वस्ये'ति पालकत्वम् । आत्मेश्वरत्वमिति पूर्वोक्तपुरुषस्य स्वमहिमरूपस्य नियामकत्वं, तद्दार्ढ्यार्थमेव 'शाश्वतं शिवमिति । पुनस्तदेव दृढयति 'विश्वात्मन'मिति । उपजीवकस्य विश्वपुरुषस्यात्मानं व्यापकमित्यर्थः । एतदेव दृढयति द्वाभ्यां, द्रविडतैलङ्गपाठभेदेन सार्धद्वाभ्यां

---

अनुपपत्तेरिति । निरङ्कुशैश्वर्यस्य प्रतिपुरुषे वक्तुमशक्यत्वमितिरूपाया इत्यर्थः ।

ध्येयत्वेनेत्यादि । यद्यपि द्वितीयाया उपजीवतिकर्मत्वमत्र प्रतीयते, तथापि केन प्रकारेणोपजीवतीत्याकाङ्क्षायां सहस्रशीर्षत्वादिविशेषणबलाद्ध्येयत्वमेव पूर्वमुपतिष्ठते । प्रेरणसुखदानादिषु सकलविशेषणानामनुपयोगात् । अतो ध्यानकर्मत्वबोधनमेवैषां मुख्यं प्रयोजनमिति तथेत्यर्थः । पुनस्तदेवेति, शाश्वतशिवत्वमेवेत्यर्थः । व्यापकमिति । व्याप्यस्याशाश्वतत्वा-

वा । 'नारायणं परं ब्रह्मे'त्यारभ्य 'स्थित'इत्यन्ताभ्याम् । वस्तुपरिच्छेदनिरासाय ध्यातृध्यानयोरपि नारायणत्वबोधनं तैलङ्गपाठीयार्थेन स्फुटति । तेनात्र मूर्त्यात्मा नारायणो न प्रतिपाद्यतेऽपि तु देशकालवस्तुपरिच्छेदरहितः परमेश्वरो नारायणः प्रतिपाद्यते । एवमेव सायणभाष्येऽपि व्याख्यातम् । पुराणेषु नारायणशब्देन व्यवह्रियमाणो यः परमेश्वरः स एव परमुत्कृष्टं सत्यज्ञानादिवाक्यप्रतिपादितस्य तत्त्वम् । अतो नारायणः पर एवात्मा न त्वपरो मूर्तिविशेष इति ।

तत उपासनाविषयस्य मायाशाबल्याभावाय 'अनन्तमव्ययं कवि'मित्यनेन सत्यज्ञानेतिमन्त्रोक्तस्वरूपत्वमुक्त्वा, विश्वपुरुषान्तर्यामितया ध्येयत्वं तस्यैव वक्तुं, तदधिष्ठेयां गुहां च पद्मकोशेत्यादिभिर्विवृत्याधिष्ठातारमाह 'तस्याः शिखाया मध्ये' इत्यनेन । ततः पूर्वोक्तमुपासनं कया विधया कर्तव्यमित्याकाङ्क्षायां द्वादशानुवाके तत्प्रकारमाह 'ऋतं सत्य'मित्यादि । अर्थस्तु–ऋतं सत्यं, अनारोपितसत्यं, परं ब्रह्म न त्वपरं, पुरुषं पुरुषरूपं, कृष्णपिङ्गलं पिङ्गं व्रजभक्तरूपं स्वर्णगौरं लाति गृह्णाति स्वीकरोतीति पिङ्गलः, कृष्णः पिङ्गलश्च तं, ऊर्ध्वरेतं निष्कामत्वात्, विरूपाक्षं,विशिष्टं सुन्दरं निरुपमं रूपं ययोस्तादृशे अक्षिणी यस्य,'तादृशं नमामि इति शेषः । नमने प्रकारमाह विश्वरूपाय रासादिलीलायामनेकरूपाय नमोनम इति । एतेन ध्यात्वा भगवति जीवैर्नमनमेव निरुपधिप्रेमविषयेऽनेन मन्त्रेण कर्तव्यमित्युक्तम् । तेनात्र भेदोपासनैवादृता ।

न चेयं जघन्येति वाच्यं, गीतायामुभयविधोपासनयोस्तुल्यफलत्वोक्तेः । नवमाध्याये हि, 'सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः । नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते । ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते । एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुख'मित्युक्त्वा, 'अहं क्रतु'रित्यादिना स्वस्य सर्वात्मकत्वं प्रतिपाद्य, ततः कामकामानां त्रैविद्यानां गतागतमुक्त्वा, अनन्योपासकानां योगक्षेमनिर्वाहः स्वकृतः फलत्वेनोक्तः । ततो निष्कामवैदिकानामन्यदेवभक्तत्वे च्यवनं स्वभक्तत्वे स्वप्राप्तिं चोक्त्वा, 'पत्रं पुष्प'मित्यादिभिः स्वस्य तदुपहृतभोक्तृत्वं सर्वस्य स्वार्पणं तत्फलं चोक्त्वा, 'समोऽह'मित्यादिभिर्भक्तोत्कर्षकथनपूर्वकं भजनमुपदिश्य, 'मन्मना भवे'त्यनेन भेदभजनफलं

---

द्व्यापकस्यैव शाश्वतत्वमितिभावः । अत्र सन्दर्भे 'नारायणपरो ज्योति'रित्यादौ प्रथमान्तान्युक्त्वा, पुन'रनन्तमव्यय'मित्यत्र द्वितीयान्तकथनेन यत एवंभूतो नारायणः, अतोऽनन्तादिरूपस्तस्मादेनमेव विश्वपुरुष उपजीवतीत्यन्वयो बोध्यते ।

स्वप्राप्तिरूपमाहेति फलतौल्यात् । प्रत्युतोपसंहारे नमस्कारलिङ्गेन भेदोपासना-प्राप्तेस्तस्या एव च निर्बन्धनोपदेशात्तदुत्कर्षस्यैव लाभात् । 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमिति न स वेद यथा पशु'रितिनिन्दा तु 'आत्मन्येवोपासीते'त्युपक्रम्य पठितत्वात्तत्स्तुतिमात्रपरा, नहि निन्दान्यायात् । तस्मादुक्त एव सिद्धान्तः श्रौतो निश्चेयः ।

एवं मूलरूपज्ञानादिकमनुवाकत्रयेणोक्त्वा, तस्यादित्यनियामकत्वायादित्यमण्डलेऽपि तदुपासनं च पञ्चभिराह 'आदित्यो वा एष' इत्यादिभिः । आदित्यमण्डलेऽपि 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्र' इत्यग्निपुराणादिवाक्याद् अन्तस्तद्धर्माधिकरणविषयवाक्येऽपि 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यत्र हिरण्येत्यनेन मायाचिच्छक्त्योः पतित्वं बोधयन् शैवाभिमतं परमशिवत्वं च महामहिमरूपत्वदृढीकाराय स्फुटीकरोति । तत एकोनविंशानुवाकमारभ्य द्विचत्वारिंशानुवाकपर्यन्तं कर्मादीनां मेधान्तानां ब्रह्मज्ञानोपासनोपयोगित्वाय तत्तन्मन्त्रानुक्त्वा, मेधाविनः पुरुषस्य ज्ञानोपासनयोः सिद्ध्यर्थं 'सद्योजात'मित्यादिपञ्चमन्त्रैः पञ्चवक्त्रत्वं स्फुटीकुर्वन् बुद्धिप्रेरकत्वेनाहङ्काराधिष्ठातृत्वं सर्वविद्याधिपतित्वेन जाबालश्रुत्युक्तं तारकब्रह्मोपदेष्टृत्वं च तन्महिमार्थमाह । तैलङ्गपाठे तु 'अणोरणीयान्' 'सहस्रशीर्षं' इत्यनुवाकद्वयं, तत 'आदित्यो वा' इत्यनुवाकद्वयं चोक्त्वा, 'निधनपतये नम' इत्यादयो दशानुवाका रुद्रमहिमनमस्कारप्रतिपादका आम्नाताः । तत्र पूर्वस्मिन् प्रथममेव निधनपतित्वबोधनात् संहारकत्वमुपक्रम्य, 'ऊर्ध्वाय नम ऊर्ध्वलिङ्गाय नम' इत्याद्युक्त्वा, उपसंहारे 'एतत् सोमस्य सूर्यस्य सर्वलिङ्गꣳस्थापयति पाणिमन्त्रं पवित्र'मित्यनेन उमासहितस्य ईशस्य पूर्वोक्तादित्यमण्डलस्थपरब्रह्मसर्वलिङ्गस्थापकत्वमेतन्मन्त्राणां पाणिमन्त्रत्वकथनपुरःसरमुक्तम् । एतत् पूर्वोक्तं सोमस्य केनोपनिषदुक्तब्रह्मविद्यात्मिकोमासहितस्येशस्य सम्बन्धि पवित्रं पाणिमन्त्रं सूर्यस्यादित्यमण्ड-

---

न हि निन्दान्यायादिति विधिशेषे विधेयातिरिक्तानिन्दाया उदितानुदितहोमस्थले विधेयस्तावकत्वेनैवाङ्गीकारात् न हि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमिति शबरस्वामिवाक्यसिद्धादित्यर्थः । एवमीशस्य महिमरूपताविचारप्रसङ्गेन सर्वानुवाकार्थो विचारितस्तदनुप्रसङ्गेनान्येषां च ।

लान्तर्गतनारायणस्य सर्वलिङ्गं स्थापयति, स्वोक्तदेवतायामारोपयति। तथा च प्राज्ञवद् ब्रह्मगुणसार इन्द्रवद् ब्रह्माविष्टो वा सोम इत्यर्थः। एतेन तत्र गुरुत्वं स्फुटीकृतम्। ततः सद्योजातेत्यादिभिः पूर्वोक्तन्यायेन बुद्धिप्रेरकत्वादितत्सन्दंशपतितेन 'ऋतं सत्य'मित्यनेन पूर्ववद् ब्रह्मगुणसारत्वाद् ब्रह्मत्वम्। ततः 'सर्वो वै रुद्र' इत्यनेन मूलरूपताभ्रमो भवति, तद्व्युदासाय 'पुरुषो वै रुद्रः सन्महो नमो नम' इति सन्महस्त्वकथनपूर्वकं लौकिकविश्वात्मकत्वपरिचायनं सतो मूलभूतस्य ब्रह्मणः महस्तेजोरूपमिति विश्वं च भूतादिलक्षणमिति। ततोऽन्तिमेन 'कद्रुद्राये'त्यनेनोपासककामदत्वादिकमुक्तम्। तेनापि महिमरूपत्वमेव स्फुटीभवतीति पाठद्वयेऽप्येक एवार्थो निश्चेयः।

कृष्णोपनिषदि 'वंशस्तु भगवान् रुद्र' इति, 'रुद्रो येन कृतो वंश' इति श्रवणादपि महिमरूपत्वम्। 'गोप्यो गाव ऋचस्तस्ये'ति ऋग्रूपत्वेन श्राविताना तासां वंशस्वनेनाकारणात्तेन शब्देन भगवत्प्रापणाद् गुरुत्वं चेति तत्राप्येष एव निश्चयः।

एवं च यदेतैः शिवतत्त्वविवेके एकत्रिंशे श्लोके उक्तं–'न नारायणानुवाकः शिवोपासनापरः, 'सहस्रशीर्षं देव'मित्यादिना नारायणस्य महिमानमुपवर्ण्य 'पद्मकोशप्रतीकाश'मित्यादिना तदुपासनास्थानहृदयपुण्डरीकसंस्थानविशेषादिकं प्रदर्श्य, 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थित' इति तस्य तत्र स्थित्युपन्यासेन तस्य दहराम्बुजे नारायणोपासनाविधिपरत्वावसायात्। अत एव कैवल्योपनिषदीव नोपास्यविभूतिषु परिगणनं कृतम्।

न चास्मिन्ननुवाके नोपासनाविधिः, किन्तु 'तस्मिन्यदन्तस्तदुपासितव्य'मिति पूर्वानुवाकोक्तोपासनापेक्षितगुणविधिमात्रं, तत्र यत्पदस्य गगनपदस्य वा उपास्यदेवतासमर्पणपरस्य यो देवानां यद्वेदादाविति पूर्वोत्तरमन्त्रसमर्पितरुद्रमहेश्वरशब्दितविशेषपर्यवसायितया उत्पत्तिशिष्टकल्पशिवान्वयविरोधान्न नारायणस्यान्वयो युज्यत इति वाच्यम्। इहैव नारायणगुणगणवर्णनसामर्थ्यात्

अतः परं यदेतैर्वैष्णवानां केषाञ्चिन्मतमुक्तं तत्राप्यस्वरसं किंचिद्वक्तुं तदप्युपक्षिपति। एवं चेत्यादि। नोपास्येति। 'स एव विष्णुः स प्राण'इत्यत्र नारायणो न विभूतौ गणित इत्यर्थः।

ज्ञानघनोक्तां युक्तिमनुवदति न चास्मिन्नित्यादि। अपेक्षितगुणविधिमात्रमिति। नारायणमुपासकत्वेन निवेश्य शिवो ध्येय इत्येवमुपासनाधिकरणमात्रमित्यर्थः।

सम्भृत्यधिकरणन्यायेन तदुपासनाविधिकल्पनस्य शक्यवचनत्वात् । न च 'पद्म-कोशप्रतीकाश'मित्यादेः पूर्वानुवाकोक्तोपासनासम्बन्धिहृदयपुण्डरीकसंस्पर्शात्तदपेक्षितगुणविधिपरत्वमवसीयत इति वाच्यम् । निवित्पादैः सामिधेनीप्रकरणस्येव नारायणगुणवर्णनपरैरनन्वयिभिः पदैर्व्यवधानेन शिवोपासनाप्रकरणविच्छेदात्, निवित्पादान्तरितोपव्यानस्य सामधेन्यङ्गत्वानन्वयवन्नारायणगुणान्तरितपद्मकोशेत्यादिमन्त्रार्थस्य शिवोपासनाङ्गत्वानन्वयात् । जुह्वादीनामव्यभिचरितक्रतुसम्बन्धवद्दहरस्यापि व्यभिचरितशैवदहरविद्यासम्बन्धाभावेन प्रकरणाभावेऽपि जुह्वादिद्वारेण पर्णतादेः क्रत्वन्वयवदपि हृदयद्वारेण तद्धर्माणां

---

सम्भृतीत्यादि । उत्तरतन्त्रे साधनाध्यायतृतीयपादे ' सम्भृतिद्युव्याप्त्यपि चात ' इत्यत्र चिन्तितम् । ' ब्रह्मज्येष्ठावीर्यासंभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्मभूतानां प्रथमं हि जज्ञे ते नार्हति ब्रह्मणा स्पर्धितुं क ' इत्यत्र या विभूतय उक्तास्ताः शाण्डिल्यादिब्रह्मविद्यासूपसंहर्तव्या न वेति संशये, ब्रह्मसम्बन्धाविशेषादुपसंहर्तव्या इति प्राप्तौ, सम्भृत्याद्या विभूतयो नोपसंहर्तव्याः, तासु हृदयाद्यायतनत्वं ब्रह्मण उक्तम् । ' एष त आत्मान्तर्हृदये य एषोऽक्षिणि पुरुषो दृश्यत' इत्यादि । एतास्त्वाधिदैविक्यो विभूतयो नाध्यात्मिकायतना काश्चनायतनरहिता अपि षोडशकलादिविद्यास्तथापि मिथः समानगुणश्रवणं विद्यैक्यप्रत्यभिज्ञापकमत्र न विद्यते अतः प्रापकाभावान्नोपसंहार इति । एवमत्र सिद्धेऽनुपसंहारे गुणश्रवणबलादुपासनाविधिकल्पनस्य शक्यत्वादित्यर्थः । निवित्यादैरित्यादि । शेषाध्यायस्य प्रथमपादे संदिग्धेऽनुव्यवायाद्वाक्यभेदः स्यादित्यधिकरणे चिन्तितम् । तैत्तिरीयाणां द्वितीयाष्टकपञ्चमप्रपाठकस्य सप्तमाष्टमानुवाकयोः 'देवा वैनर्चिन यजुष्यश्रयन्ते'त्यादिना सामिधेन्य आम्नाताः । ततो नवमे 'अग्ने महा ९ असी'त्यादिना प्रवरमन्त्रनिवित्पदान्याम्नातानि । ततो दशमे काम्याः सामिधेनीपक्षः । एकादशे तु 'निवीतं मनुष्याणां, प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्यमेव तत्कुरुत'इत्युपव्याणं विहितम् । सामिधेनीमन्त्रास्तु ब्राह्मणग्रन्थे तृतीयकाण्डे पञ्चमप्रपाठके समाम्नाताः । अत्र तु 'देवेद्ध'इत्यादीनि निवित्पदान्येवोक्तानि । तत्र पूर्वाधिकरणे अर्थावान्तरप्रयाजप्रकरणानुरोधादभिक्रमणं प्रयाजाङ्गं तत्तद्वारा दर्शाङ्गम् । तत्रावान्तरसामिधेनीप्रकरणानुरोधाद् उपव्याणं साक्षात्तदङ्गं इति पूर्वपक्षे, न तस्य सामिधेन्यङ्गत्वं, निवित्पदब्राह्मणेन प्रकरणविच्छेदात् । न च निविदां सामिधेनीसन्देशान्तरङ्गत्वं, देवेद्ध्यत्वादिलिङ्गेन तासामग्न्यङ्गत्वावगमात् । नापि निविदङ्गत्वम् , असन्निहितत्वात् । नापि काम्यसामिधेन्यङ्गत्वं, तत्प्रकरणाभावात् । नापि सन्निधानाद्यङ्गत्वं, तस्य प्रकरणतो नैर्बल्यात् । अतः प्रयाजन्यायाभावान्महाप्रकरणे दर्शाङ्गत्वं सिद्धान्तः । किञ्च, तत्रैव चतुर्थे निवीतपादे 'उपवीतं लिङ्गदर्शनात्सर्वधर्मस्या'दित्यत्र दर्शपूर्णमासाद्यङ्गत्वं व्यवस्थापितम् । तेन सामिधेन्यङ्गता नादृता । अतोऽन्वय इत्यर्थः ।

**वाक्यप्रमाणेनान्वयस्यापि वक्तुमशक्यत्वात्। अन्यथा 'शुक्रं प्रविध्य हृदयं प्रविध्ये'त्यादिमन्त्राणामपि हृदयद्वारेण विद्याङ्गत्वापत्त्या वेधाद्यर्थभेदादित्यधिकरणविरोधप्रसङ्गात्। अतः पूर्वानुवाकस्य शिवोपासनाविधिपरत्वेऽपि पद्मकोशेत्यादेः संन्निहितनारायणगुणकीर्तनसामर्थ्यकल्प्योपासनान्तर एवान्वयो युक्त इति। एतदपि नातिदुष्टं यद्यपि, तथापि पूर्वानुवाके शिवोपासनसिद्ध्यभावाद् दुष्टमेव। तत्र 'यो देवाना' मितिमन्त्रस्य रुद्रपरत्वेऽपि परमेश्वरमहिमरूपत्वेनैव शिवस्य सिद्धत्वान्महेश्वरादिशब्दानां मुख्यवृत्त्या परमेश्वर एव प्रवृत्तेरसकृदुपपादनेनोत्तरमन्त्रस्यापि परमेश्वरपरत्वाच्च शिवोपासनागन्धस्याप्यभावात्।**

**यत्तु अथर्वशिखामालम्ब्य 'यो देवाना'मितिमन्त्रस्य शिवपरत्वस्थापनं, तत्त्वथर्वशिखायास्तदभिमतशिवपरत्वनिराकरणादेव निराकृतम्।**

---

**वाक्यप्रमाणेने**ति। पुण्डरीकसंस्पर्शिपद्मकोशघटितवाक्यरूपेण प्रमाणेनेत्यर्थः। बाधकं तर्कमाह **अन्यथे**त्यादि। **वेधाद्यर्थभेदा**दित्यादि। इदमधिकरणं साधनाध्यायस्य तृतीयपादेऽस्ति। तत्र बहुभिरेवं चिन्तितम्। 'शुक्रं प्रविध्य हृदयं प्रविध्ये'त्यादयो मन्त्रा आथर्वणिकोपनिषदारम्भे आम्नाताः, 'ताण्डिनां देवसवितुः प्रसुवे'त्यादयः। एवं तत्र तत्र ते ते मन्त्रादयः समाम्नाताः सन्ति। ते विद्यासूपसंहार्या न वेति सन्देहे उपसंहार्याः। विद्याप्रधानानामुपनिषदां समीपे पाठात्। अन्यथा सन्निधेरानर्थक्यापातात्। विद्यासम्बन्धिनां हृदयादीनां कीर्तनाच्चेति पूर्वपक्षेनोपसंहारः शक्यः। सन्निधेः श्रुत्याद्यपेक्षया दुर्बलत्वात्। प्रवेधस्याभिचारलिङ्गत्वात्। 'प्रसुवे'त्यस्य 'यज्ञं प्रसुवे'त्यग्रे प्रदर्शनेन यज्ञप्रसवलिङ्गत्वात्। श्रुत्यादौ पारदौर्बल्यात्। सन्निधेः स्थानत्वेन लिङ्गापेक्षया तथात्वात्। मन्त्रार्थस्तु प्रवेधो ननु हृदयमात्रमतोऽर्थभेदाच्चेति सिद्धान्तितम्। तेन तद्विरोधादित्यर्थः। रामानुजाचार्यास्तु लिङ्गभूयस्त्वाधिकरणे चिन्तितवन्तः। 'सहस्रशीर्ष'मित्यनुवाके किं पूर्वानुवाकोक्तदहरविद्यापेक्षितोपास्यविशेषनिर्धारः क्रियत उत सर्ववेदान्तोदितपरविद्योपास्यविशेषनिर्धार इति सन्देहे, प्रकरणात्पूर्वोक्तविद्योपास्यनिर्धार इति प्राप्ते, तत्र सिद्धान्तः—अस्य निखिलपरविद्योपास्यनिर्धारणार्थत्वे बहूनि लिङ्गानि; तथाहि परविद्यास्वक्षरशिवशम्भुपरब्रह्मपरंज्योतिपरतत्त्वपरमात्मशब्दनिर्दिष्टमुपास्यं वस्त्विह, तैरेव शब्दैरनूद्य तस्य नारायणत्वं विधीयते, भूयसीषु विद्यासु श्रुताननूद्य नारायणविधानभूयस्त्वं नारायणस्य सर्वविद्योपास्यत्वे भूयो बहुतरं लिङ्गं भवति। लिङ्गशब्दश्चिह्नपर्यायश्चिह्नभूतं वाक्यं बहुतरमस्तीत्यर्थः। तद्धि प्रकरणात्प्रबलं, तस्मात्सकलपरविद्योपास्यनिर्धारोऽत्रेत्याद्युक्तवन्तः।

तदनूद्य'नेन यो देवाना'मिति मन्त्रस्य शिवपरत्वमङ्गीकुर्वता तन्नाङ्गीकृतं, तदनूद्य दूषयति **यत्त्वि**त्यादि।

यच्च संम्भवति तु द्वयोरपि कल्पभेदेन तत्कारणत्वमिति प्रसाधयिष्याम इत्युक्तं, तत्तु परत्वप्रतिक्षेपायैव फलतीति तेन विभावनीयम् ।

यदपि भर्तृभार्याभावेनैकस्मिन्नपि कल्प उभयोर्ब्रह्मजनत्वमुक्तं, तदपि तस्य विष्णोरन्यत्वादुपपन्नमपि प्रकृतानुपयोगि । वादिप्रतिवादिनोः परनिर्णयस्य प्रवृत्तत्वात् स्वस्वमतमनुसृत्यापरभावस्य तत्र प्रतिपाद्यतया परभावप्रतिपादकवचोगतेस्तेनाप्युपपादनीयत्वेनानवसरपराहतत्वात् ।

'यो देवाना'मिति मन्त्रव्याख्यानं तु मायासाहित्यराहित्यादथर्वशिरोनिरुक्तस्य 'यस्मादृषिभिर्नान्यैर्भक्तैः द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्र' इत्यस्य रुद्रपदार्थस्य त्यागाच्च परब्रह्मपरत्वमेव पर्यवस्यन्न तदभिमतं शिवं गोचरयतीति तस्यैव प्रतिकूलम् ।

पुंसूक्तविचारे हिरण्यगर्भशब्दस्य शिवनामत्वेन लैङ्गवाक्यान्निश्चितत्वेनात्र तदुत्पत्तिकथनादपि तथा ।

किञ्च, यत्पुनर्लैङ्गमुपबृंहणत्वेनोपन्यस्तं, 'अव्यक्तादभवत् स्थाणुः शिवः परमकारणम् । सत्कार्यकारणोपेत ऋषिर्विश्वाधिकः प्रभुः। देवानां प्रथमं देवं जायमानं मुखाम्बुजात् । ददर्श चाग्रे ब्रह्माणमाज्ञया तमवैक्षत । दृष्टो रुद्रेण देवेशः ससर्ज सकलं जगत् ।' इति तेन सुतरां अव्यक्तादुत्पत्तिकथनेन तस्य जन्यतया त्रिमूर्त्यन्तर्गतत्वनिश्चयात् स्वयमपि पूर्वं स्थाणोर्जन्यत्वस्वीकारादग्रे भारतविमर्शे स्वीकरिष्यमाणत्वाच्च । तदुपबृंहितमन्त्रेणापि तस्यैव प्रकाश्यत्वावगतौ पूर्वोक्तव्याख्यानविरोधाच्च । मन्त्रस्य परशिवाप्रकाशकत्वावसायात् । वस्तुतोऽपि हिरण्यगर्भस्याव्याकृतादेवोत्पत्तेश्च । एतेनैव 'हिरण्यगर्भो जगदन्तरात्मन् त्वत्तोऽभिजात' इति कौर्ममपि व्याख्यातम् । अतएव स्वोक्तमननुसन्दधानो यत्किञ्चित् प्रलपन् कथमन्यानुपहसतीत्याश्चर्यम् ।

यदपि श्वेताश्वतरे 'हिरण्यगर्भं जनयामास पूर्वं' इत्येवास्य पाठ इत्युक्तं, तत्तथैव; किन्तु तस्य प्रतिकूल एव । तत्र हि तृतीयेऽध्याये 'य एकोऽज' इत्या-

---

मन्त्रव्याख्यानमिति । 'महर्षिर्महाद्रष्टा यः सर्वज्ञः सर्ववि'दिति श्रुतेः, अशेषविशेषविषयकबोधसमृद्धः विश्वाधिकः चिदचित्प्रपञ्चाधिकः कृत्स्नपशुवर्गनियन्तृत्वात् । रुद्रोभक्तानां संसारद्रावकः, रुजं द्रावयतीति । देवानां मध्ये प्रथमं हिरण्यगर्भं जायमानं, स्वस्मात् पुरस्तात् कल्पादौ करुणापूर्णया दृष्ट्या साक्षाद्दृष्ट्या अपश्यत् । सोऽस्मान् शुभयानन्दतृप्तिकारिण्या स्मृत्या संयोजयत्विति रूपमित्यर्थः । रुद्रपदार्थस्येति । रुरूपं द्रुतं नोपलभ्यतेऽस्येति रुद्र इत्येवंरूपस्येत्यर्थः ।

रभ्य मन्त्रत्रयमुक्त्वा, चतुर्थमन्त्रमिममुक्त्वा, 'या ते रुद्रशिवा तनू'रित्यादि-पञ्चमन्त्रानुक्त्वाग्रे पठ्यते–'ततो यदुत्तरतरं तद्रूपमनामय'मित्यादि, 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिव' इत्यादि च; एवं सति पूर्वं यो विश्वतश्चक्षुष्ट्वादिरूपेण हिरण्यगर्भजनकत्वादिरूपेण च प्रतिपादितः, ततो यदुत्तरतरमुत्कृष्टतरं तद्रूपमव्यवहार्यमनामयं मायासम्बन्धरहितं, य एतद्विदुरमृतास्ते भवन्ति, अथेतरे पूर्वोक्तमात्रविदो दुःखमेवापियन्तीत्युक्त्वा, निर्विशेषतामात्रव्यावृत्त्यर्थमाह 'सर्वाननशिरोग्रीव' इत्यादि। तथा चैतादृशस्य परमात्मनोऽन्तःस्थित्यैव पूर्वोक्तस्य रुद्रस्य तथासामर्थ्यं न स्वत इति सिध्यति, तेन नारायणोपनिषदि योऽर्थः प्रतिपादितः स एवात्राप्येवं स्फुटतीति सुधीभिरवधेयम्।

आश्वलायनवाक्यं तु कैवल्यश्रुतिविचारेण विचारितप्रायमेव।

यच्च 'समाहितात्मनो ब्रह्म'न्नित्यादिश्रीभागवतवाक्यान्युदाहृत्यार्धमात्रावाच्यश्च शिव एवेति स्फुटीकृतोऽथर्वशिखाविचारे इत्युक्तं, तत्तु तत्रैव समाहितमस्माभिः। 'यो वेदादा'वित्यस्योत्प्रेक्षितव्याख्यानं तु शिष्टासम्मतमेवेत्युभयवादिसम्मतं प्रकरणं तु परब्रह्मण एवेत्युपपादितम्।

---

तत्रैव समाहितमिति। पञ्चकूटात्मकप्रणवस्यार्धमात्रावाच्यो यः शिवः तस्य मायानुपहितत्वेन भगवदभिन्नत्वव्यवस्थापनादिभिरथर्वशिखाविचार एव समाहितमित्यर्थः। उत्प्रेक्षितव्याख्यानमिति। यो वेदादौ यः स्वरः प्रोक्तः आकारः 'अग्निमीळे पुरोहित'मिति। वेदान्ते वेदसमाप्तौ स एव 'प्रतिः समानं पर'मित्यत्रोपान्त्यः, ततः परं स्वराभावेन तस्यैवान्त्यस्वरत्वात्। तस्य प्रकृतिलीनस्य, 'वासुदेवः परा प्रकृति'रिति वाक्यात्। तस्मिन् लीनस्य वाच्यवाचकभावेनाभेदं प्राप्तस्य। 'वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचि'दिति वायूक्तेः। तस्य यः परो यः प्रधानभूतः 'प्रकृतिस्त्वं पुमान् रुद्र' इति वचनसिद्धो रुद्रः 'ततस्तदालोकनतत्पराणा'मित्यादौ परशब्दस्य प्रधाने प्रयोगात् 'स महेश्वरो महानीश्वर' इति। यद्वा, अस्य मन्त्रस्य याजुषत्वात्तदादौ प्रोक्तः स्वर इकारः 'इषेत्वे'ति। स एव तदन्ते प्रतिष्ठितः 'एवं वपती'ति। तस्य प्रकृतिः लक्ष्मीः, 'तत्र श्रीरभवद्देवी'त्युपक्रम्य 'मूलं प्रकृतिरव्यये'ति कौर्मात्। तस्यां वाच्यवाचकभावेन लग्नस्य लक्ष्मीनामत्वाद्दैर्घ्यावस्थां प्राप्तस्य तस्य यः परः, पञ्चम्यर्थे षष्ठी, तस्माद्य उत्तरो वर्ण उकारः, स महेश्वरस्तद्वाच्यः सर्वेश्वर इति रूपम्। तत्तु तेनैवाप्रामाणिकमङ्गीकृतमतो मूले तन्न लिखितम्। यदुक्तमर्थनिर्धारणाय प्रकरणमुपासनीयमिति, तत्राह प्रकरणं त्विति।

शिवराघवसंवादे 'अणोरणीया'निति मन्त्रस्य त्रिपुण्ड्रधारणाङ्गभस्मसम्पादने शैवे

एवं सति 'धातुः प्रसादादिति मन्त्रस्य त्रिपुण्ड्रधारणाङ्गभस्मसम्पादन-विनियोगोऽपीन्द्रयाधिकरणन्यायेन गौण्याप्युपपन्नतरः। अतः 'अणोरणीया'-निति मन्त्रगतश्रुत्याभासरूपेशपदेन प्रकरणोपक्रमस्य महेश्वरादिपदेनोपसंहारस्य च शिवविषयत्वप्रत्याशां दूरतस्त्यक्त्वा मन्त्रस्य परब्रह्मपरत्वमेवावसेयम्।

एवं सति 'दहरं विपादं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थं,' तत्रापि 'दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्य'मितिविधिवाक्येपि हृत्पुण्डरीकान्तःस्थदहराकाशरूपो यः परस्तस्मिन् यदन्त उत्कृष्टं स्वरूपं तदुपासितव्यमित्युच्यते, न तु यत्किञ्चिद्रूपमिति सिध्यति। उत्कृष्टं च पुरुषोत्तमस्वरूपमेव, अनुपहितत्वात्, न तु मायोपाधिकं तदधीनत्वादित्युपपादितम्। अतो निश्चितविध्यनुरोधेनापि तत्रैवानुवादभागयोजनं नान्यत्र। तेन 'यस्योभावग्नी अनुगतावभिनिम्लोचेत् अभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रित्यत्र हविरार्त्यधिकरणन्यायेनाग्निद्वित्वस्याविवक्षया एकैकाग्न्यानुगमस्यापि पुनराधेयनिमित्ततयानुवादप्रतीतेर्व्यवस्थितत्वेऽप्यग्निद्वयोत्पादकतया 'अग्नी आदधीते'ति वाक्यान्तरावगताधानाभ्यासरूपस्य विधेयस्य पुनराधेयस्य एकाग्निमात्रोत्पादनाक्षमतया विधेयानुरोधेनानुवादभागेऽग्निद्वित्वविवक्षायाः पुनराधेयमोदनवदित्यधिकरणे निर्णीतत्वेन व्यवस्थितानुवाद्यार्थप्रतीतिस्थले विधेयानुरोधेनानुवाद्यार्थनिर्णयौचित्यस्य कैमुतिकन्यायसिद्धत्वादिति भवदुक्तन्यायेनापि भगवद्वैभवपर एवायं मन्त्रः सिध्यति। तथा 'यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः। वेदैकवेद्यं याथार्थ्याद्वेदान्ते च प्रतिष्ठित'मित्यादिवायूक्तोपबृंहणमप्येत-

---

कर्मणि विनियोगादिना प्रकरणस्य शैवत्वं तेनोक्तं, तद्दूषयति एवमिति। धातुरित्यादि।

तेन तत्रत्यदहरोपासनायाः शिवपरत्वं यन्मन्त्रसन्दंशमात्रेण साधितं तन्मन्त्रार्थकथनेन दूषयति एवं सतीत्यादि। तदुक्तन्यायमत्र योजयति तेनेत्यादि। इदमधिकरणं षष्ठस्य चतुर्थपादेऽस्ति हविरार्त्यधिकरणमपि तत्रैव। 'यथाश्रुतीति चे'दित्यत्र चिन्तितम्। तत्र दर्शपूर्णमासयोर्दोहौ प्रकृत्य श्रूयते। 'यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदि'ति। तत्रायमोदनः किं हविर्द्वयार्तौ विधेय उतैकस्याप्यार्ताविति सन्देहे उभयशब्दस्यार्तिविशेषणत्वेन श्रुतत्वादुभयार्तौ विधेय इति प्राप्तौ निमित्तत्वेन आर्तिमात्रोपन्यासे कस्यार्तिरित्याकाङ्क्षोदयाद्धविःशब्दार्थोऽवश्यं वक्तव्यः। तावतैव निमित्ताकाङ्क्षापूर्तौ उभयशब्दार्थो न विवक्षितः। एवं हविरार्तिमात्रस्य निमित्तत्वे सति सायं प्रातर्दोहार्त्योरुभयोर्निमित्तत्वमर्थसिद्धमेवात्रोभयशब्देनानूद्यते। तस्मादेकस्यापि नाशेऽयमोदनो निर्वपणीय इति सिद्धान्तितम्। भगवद्वैभवपर इति। दहरगगनान्तःस्थस्योपास्यत्वसिद्धेस्तत्परत्वात्त्वद्रीत्या विचारेऽपि 'अणोरणीयानि'त्यादिभागः सर्वोऽपि महिमपदसमर्पितभगवद्विभूतिरूपशिवपरः

त्परमेव । सर्वत्र तस्यैव प्रतिपाद्यत्वात् । 'तदधीनप्रकृतित्वात्प्रकृतेः पुरुषस्य चे'त्यनेन प्रकृतिसम्बन्धराहित्यबोधनात् । भवदभिमतस्य मायोपहितत्वात् ।

यत्तु व्याख्यातं, वेदादौ यः स्वरः प्रोक्तः प्रणवप्रतिपाद्यप्रतिपादकाभेदोपचारात् लक्षणया, तत्प्रतिपाद्यं निर्विशेषं ब्रह्म, तदेव वेदान्ते च प्रतिष्ठितं वेदान्तभागप्रतिपाद्यत्वात्तस्य प्रकृतावविद्याख्यायां प्रतिबिम्बभावेन लग्नस्य प्रकृतिसहितस्य यः परो नियन्तृत्वेन प्रधानभूतः 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इत्यादिश्रुतिप्रसिद्धः, स महेश्वरशब्दितः श्रीसदाशिव एव न देवतान्तरमिति स्वीकार्य इति, तत्रापि लक्षणयेति त्याज्यम् । 'ततोऽभूत्त्रिवृदोङ्कार' इत्योङ्कारं प्रकृत्य, 'स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मन' इति श्रीभागवते कण्ठरवेण स्वप्रतिष्ठब्रह्मवाचकत्वोक्तेः । याज्ञवल्क्येऽपि तथा स्वीकाराच्च । 'श्रीसदाशिव' इति च मन्त्रोपनिषदापि भवदभिमतासिद्धेः पूर्वमुपपादितत्वात् ।

यत् पुनः कैवल्योपनिषदुक्तानां उपासनास्थानसाम्योपास्यरूपाणां प्रत्यभिज्ञानादप्यस्याः शिवपरत्वमुक्तं, तदप्यभिमानमात्रमेव । उपासनास्थानविशेषणानां दहरादिपदानां तत्राभावात् । तदुपास्यरूपबोधकपदानां चात्राभावात् । तत्र 'हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोक'मितिपाठात् । 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त'मित्येषां

सिध्यन् भगवत्येव पर्यवस्यतीत्यर्थः। किञ्च वायुसंहितावत् यो वेदादावित्यस्यार्थः पाद्मे उत्तरखण्डे त्रिपाद्विभूतिकथनाध्याये शिवेन यो वेदादाविति मन्त्रमुपन्यस्य, 'योऽसावकारो वै विष्णुर्विष्णुर्नारायणो हरिः । स एव पुरुषो नित्यः परमात्मा महेश्वरः । यस्मिन्नीश्वरसंज्ञापि प्रोच्यते मुनिभिस्तथा । निरुपाधीश्वरत्वं हि वासुदेवे प्रतिष्ठितम् । आत्मेश्वर इति प्रोक्तो वेदवादैः सनातनैः । तस्मान्महेश्वरत्वं हि वासुदेवे प्रतिष्ठितम्' इति पार्वतीं प्रति व्याख्यातः । अर्थस्तु य अकारः असौ वै निश्चयेन वाच्याभेदाद्विष्णुः । विष्णुश्च नारायणो हरिरेव न तु यौगिकार्थोऽन्यः कश्चित् । पुरुषादिरपि स एव, तेन पुरुषादिशब्दाङ्कितवेदान्तेषु स एव प्रतिष्ठित इत्यर्थः । उत्तरार्धो व्याख्येयस्तदर्थमीश्वरमहेश्वरशब्दयोरर्थः श्लोकद्वयेनोक्तः, तथा चाकारस्य प्रकृतौ नादे लीनस्य यः परो नियन्ता स निरुपाधिर्वासुदेव एव न सोपाधिक इति ।

तदेतद्धृदिकृत्य यत्त्वित्यादिना तदुक्तव्याख्यानमनुवदन् तत्रास्वरसं स्फुटीकरोति तत्रापीत्यादि ।

अपि च कैवल्योपनिषदाम्नातगुणगणेत्यादिना यत्तेनोक्तं तदनूद्य दूषयति यत्पुनरित्यादिना । ननु त्रिलोचनादिपदानामत्राभावेऽपि 'अग्ने ऋतं सत्य'मिति मन्त्रे विरूपाक्षकृष्णपिङ्गलपदयोस्त्रिलोचनोमासहायप्रदसमार्थत्वादित्याशङ्कायां तस्यानन्वयं तस्य भगवत्परत्वं चाह

मध्ये कस्याप्यदर्शनात्। 'ऋतं तस्ये'ति मन्त्रस्य नारायणानुवाकोत्तरं द्रविडपाठेऽपि दर्शनात्तद्व्यवहितस्य तस्य निवित्पादान्तरितोपध्यानस्य सामिधेनीष्विव पूर्वोपासनायामन्वयायोग्यत्वात् । तस्य नृसिंहतापनीयेन केसरिपरत्वेनोक्तेः शिवाप्रकाशकत्वाच्च । 'कृष्णपिङ्गल' इत्यत्र कृष्णपदस्य केवलकण्ठकार्ष्ण्यबोधकत्वे नीलकण्ठपदेन कथञ्चिदैकार्थ्यं सिध्यति । तच्चा'र्धपुँल्लक्षणं' इत्यनेन पुमर्धस्य कृष्णत्वावगत्या विरुध्यत इति कृष्णपिङ्गलशब्दस्योमाशाबल्यविवरकत्वेऽपि पुंसूक्तविचारोपदर्शितरीत्या तेनापि भगवत एव विवरणाच्च। नमस्कारपादोदकप्राशनविनियोगस्यैन्द्रयाधिकरणन्यायेन गतार्थत्वाच्च न कथमप्यत्र शिवपरत्वसिद्धिरित्यनर्थकमाडम्बरमातन्वन्नन्यानुपहससि त्रैलोक्यविजयीभवसि ।

एतेनैव 'अथवा परमात्मानं परमानन्दविग्रहम् । गुरूपदेशाद्विज्ञेयं पुरुषं कृष्णपिङ्गलम्। ब्रह्म ब्रह्मपुरे गार्गि दहराख्यस्त्वमध्यमे। अभ्यासात्सम्प्रपश्यन्ति सन्तस्त्वं च तथा कुर्वि'ति योगियाज्ञवल्क्योक्तमपि व्याख्यातप्रायम् । गुरूपदेशस्य हेतुताकथनेन स्वकाल्पनिकस्य निवारणात्। गुरुभिश्च श्रुतिमनुसृत्यैवोपदेशादिति। मध्यमानुवाकस्य ध्यातृबोधकत्वं पुरस्तादेव निरस्तम्। सम्भृत्यधिकरणन्यायकोपासनान्तकल्पनादिकमपि तथा ।

---

ऋतेत्यादि । तैलङ्गपाठेऽयं मन्त्रोऽत्यन्तव्यवहितो न द्रविडपाठे, तथाऽपि व्यवधानं न व्यभिचरतीति ज्ञापनायापिशब्द उक्तः। ननु 'अर्धालकमवस्त्रार्धमस्थ्युत्पलदलस्रजम्। अर्धपुंल्लक्षणं वन्दे पुरुषं कृष्णपिङ्गलम्' इति भविष्यवचने कृष्णपिङ्गलशब्दस्योमाशबल्यपरत्वेन विवरणादस्ति प्रत्यभिज्ञानमित्याकाङ्क्षायामाह कृष्णेत्यादि। तथा च यद्यर्धस्य कृष्णत्वं तदा प्रत्यभिज्ञाबाधः। यद्यर्धैकदेशस्य तथात्वं तदोपदर्शितवाक्यविरोध इति द्विधाप्यसङ्गतम् । यदि कृष्णपदार्थमनादृत्योमाशबल्यमात्रबोधकत्वं तदा 'ह्रीश्च ते लक्ष्मीश्चे'त्यत्र तापनीयवाराहोक्तदिशा उमाया भगवच्छक्तित्वस्य दर्शितत्वात्तथेत्यर्थः । कौर्मबोधाय न सूत्रोक्तविनियोगविधिबलेन प्रत्यवतिष्ठन्तं प्रत्याह नम इत्यादि ।

योगिवाक्येन प्रत्यवस्थानं निवारयति एतेनेत्यादि। अन्तरायवारणार्थं यत्तेन 'सहस्रशीर्ष'मित्यादिना नारायणमनूद्य, 'तद्विश्वमुपजीवती'त्यत्र तस्य विश्वोपजीवकत्वमङ्गीकृत्य, 'पद्मकोशप्रतीकाशं' 'तस्य मध्ये महानग्निः' 'तस्य मध्ये वह्निशिखे'त्यादिना हृदयकमलमहाग्नितच्छिखागुणकीर्तनसामर्थ्यलभ्यानां ध्यानानां हृदयादिवर्तिशिवोपासनानुकूलतया नारायणान्तरत्वेन नारायणस्य यद्ध्यातृत्वमुक्तं, तत्तु अनुवाकव्याख्यानेनैव दूषितमित्याह मध्यमेत्यादि। तथेति। पूर्वोक्तोपासनायामन्वये बाधकाभावादतिरिक्तकल्पनावैयर्थ्यादेव निरस्तमित्यर्थः ।

यच्च कौर्मोक्तेश्वरगीतावाक्यजातमुपन्यस्तं 'चिन्तयित्वा तु पूर्वोक्ते हृदये पद्ममुत्तमम्। आत्मानमथ कर्तारं तत्रानलसमप्रभम्। मध्ये वह्निशिखाकारं पुरुषं पञ्चविंशकम्। चिन्तयेत्परमात्मानं तन्मध्ये गगनं परम्। ओङ्कारबोधितं तत्वं शाश्वतं शिवमुच्यते। अव्यक्ते प्रकृतौ लीनं परं ज्योतिरनुत्तमम्। तदन्तः परमं तत्त्वमात्माधारं निरञ्जनम्। ध्यायेत तन्मयो नित्यमेकरूपं महेश्वर'-मिति; तत्र त्वस्मदुक्त एवार्थः स्फुटति। 'तन्मध्य' इत्यारभ्यानुत्तममित्य-न्तेन परमात्माधिष्ठेयगगनरूपं शिवं विवृत्य, 'तदन्त'रित्यनेनाधिष्ठातुर्ध्येयस्य विवरणात्। महेश्वरशब्द एव परं भवादृशां भ्रममादधाति। ईश्वरगीता-यांश्च भगवत्परत्वमग्रे व्युत्पाद्यम्। व्याख्यानं तु व्याख्येयविरुद्धमेव। आनन्द-मयकोशरूपस्य पञ्चविंशस्य मध्ये 'सहस्रशीर्षं देव'मित्यादिमन्त्रबोधितस्य तत्रानुपलब्धेः। प्रत्युत 'यो वेदादा'वित्यादिनोक्तस्य भवदभिमतस्य 'अव्यक्ते प्रकृतौ लीन'मित्यादिभिरुपलब्धेः। तथा सति तदन्तर्वर्ती सर्वदेवतात्मकः पर-मात्मा एव मन्त्रोक्तः पर्यवस्यतीति किमधिकं ब्रूमः?

वस्तुतस्तु वह्निशिखान्तर्गगननिवेशस्य नारायणानुवाके महोपनिषदि चाभावादेतस्य तदुपबृंहणत्वमेव न घटते।

---

नन्वीश्वरगीतायां ध्यातृत्वमुक्तं, तस्याः कथमविरोध इत्यत आह यच्चेत्यादि। व्याख्यानमिति। प्रथमं स्वस्थाने हृदयकमलस्य, तन्मध्ये मूलश्रुतावग्नित्वेन निरूपितस्य कर्तृत्वादिविशिष्टस्य विज्ञानमयकोशरूपस्याहङ्कारस्य, तन्मध्ये निष्कृष्टचैतन्यैकतानस्यानन्द-मयकोशरूपस्य, तत्र वह्निशिखात्वेन रूपितस्य, पञ्चविंशस्य तन्मध्ये 'सहस्रशीर्षं देव'मित्यादि-नोपवर्णितस्य, 'तस्याः शिखाया'इत्यादिना शिखामध्यवर्तित्वेनोपदिष्टस्य नारायणस्य, तदन्ते 'यः परः स महेश्वर'इत्युक्तस्य शिवस्योपासनमित्याकारकं तदित्यर्थः। अत्र कमल-स्येत्यादीनां षष्ठ्यन्तानां क्रमेणोपासनपदेनान्वयः। क्रमस्तु 'पूर्वस्वशरीरस्थाने हृदयं ध्येयं तन्मध्येऽहङ्कारो विज्ञानमयः, तन्मध्ये निष्कृष्टचैतन्यात्मक आनन्दमयः पञ्चविंशः, तन्मध्ये नारायणः, तन्मध्ये शिव इति। अस्मिन्विरोधं स्पष्टयति आनन्देत्यादि। तत्रानुपलब्धे-रिति। व्याख्येयग्रन्थे पञ्चविंशकपरमात्ममध्ये 'गगनं पर'मित्यारभ्या'नुत्तम'मित्यन्तेन बोधितो यस्तस्मिन्नोङ्कारबोधितत्त्वशिवत्वयोः कथनात् 'ओङ्कारं सर्वेश्वरं द्वादशान्त' इति द्वादशान्तोपास्यत्वशिखाप्रतिपाद्यत्वयोः स्फुटं प्रतीत्या तथेत्यर्थः।

शाश्वतशिवाच्युतपदानामत्र दर्शनादत्राग्रहं मन्यमानं प्रत्याह वस्तुत इत्यादि। नारा-यणानुवाके हृदयमध्ये सुशिरं तत्रावग्निस्तस्य मध्ये शिखा तत्र परमात्मेति क्रमदर्शनात्, महोपनिषदि 'हृदयपद्मं तस्य मध्येऽग्निस्तस्य मध्ये वह्निशिखा तत्र परमात्मे'तिक्रमदर्शनाच्चये-त्यर्थः। तेनात्राच्युतपददर्शनेऽपि विप्रतिषिद्धसमवायन्यायेन शिव एव ग्राह्य इति भावः।

यतिधर्मप्रकरणीयसन्दर्भस्त्वधिकारिविशेषानुसारी शिवांशं विष्णुं गोचरयन् न प्रस्तुतविरोधी अनुपबृंहणरूपश्चेति स्फुटमेव।

यत्तु ज्ञानघनापरनामा—'नारायणोपनिषदि महेश्वरोपासनाविषयास्त्रयोऽनुवाकाः समाम्नायन्ते 'अणोरणीयान्' 'सहस्रशीर्षं' 'ऋतंसत्य'मिति प्रतिज्ञाय, प्रथमानुवाकमन्त्रव्याख्यानावसरे 'न कर्मणा न प्रजये'तिमन्त्रद्वये प्रथममन्त्रे 'न कर्मणे'त्यादिना यतात्मनः पुरुषानधिकृत्य विषयपरित्यागनिबन्धनाममृतत्वप्राप्तिमुक्त्वा, द्वितीये वेदान्तश्रवणजनितविनिश्चितार्थाः सर्वकर्मसंन्यासपुरःसराद्योगादेव विशुद्धान्तःकरणाः परार्धद्वयं यावदवस्थाय ब्रह्मलोके परस्य ब्रह्मकल्पस्यावसाने सर्वस्मादधिकममृतं महेश्वरं प्राप्यमुच्यन्त'' इति व्याख्याय, ततो जाबालश्रुतिमुपन्यस्यामृतशब्दस्य महेश्वरवचनत्वं च स्थापयामास;

तत्र पूर्वमन्त्रेऽमृतत्वशब्दाज्जाबालश्रुतिबोधितार्थस्य तत्रैव प्रतीतेर्द्वितीयमन्त्रस्थस्य परामृतशब्दस्य महेश्वरवचनत्वं न शक्यवचनं, स्वयमग्रे पूर्वतन्त्रस्यैवानुसरणात्। पूर्वतन्त्रे इन्द्रमहेन्द्रयोरिवात्रापि भेदस्यैव सिद्धेः।

यच्च 'यो वेदादौ स्वर'इत्यनुवाकसमाप्तिमन्त्रव्याख्याने 'तदिह महेश्वर' इत्युपास्यवस्तुनः सञ्ज्ञा कृता, रूपं तु परस्तादभिधास्यते 'कृष्णपिङ्गलमूर्ध्वरेतं विरूपाक्षं' इत्युक्त्वा, अश्वप्रतिग्रहेष्टिन्यायमुपक्षिप्य, प्रतिगृहीतवचनोऽपिशब्दः प्रथमावगतेरुपरोधाद्दातृगोचरो नीयते किं पुनरिहोपक्रमोपसंहारयोरवगतमहेश्वरोपासनानुरोधनेत्याह।

---

ननु यतिधर्मप्रकरणे ईश्वरचिन्तनमुपक्रम्य'कृत्वा हृत्पद्मनिलये विष्ण्वाख्यं विश्वसम्भवम्। तदन्तः सर्वभूतानामीश्वरं ब्रह्मरूपिणम्। पुराणं पुरुषं शम्भुं ध्यात्वा मुच्येत बन्धनाद्' इत्युक्तं तस्य का गतिरित्यत आह यतिधर्मेत्यादि।

अप्पयदीक्षितेन ज्ञानघनमतमत्र लिखितं तदपि दूषयितुं उपक्षिपति यत्त्वित्यादि।

अश्वप्रतिग्रहेष्टिन्यायमिति। तृतीयस्य चतुर्थे 'अचोदितं च कर्मभेदा'दित्यत्र चिन्तितम्। 'यावतोऽश्वान् प्रतिगृह्णीयात्तावन्तो वारुणांश्चतुष्कपालान्निर्वपे'दिति। अस्मिन्वाक्ये प्रतिगृह्णीयादिति विधिश्रवणात्प्रतिग्रहीतुरिष्टिरिति प्राप्तं, तन्न। उपक्रमे 'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत्सपर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै स वरुणपाशादमुच्यते'ति। अनयद्दत्तवान्। स वा दाता प्रजापतिः स्वामिज्यां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान्। 'तेन रोगेण स विदीर्णो जातस्तत इष्टिकरणेन रोगादमुच्यते'त्युपक्रमगतादर्थवादाद्दातुः प्रतीयते। उपक्रमस्त्वसञ्जातविरोधत्वात्प्रबल इति विधिपदमन्तर्भावितण्यर्थतया व्याख्येयमितिन्यायमित्यर्थः।

तदपि पूर्वव्याख्यानादेव दूषितचरम्। किञ्चाश्वप्रतिग्रहेष्टौ यथा 'प्रजापतिर्वरुणायाश्वमनय'दिति वाक्यशेषेण प्रथमावगतिर्निष्कृष्यते, तद्वदिह नोपक्रमेणेति यावदुपसंहारमावृत्तावपि न कैमुतिकन्यायादपेक्षितसिद्धिः। अतो-मध्यमानुवाके उपासनफलयोरनुपलम्भेऽप्यदोषः, गुणविशेषसमर्पकत्वेनैवाङ्गीकारात्।

किञ्च, तल्लिङ्गाधिकरणविरोधेन रूढेरप्रयोजकत्वादामिक्षान्यायस्य पूर्वतन्त्रसिद्धस्य गुणोपसंहारन्यायबाध्यत्वेनोत्तरतन्त्रस्थे विषये प्रवृत्तिप्रतिरोधात्तन्न्यायोपन्यासोऽप्यन्याय्य एव। एवं तन्न्यायनिरासे द्वितीयान्तानां नारायणादिपदानामभ्यासमवधीर्योपासकत्वसमर्थनं महदेव तस्य पाण्डित्यं द्योतयति। अतोऽश्वप्रतिग्रहेष्टिन्यायेन निष्कृष्य प्रथममवगतस्य भगवन्महिमरूपस्येशस्यैव विप्रकृष्टस्यापि गुहातस्योपासकत्वाय नारायणाधिष्ठेयत्वेन परामृष्यतां, विशिष्टपुरुषसम्बन्धित्वेनोपासनायाः स्तोतव्यत्वात्। तथाच 'यथा देवाःसुराः संयत्ता आसन् स प्रजापतिरिन्द्रज्येष्ठपुत्र'मित्यत्र पत्नीसंयाजादितत्तदन्ततामिष्टीनां विधाय तच्छ्रद्धाजननार्थमेवं हि देवा अकुर्वतेति विशिष्टपुरुषाचरणमुक्तं तद्वदिहापीति युष्मदुक्तदृष्टान्तादेव युष्मदभिमतप्रतिरोध इति सुसमर्थितमिह महेश्वरोपास्यत्वम्।

---

पूर्वव्याख्यानादिति। 'अणोरणीया'नित्यनुवाकव्याख्यानात्। नोपक्रमेणेति। ईशपदस्य महिमसमर्पकत्वं वा विशेष्यसमर्पकत्वं वेति वादकवलितत्वादीशादिपदवृत्तेरपि तथात्वादुपक्रमेण निष्कृष्यत इत्यर्थः। कैमुतिकन्यायादिति। 'गजा यत्र न गण्यन्ते मशकानां तु का कथा' इति लौकिकन्यायात्।

ननु रूढिं न्यकृत्य सहस्रशीर्षत्वादिगुणाङ्गीकारे न्यायविरोधो दुर्निवार इत्याशङ्कायां रूढिनैर्बल्यस्य पूर्वं साधितत्वात्साम्प्रतं न्यायनैर्बल्यमाह किञ्चेत्यादि। आमिक्षेत्यादिन्यायस्तु प्रागुपन्यस्तः। गुणोपसंहारन्यायस्तु साधनाध्यायतृतीयपादे। 'उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने चे'त्यत्र परेषां सिद्धः। उपसंहारो नाम सामान्यतः प्रवृत्तस्य विशेषे नियमनम्। सः अर्थाभेदात् प्रयोजनाभेदात्। यदेवैकस्यां वैश्वानरदहरविद्यायां विधिशेषो गुणो विद्योपकाराय क्रियते स एव वेदान्तान्तरोदितायां तस्यां तदर्थं क्रियते। उपास्यस्वरूपानुसन्धानेन ह्युपकारस्तच्च गुणैरुपेतः समान एकरूप उपासने वेदान्तान्तरोदिता गुणा उपसंहारमर्हन्ति। तत्र दृष्टान्तः विधिशेषवद् इति। यथा अग्निहोत्रादिधर्माणां सर्वशाखास्वग्निहोत्रसामान्यादुपसंहारस्तद्वदिति। यत्र गुणान्तरावरोधेऽप्येवं तत्र तामेवोपासनां प्रकृत्यैतेषामाम्नानात्। नाममात्रस्याप्रयोजकत्वात्प्रवृत्तिप्रतिरोधः किं वाच्य इति भावः।

या त्वत्र शिवतत्त्वविवेककारेण सूतसंहितासम्मतिः प्रदर्शिता, सापि श्रुतौ द्वितीयया ध्यानकर्मताश्रवणात् पशुत्वाश्रावणात्क्रमेण श्रुत्यबाधाच्च विसम्मतिरेव । स्मार्तो भिन्न एव प्रकारश्चेत्तदुक्तं शिवांशं विष्णुमादाय भवतु सार्थको नेति को ब्रूते ? न तावत्तैतच्छ्रुत्युपबृंहणत्वं सम्भावयितुमपि शक्यं, अनुपपत्तेरुक्तत्वात् ।

यत्तु 'नारायणपरं ब्रह्मतत्त्वं नारायणः पर'इत्यत्र पञ्चमीतत्पुरुषमुद्भाव्य द्वितीयः परशब्दोऽन्यार्थकत्वेन व्याख्यातः, तदपि दुराग्रहमात्रम् । पञ्चमीतत्पुरुषविनिगमकाभावात् । ज्यायोऽर्थकपरशब्दप्रायपाठपठितस्यास्यैव परशब्दस्यान्यार्थकत्वेऽपि मानराहित्याच्च ।

यत्तु चत्वारिंशे श्लोके उक्तं, 'तैत्तिरीयोपनिषदि सवितृमण्डलान्तर्गतं शिवं प्रस्तुत्य, 'स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोत'मित्यनेन

---

सूतसंहितासम्मतिरिति । 'अथवाहं हरिः साक्षात्सर्वज्ञः पुरुषोत्तमः । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । विश्वो नारायणो देवो ह्यक्षरः परमः प्रभुः' इति ध्यात्वा, पुनः 'स्वस्य हृदयाम्भोजमध्य' इत्यादिना स्वस्य हरित्वेन ध्यानं स्वहृदयकमले प्रणवबोधिते 'नीलतोयदमध्यस्थविद्युद्वर्णं महान्तमग्निं तच्छिखामध्यगतं सत्य'मित्याद्युक्तं नीलकण्ठं परमात्मानमहङ्ग्रहेण ध्यायीतेत्येवं बोधकवाक्यसन्दर्भरूपेत्यर्थः । ध्यानकर्मताश्रवणादिति । सकलपरविद्यासु तथात्वबोधनमन्तरेण तेषां विशेषणानां वैयर्थ्यनिरासस्यासम्भवेन तदर्थं तथात्वादित्यर्थः । क्रमेणेत्यादि । अहङ्ग्रहे पूर्वं हरिरत्र निवेशितः । तत्र तु विश्वोपजीव्यत्वेन, ततो 'नारायणपरो ज्योति'रित्यादिना अनन्तादिरूपविश्वशम्भुव्यापकत्वेन, 'ततः पद्मकोशे'त्यादिनोक्तहृद्यकमलसुषिरान्तर्गताग्निशिखामध्यस्थपरमात्मत्वेन श्रावित इति तस्याः श्रुतेः पौराणक्रमेण बाधाभावाद् अनुपबृंहणत्वेन विसम्मतिरित्यर्थः । एतेनापेयदर्शितं रामानुजभाष्यास्वारस्यमपि परिहृतम् । तत्र 'प्रथमार्थे द्वितीये'त्यस्य प्रथमस्योपजीवतीति क्रियापदस्यार्थे इत्यपि व्याख्यातुं शक्यत्वात् । 'व्याप्य स्थित' इति सुबन्तक्रियापदोपेक्षया तस्य प्राथम्यात् । यत्तु प्रत्युद्देश्यं विधिपर्यवसानेऽनेकवाक्यत्वकल्पनस्यायुक्तत्वादित्युक्तं, तत्तु 'सर्वो वै रुद्रः पुरुषो वै रुद्रः सन्महः' इत्यादिष्वपि तुल्यम् । 'ऋतं सत्य'मिति मन्त्रेऽपि द्वितीयाया अर्थान्तरविपरिणामक्रियाध्याहारमन्तरेण व्याख्यानासिद्ध्या तस्यापि दोषतौल्यमित्यनर्थकस्तदाडम्बर इति बोध्यम् । शिवांशमिति । तत्र 'ब्रह्मविष्णुमहेशानैरुपास्यं गुणमूर्तिभि'रिति कथनान्मायोपाधिकांशमित्यर्थः । एवमेकत्रिंशस्य श्लोकस्यार्थो दूषितः ।

ऊनचत्वारिंशे श्लोके मन्वाद्यर्थो यस्तेन व्याकुलीकृतः सोऽग्रे पुराणतात्पर्यकथनोत्तरं प्रसाधनीयः । साम्प्रतं तत्रत्यश्रौतविषयव्याकुलतानिरासाय तावन्मात्रमुपक्षिपति यत्त्वित्यादि ।

पूर्वोक्तसद्योजातादिमूर्तिपञ्चककृता सर्वव्याप्तिः प्रदर्शिता। अत एव लैङ्गादिषु 'मूर्तयः पञ्च विख्याता' इत्यादिना सद्योजातादिमूर्तिपञ्चकं विधाय, तेषां क्षेत्रज्ञप्रधानमहदहङ्कारमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थवियदादिपञ्चभूततन्मात्रातत्कार्यभूतपञ्चकाधिष्ठातृत्वप्रतिपादनेन विशेषतश्च तस्य सर्वभूतव्याप्तिः प्रतिपादितेति;

तन्न। तत्रोपनिषदि 'न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मे'तिहिरण्यगर्भप्राप्तिसाधनं संन्यासं प्रस्तुत्य, तत्प्राप्यस्य हिरण्यगर्भस्य स्वरूपं 'ब्रह्मा विश्वः कतमः स्वयम्भू'रित्यादिना कथयन् 'य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मे'त्यनेनादित्यान्तर्गतस्य तदात्मकत्वमुक्त्वा, तदुपकारद्वारा च तं प्रशस्याह 'स वा एष पुरुष' इत्यादि। एतस्य पञ्चधा पञ्चात्मकत्वं च भूतमात्राज्ञानेन्द्रियकर्मेन्द्रियप्राणभेदैः पञ्चविंशात्मकत्वेन 'भूतात्मा चेन्द्रियात्मा च प्राणात्मा च तथा भवान्। आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थित' इतिपुराणोक्तरीत्या च व्याख्यातं वेदभाष्य इति तथैवोपपद्यते, न तु लैङ्गाद्युक्तरूपेण। क्षेत्रज्ञादिकार्यभूतपञ्चकव्याप्तौ षोढा पञ्चात्मकत्वापत्तेः श्रुतिविरोधापातात् शिवप्रस्तावस्य पूर्वं निराकृतत्वाच्चेति। न च हिरण्यगर्भस्य जन्यत्वात्तत्रेदं कथमुपपद्यत इति शङ्क्यं, प्राज्ञवद्भगवद्गुणसाराभिप्रायेणोपपत्तेः। भगवांस्तु निरुपाधिरेवेत्युपपादितमेव प्रागतो न चोद्यावसरः।

यत्तु ज्ञानघनः शिवपञ्चाक्षरीसद्भावाच्छतरुद्रियस्य पावनत्ववदस्या अपि तत एव महोपनिषत्त्वमिति;

तन्न। अत्र 'ओमित्यात्मानं युञ्जीतैतद्वै महोपनिषदं देवानां गुह्य'मिति समाधिसाधनमोङ्कारं प्रशंसन्ति। महत्यो बह्वय उपनिषदः प्रतिपादिका यस्य परमात्मवाचकप्रणवस्येति भाष्यात्। युक्तं चैतत्, सन्निकृष्टपरामर्शित्वात्। द्रविडपाठे शैवपञ्चाक्षर्यभावेऽपि महोपनिषत्पदस्य दर्शनाच्चेतिदिक्।

---

दूषयति तन्नेत्यादि। तदुपकारद्वारेति। 'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षती'त्यादिनोक्ततत्कृतैहिकामुष्मिकादिफलदानरूपोपकारद्वारेत्यर्थः। पञ्चविंशात्मकत्वेनेति स्वमतम्। भूतात्मेत्यादिनोक्तं सायणभाष्यमतम्। ननु भाष्योक्तपुराणमताङ्गीकारे लैङ्गेन किमपराद्धमत आह न त्वित्यादि।

यच्च शिवतत्त्वविवेके अष्टाविंशे श्लोके 'अणोरणीया'नित्यादीनां शिवपरत्वमङ्गीकृत्योक्तं 'न च महोपनिषदि सर्वो वै रुद्र' इत्यारम्भात्सवितृमण्डलविद्याप्रकरणविच्छेदः शङ्कनीयः, असम्बन्धिपदनिचयव्यवधानादेर्विच्छेदकस्याभावादन्तरादित्यवर्तिनो हिरण्मयपुरुषस्योपासनार्थमपेक्षितरूपविशेषसमर्पणपरत्वेनैकवाक्यतासमर्थत्वा'दिति।

तत्रैवाणोरणीयानित्यनुवाकक्रमेण तु।
मूलरूपोपासनोक्ता तत आदित्यवर्णनम् ॥ १ ॥
तदर्थं त्रिभिरुक्ताग्रे त्रिभी रुद्रनमस्कृतिः ॥
विभूतित्वाय कथितेत्येतत्प्रागेव साधितम्॥ २ ॥
तथा च सिद्धे पूर्वेण रूपाकाङ्क्षासुपूरणे ॥
व्यवधानाद्यभावेऽपि तन्नेच्छत्युत्तरत्रयम् ॥ ३ ॥

तस्माच्छान्दोग्येऽपि 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्युपक्रम्य 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी'त्यादिनोक्तं भगवद्रूपमेव न तु शिवादिरूपमिति निश्चेयम्। 'तस्योदितनामे'त्याद्युक्तापहतपाप्मत्वादिधर्मैर्देवान्तरादौ व्यवच्छिन्ने पुण्डरीकाक्षत्वाक्षिछित्वाभ्यां 'आदित्योऽभूद्यदा हरि'रितिविष्णवाद्, 'ध्येयः सदा सवितृमण्डले'तिवह्निपुराणवाक्ये मकरकुण्डलादिलिङ्गकथनाच्च।

किञ्च, योगरूढशब्दावयवार्थकवाक्यादपि तदर्थलाभस्य पुरुषसूक्तविचारे प्रतिपादितत्वादक्षिछित्वस्योद्देश्यगतत्वेऽपि हविरार्त्यधिकरणवदिहानुपपत्त्यभावेनाविवक्षाबीजाभावाद् 'ऋतुषु पञ्चविधं सामोपासीत त एते सत्याः कामा अनृतापिधाना'इत्यादावृत्वादिगतपञ्चत्वबहुत्वयोरुद्देश्यगतत्वेऽपि विवक्षितत्वाङ्गी-

---

महोपनिषत्सम्बन्धिविषयत्वादेवाष्टाविंशश्लोकोक्तमत्र यच्चेत्यादिनोपक्षिप्य दूषयति तन्नेत्यादिकारिकात्रयेण। तदर्थमिति, तत्र मण्डले भगदुपासनार्थम्।

एवमादित्यमण्डले भगवन्तं ध्येयत्वेन बोधयित्वा, तदीयकल्पनान्तराणि दूषयितुं छान्दोग्यश्रुतिं'अन्तस्तद्धर्मोपदेशा'दित्यधिकरणञ्चात्र सङ्गमयन् सिद्धमाह। तस्मादित्यादि। यस्मान्महोपनिषदि नादित्यमण्डले रुद्रसम्बन्धस्तस्मादित्यर्थः। ननु पुण्डरीकाक्षत्वं न विष्णौ नियतं, वायुसंहितायां शिवमुपक्रम्य 'हिरण्यकेशः पद्माक्ष' इति कथनात्, लोकेऽपि लौकिकप्रयोगात्। श्रुतौ'कप्यासम्पुण्डरीक'मितिवाक्यदर्शनेन पुण्डरीकाक्षपदाभावादत्र तस्य लिङ्गत्वेन वक्तुमशक्यत्वाच्च। नाप्यक्षिछित्वस्य तथात्वं, यस्योभयं हविरार्तिमार्छे‌दित्यत्रैवात्रोद्देश्यगतत्वेनाविवक्षितत्वात्।

तृतीयलोचनमुकुलीभावे शिवस्यापि तथात्वाच्चेत्याशङ्क्यामाह किञ्चेत्यादि। अनु-

कारात्सिद्ध एवमर्थे प्राञ्जले ललाटलोचनमुकुलीभावकल्पनाक्लेशायोगाच्च पूर्वोक्त एवार्थ इति निश्चयः । एवं च कृच्छ्राङ्गादित्योपस्थानमन्त्रेषु सूर्यहृदयादौ च सर्वरूपत्वादिकथनमपि तमेवादायोपपन्नतरम् । तस्माद्ध्येयः सदेति वाक्यस्य विष्णुपूजां तदुपस्थानं कर्तव्यमित्येतत्परत्वकल्पनमन्तर्यामिणि शैवरूपोपदेशकल्पनं च भ्रान्तिमूलकमेव ।

यदपि ब्रह्मतर्कस्तवे हंसोपनिषद्वाक्यमुदाहृत्य हृदयस्थब्रह्मणो लिङ्गाकारत्वं सुषुप्तिलिङ्गाद्विभावितं,

तदपि फल्गु । तत्र हि पूर्वदले 'पुण्ये मति'रित्यादिना हृदयकमलावयवानामेवोपक्रान्तत्वाल्लिङ्गे सुषुप्तिरित्यत्रापि तदवयवीभूतनाडीविशेषस्यैव कर्णिकान्तःस्थस्य गृहीतुमुचितत्वात् । सुषुप्तेः साधारणत्वेन लिङ्गत्वाभावाच्च । 'तदभावो नाडीषु तच्छ्रुतेरात्मनि चे'ति सूत्रे सुषुप्तेर्नाडीष्वपि निरूपणात् । बृहदारण्यकश्रुतावपि 'तावा अस्यैता हिता नाम नाड्यः तद्वा अस्यै तदाप्तकाम'मिति

---

पपत्त्यभावेनेत्यादि, अनुपपत्त्यभावेन कृता याऽविवक्षा तद्बीजस्याभावादित्यर्थः । तत्र यथार्तिप्रतियोग्याकाङ्क्षाया हविःपदेन पूर्तावनुपपत्त्यभावो द्वित्वाविवक्षाबीजमेवमत्र न किञ्चिद्बीजम् । गुणश्रावणस्योपास्यरूपपरिच्छेदार्थं विवक्षितत्वादितिभावः । सूर्यहृदयं कौर्मोक्तं स्तोत्रम् । आदिपदेन कौर्मस्थानि दधीचवाक्यानि । सर्वरूपत्वादित्यादिपदेन रुद्रहर्यादिपदप्रयोगः । तमिति, सूर्यस्य शिवस्य चान्तर्यामिणम् । तस्मादिति, छान्दोग्यमहोपनिषद्भ्यामादित्यान्तर्गतपुरुषरूपनिष्कर्षात् । तदुपस्थानमिति, सवितृमण्डलस्य हृदयादिवत्सकलदेवतोपासनस्थानतया तत्र विष्णूपस्थानमित्यर्थः ।

अन्तर्यामिप्रसङ्गात् स्मृतं तदीयग्रन्थान्तरोक्तं दूषयितुमुपक्षिपति, यदपीत्यादि । हंसोपनिषद्वाक्यमिति । 'एषोऽसौ परमहंसः भानुकोटिप्रतीकाशो येनेदं व्याप्तं, तस्याष्टधा वृत्तिर्भवति, पूर्वदले पुण्ये मतिः आग्नेये निद्रालस्यादयो भवन्ति, याम्ये क्रौर्ये मतिः, निर्ऋते पापे मनीषा, वारुण्यां क्रीडा, वायव्ये गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः, ऐशाने द्रव्यादानं, मध्ये वैराग्यं, केसरे जाग्रदवस्था, कर्णिकायां स्वप्नं, लिङ्गे सुषुप्तिः, पद्मत्यागे तुरीयं, यदा हंसो नादे विलीनो भवति तत्तुरीयातीत'मितिवाक्यम् । अत्र एष इत्यनेन हंसनामाजीवः । असावित्यादिना तस्य परमहंसाख्यपरमात्माऽभेदं बोधयित्वा, तस्याष्टधेत्यादिना हृदयकमलावयवविशेषेषु स्थितावस्था उच्यन्ते ।

तदेतदभिसन्धाय दूषयति तदपीत्यादि । तदभाव इति । इदमधिकरणं साधनाध्यायद्वितीयपादेऽस्ति । नाडीरनुक्रम्य श्रूयते, 'तासु तदा भवति यदा सुप्तः स्वप्नं न

भेदेन निरूपणात्सुषुप्तेरुभयसाधारण्यावसायात् । सुषुप्त्युत्तरकालीने स्मरणेऽपि सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति द्वैविध्यानुव्यवसायाच्चेति दिक् ।

तस्मात्परस्वरूपेण तिष्ठन्नादित्यमण्डले ॥
अन्तर्नियच्छतीत्येवं पुराणश्रुतिनिर्णयः ॥ १ ॥
यत्तु कृष्णे दशास्यादिहन्तृत्वव्यपदेशवत् ॥
तादृशां वेदवचसां युक्तं तात्पर्यवर्णनम् ॥ २ ॥
इत्युक्तं तन्न रुचिरं वामदेवपदेन हि ॥
शास्त्रदृष्ट्याऽभेददृष्ट्या चोक्तेर्महिमतद्वतोः ॥ ३ ॥
शिवो हि महिमासिद्धोऽग्रेऽप्येवं साधयिष्यते ॥

कश्चन पश्यति अथास्मिन्प्राण एवैकधा भवति, तथा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं कश्चन वेदनान्तर'मिति । तत्र सुषुप्तौ प्रपञ्चो विद्यते न वेति संशयः । तत्र 'य एष सुप्तेषु जागर्ति कामङ्कामं पुरुषो निर्मिमाण' इति श्रुत्या अस्ति, परन्तु दर्शनं तस्य नास्तीति पूर्वपक्षे, तदभावः प्रपञ्चाभावः नाडीषु, आत्मनि च, यदा जीवो नाडीष्वात्मनि वायाति तदा प्रपञ्चो न क्रियते । तत्र हेतुः तच्छ्रुतेः । ' तद्वा अस्यैतदात्मकाममाप्तकाममकामँ रूपमिति ' सुषुप्त्यवस्थायां कामाभावश्रुतेः । कामनया हि प्रपञ्चस्तदभावे च तदभाव इति । सूत्रे चकारात्सुषुप्तिर्द्विधा सूचिता । हृदये जीवः, हृदयान्तर्ब्रह्म, हृदयस्य बहिर्नाड्यः, केवलस्यान्तर्बहिर्गतिभ्यां सुषुप्तिद्वैविध्यं दिङ्मात्रेण दर्शितम् । मायावादिभिः ' प्रासादे शेते पर्यङ्के शेत ' इति दृष्टान्तेन ब्रह्मण्येव जीवसुषुप्तिरङ्गीकृता, सा तु अणूपाध्यवच्छिन्नस्य नाडीष्विति बहुवचनाद्विरुध्यते । सौत्रश्चकारश्च व्यर्थस्तन्मते भवति । विशेषदूषणं भाष्यादवधेयम् । तदेतदाह दिगिति ।

प्रस्तुतमनुसरन् 'रविमध्यस्थितः सोम' इतिश्रुतिं तादृशं योगिवाक्यं पूर्वोपपादितञ्चानुसन्धाय 'आदित्यमण्डले शैवमधितिष्ठन् वपुः परः । अन्तर्नियच्छतीत्येष निर्णयो निरवग्रह'इति तदुक्तन्दूषयति तस्मादिति । पुरःस्फूर्तिकविचारे शिवप्रतीतावपि तदन्तर्भगवत एव स्थितत्वात् । छान्दोग्यादिभिर्भगवद्रूपस्यैव च निर्णयादित्यर्थः ।

अत इत्यादिकां द्वितीयकारिकामनुवदति यत्त्वित्यादि । यदा भगवति रावणान्तकरत्वादित्यपदेशोऽवतारावतारिणोरभेदोपचारेण तथा विष्णोः शिवाभेदेनान्तर्यामित्वबोधकानां तात्पर्यवर्णनं युक्तमित्यर्थः ।

दूषयति तन्नेत्यादि । 'तदेतदृषिःपश्यन् वामदेवः प्रतिपेदे मनुरभवमहं सूर्यश्चे'ति श्रुत्या वामदेवपदेन शास्त्रदृष्ट्या शिवसार्वात्म्योक्तेः 'अणोरणीया'नित्यनुवाके महिमतद्वतोरीशपरपरात्मनोरभेददृष्ट्यानेकविधसामर्थ्योक्तेश्च हेतोः शिवस्य ज्ञानित्वेन च वैपरीत्यात्तथेत्यर्थः ।

तदेवस्मारयति शिवो हीत्यादि, मैत्रायणीयनृसिंहपूर्वतापनीयाथर्वशिरःशिखामहो

अतो ये शुकगाङ्गेयप्रमुखैर्विदुषां वरैः ॥ ४ ॥
उक्ता धर्माश्च लीलाश्च ते सर्वे उपसंहृताः ॥
कृष्णे गुणोपसंहारो यत आचार्यसम्मतः ॥ ५ ॥

अतः प्रबलप्रमाणानुरोधाद्भगवानेवान्तर्यामीति निश्चयेऽन्तर्यामिब्राह्मणादेरपि तत्रैव पर्यवसानं निश्श्रेयम्। 'केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्। चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ती'तिद्वितीयस्कन्धसन्दर्भाच्च। 'येनैष भूतस्तिष्ठत्यन्तरात्मे'ति महोपनिषच्छ्रुतेश्च। एतेनैव मन्त्रोपनिषदुक्तसर्वान्तर्यामित्वमपि व्याख्यातम्। अन्यत्रापि तथा। रुद्रोपनिषदाद्युक्तः सर्ववस्तुषु रुद्रसद्भावोऽहङ्काराधिष्ठानादेवोपपन्नो नान्तर्यामित्वसमर्थनायालम्।

यत्तु 'अमृतस्य वा एतानि नामधेयानी'ति जाबालश्रुतिप्रयोगदर्शनेन निरुपपदामृतपदेनैवान्तर्यामिब्राह्मणस्य शिवपरत्वमिति कस्यचिन्मतमुक्तं,

तत्तुच्छम्। तत्रामृतमुद्दिश्य शतरुद्रियस्य तन्नामधेयत्वविधानदर्शनेनामृतपदे रुद्रनामत्वासिद्धेरमृतपदेनान्तर्यामिब्राह्मणस्य शिवपरताया दूरतरापास्तत्वात्।

यत्तूनत्रिंशे श्लोके 'शैवीषु पृथिव्यप्तेजोवायुव्योमसूर्यसोमात्माख्यास्त्वष्टमूर्तिष्वन्तर्यामिब्राह्मणोक्तभूतविकारात्मकशरीराणां भूतेष्वन्तर्भावादन्येषां चोक्तत्वादष्टमूर्तिपरवाक्यैरेव शिवस्यान्तर्यामित्वसिद्धिः। न चाष्टसु मायाया अग्रहणाद्विरोधः शङ्क्यः, 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।

---

पनिषद्वाक्यैः शिवो महिमाविभूतिः सिद्धः। अग्रेऽपि महोपनिषदादिवाक्यैः पुराणवाक्यैश्च साधयिष्यते। गोपालतापनीयगीताश्रीमद्भागवतादिवाक्यैश्च कृष्णस्वरूपस्य मूलरूपत्वञ्च साधयिष्यते। तदुभयमेवम्पदेन सङ्गृहीतम्। सिद्धमाह अत इत्यादि। प्रबलप्रमाणं लिङ्गं, श्रुतेराभासरूपत्वसाधारण्याभ्यां नैर्बल्यात्, शिष्टाकोपोदितन्यायेन प्रबलप्रमेयाश्रितत्वेन च प्रमाणप्राबल्यं बोध्यम्।

श्रूयन्तेऽपि हि शिवस्याशेषाधिष्ठानप्रतिपादनपरा मन्त्रा मन्त्रोऽपनिषदि 'यो योनिं योनिमधितिष्ठत्येकं' इत्यादयः, महोपनिषदि च 'यो रुद्रोऽग्नौ योऽप्सु य औषधि'ष्वित्यादयः। रुद्रोपनिषदि च 'नमो भवाये'त्याद्यनुवाकपञ्चक इति तेनोक्तम्। तस्य गतिमाह एतेनेत्यादि।

केचित्त्वित्यादिना यदनेन ज्ञानघनमतमुपक्षिप्तं तदनुवदति यत्त्वित्यादि।

दूषयति तत्तुच्छमित्यादि। एवमष्टाविंशश्लोकार्थो दूषितः।

अतः परमूनत्रिंशार्थन्दूषयितुन्तत्कारिकोक्तमर्थं फक्किकाभिरुपक्षिपति यत्त्वित्यादि।

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायये'तिगीतास्मृतौ तस्याः करणत्वेन निवेशे-नावैकल्प्याद् अत एव कालाद्यग्रहेऽप्यदोषः, 'आत्मा तस्याष्टमी मूर्तिः शिवस्य परमा तनुः।व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकमिति शैवे वायुवाक्यात्स-र्वस्मिन्सङ्गृहीतेऽवशिष्टस्याभावात् । न च 'भूम्यम्भोऽग्निमरुद्व्योमभास्करादीक्षि-तः शशी'तिलैङ्गे आत्मस्थाने दीक्षितनिवेशाच्छ्रौतस्मार्तपदस्य दीक्षित उपसंहा-रान्नैवमिति शङ्क्यं, 'विश्वं तस्माच्छिवात्मक'मित्यस्य 'वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा । शिवस्य पूजया तद्वत्पुष्यत्यस्य वपुर्जग'दित्यादिवाक्यानां च बाधापत्तेः । अस्पष्टस्य सामान्यविधेर्विशेषेणोपसंहारदर्शनात्स्पष्टेऽस्मिंस्तद-योगाच्च । दीक्षितकथनस्य लोकोपकारातिशयज्ञापनार्थत्वस्य लैङ्गे प्रपञ्चना-दात्मा तस्याष्टमी मूर्तिः सर्वभूतशरीरग' इति तदन्त उपसंहारदर्शनाच्च । अत इत्थं विश्वमूर्तेरेवाष्टमूर्तित्वकथनात्पूर्वोक्तमप्रत्यूहम् ।

यद्वा, 'वैश्वानरं द्वादशकपाले यदष्टादशपालो भवति गायत्रियैवैनम्ब्रह्म-वर्चसेन पुनाती'तिस्तुत्यर्थोऽष्टतावयुत्यानुवादस्तथात्र सर्वमूर्तिष्वष्टानां कथन-मिति कल्प्यम् । अर्चनार्थं नामभेदविधानाय वा । एकादशप्राणेषु सप्तप्राणकथ-नवद्ध्यानार्थं वेति कल्प्यम् । यथापञ्चाग्निविद्यायां वाजसनेयिनां षष्ठोऽप्यग्निः केनचिद्विशेषेणोच्यते, यथा च षट्त्रिंशदहःसाध्येऽपि यागे प्रधानभूतसौत्यानां द्वादशत्वाद्द्वादशाहत्वं, तथाष्टानां सर्वेषु प्रवेशादष्टमूर्तित्वमिति वा । 'पृथिव्यां तिष्ठति विभुः पृथिवी वेत्ति नैव तं, रूपञ्च पृथिवी यस्य तस्मै भूम्यात्मने नम'

---

कालादीत्यादिपदे योगः । दीक्षित उपसंहारादिति । यथा षष्ठस्याष्टमे'पशुचोदनायाम-नियमोऽविशेषा'दित्यत्र अग्निषोमीयपशुचोदनायां किं यः कश्चिदालब्धव्य उत छागस्य वपाया मेदसोऽनुब्रूही'ति मन्त्रवर्णाच्छाग' इति संशये पशुत्वस्याङ्गताबोधनमात्रेण चोदनायाः कृतार्थ-त्वात्पशुत्वस्य प्रतिव्यक्तिपर्यवसितत्वाच्छागे तात्पर्यवसानं मन्त्रेण निष्कृष्यते । अनेन छाग-पशुन्यायेन तथेत्यर्थः । स्पष्ट इति, 'विश्वं तस्माच्छिवात्मक'मित्यादिवाक्यैः स्पष्टे इत्यर्थः । तदन्त इति, लोकोपकारप्रपञ्चनान्ते ।

अवयुत्यानुवाद इति । अवयुत्य कापालद्वादशसङ्ख्यात अष्टतां पृथक्कृत्यानुवादः । तथेति स्तुत्यर्थम् । केनचिद्विशेषेणेति, पञ्चाग्निविद्या छान्दोग्ये वाजसनेयके च वर्तते । तत्र पञ्चाग्नयः सम्पादिकाः, 'असौ लोकः पर्जन्योऽयं लोकः पुरुषो योषे'ति उभयत्र समानाः । 'वाजसनेयिनां षष्ठोऽग्निर'पि पठ्यते । 'स च वैपदिक' इति छान्दोग्ये पठ्यते, तेन । तथा च षष्ठेऽप्यग्नावुच्यमानेऽपि पञ्चाग्निविद्योच्यते तथाऽष्टमूर्तित्वेऽपि, विश्वमूर्तित्वस्य न निषेध इत्यर्थः ।

इत्यादित्यपुराणादावष्टमूर्तिकथनेऽन्तर्यामिब्राह्मणप्रत्यभिज्ञानस्यापोदितुमशक्यत्वादित्युक्तं;

तदप्यप्रयोजकम्। पूर्वोक्तश्रुतिपुराणैर्भगवत एव तादृग्रूपस्य मुख्यत्वेऽन्तर्यामित्वे च सिद्धे कल्पनाक्लेशमपि सोढ्वाऽष्टमूर्तिपरवाक्यैः शिवेऽन्तर्यामित्वसाधनस्य व्यधिकरणत्वात्। पृथिव्यबग्न्याकाशवाय्वादित्यचन्द्रतारकदिग्विद्युत्स्तनयित्नुसर्वलोकसर्ववेदसर्वयज्ञसर्वभूतप्राणवाक्चक्षुःश्रोत्रमनस्त्वक्तेजस्तमोरेत आत्मनां चतुर्विंशतीनामन्तर्यामिब्राह्मणे तनुत्वकथनाद्, भूतविकाराणां भूतैरेवोपसङ्ग्रहे पुनस्तदुक्तेरानर्थक्यापाताद्, 'आत्मा तस्याष्टमी'ति शैववाक्ये आत्मनः परमतनुत्वकथनान्मानवपुराणे च 'ज्ञात्वा तं मृत्युमत्येति प्रत्यगात्मतयैव त्वि'त्यवधारणाच्च। प्रत्यगात्मतयाभिमानित्वेन सिद्धस्यान्तर्यामित्वायोगाच्च। 'वृक्षस्य मूले'ति वाक्ये तु शिवपूजादिना जगत्पोषादिकथनेनापि जगदभिमानिताद्ढीकाराच्च। अन्तर्यामिणोऽनभिमानित्वस्य 'भेदव्यपदेशाच्चान्ये'इति सूत्रसिद्धत्वेन तद्वैलक्षण्याच्च। एवं सिद्धे भेदे प्रत्यभिज्ञायाः साजात्येनाप्युपपत्तेश्च

---

दूषयति, तदपीत्यादि। तादृग्रूपस्येति, अक्षिद्वयशङ्खचक्रादिविशिष्टस्य। ननु शैवादिवाक्यानान्तर्हि का गतिरित्यत आह आत्मेत्यादि। साजात्येनेति, कतिपयशब्दमात्रतौल्येन अन्तरत्वान्तर्यामित्वयोरत्राकथनात्तथेतिभावः। भारते मोक्षधर्मे 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव त्वि'ति जनमेजयप्रश्ने 'बहवः पुरुषा राजन् सांख्ययोगविचारिणाम्। नैनमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह। बहूनां पुरुषाणां च तथैका योनिरिष्यत' इति परमतमुक्त्वा 'तमहं पुरुषं विश्वं व्याख्यास्यामि गुणाधिक'मिति प्रतिज्ञाय, 'इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव। ऋतं सत्यं च विख्यातं ऋषिसिंहेन भाषित'मित्यनेन पुरुषसूक्तप्रतिपाद्य एकः पुरुष इति सूचयित्वा, ततो ब्रह्मशिवसंवादमुपक्षिप्य, 'बहवः पुरुषास्त्वया सृष्टा अत ईदृशः 'कोऽयं भवान् चिन्तयसी'ति रुद्रप्रश्ने, 'शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः। अक्षयश्चाप्रमेयश्च सर्वगश्च निरूप्यते' इतिप्रतिज्ञाय ततो 'ममान्तरात्मा तव च ये चान्ये देहसञ्ज्ञिताः। सर्वेषु साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचि'दित्यादिना सर्वतःपाणिपादान्तत्वरूपं महिमानं तस्य वदन् 'तस्यैकत्वं महत्त्वं च स चैकः पुरुषः स्मृतः। महापुरुषशब्दं स बिभर्त्येकः सनातन' इत्याद्युक्त्वा परमात्मत्वञ्चोक्त्वा तत्र यः 'परमात्मा हि स नित्यं निर्गुणः स्मृतः। स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि स' इत्याद्युक्तवान्। तेनाऽप्यन्तर्यामित्वं तत्रैव पर्यवस्यति। नचैक आत्मनि पृष्ट अन्तर्यामित्वकथनमपृष्टोत्तररूपमितिवाच्यम्, एतदग्रे 'कर्मात्मा त्वपरो योऽसौ बन्धमोक्षैः स युज्यत'इत्यादिना कर्मात्मनोऽपरस्य बहुविधत्वं वदतः 'स यश्चायं पुरुषे यश्चासावादित्ये स एक'इत्यादिश्रुत्युक्तमैकात्म्यं तदुत्तरत्वेन कथयतोऽन्तर्यामित्वस्यार्थसि-

तस्मा'दात्मानमेवाग्रे रुद्रं सम्पूज्य याम्यह'मिति मोक्षधर्मीयभगवद्वाक्यस्य 'अहमप्यवतारेषु त्वां च रुद्र महाबल । तमोवतां विमोहाय पूजयामि युगे युगे' इति वाराहाद्युक्तमोहनार्थत्वेनाबाधकत्वात् । 'सृष्ट्वानुप्राविशत्तेषामन्तर्यामितया हर' इति स्कान्दस्यापि हरपदमात्रेण भ्रमजनकत्वेनाबाधकत्वात् । 'सोऽन्तरादन्तर'मित्यादेरन्यथार्थकथनं द्वयोरपि दूरापास्तं ज्ञेयम् ।

अथर्वशिरस्थो 'भगवा'निति शब्दस्तु भगश्चासौ वांश्चेत्येवं तत्र निरुक्त इति न तत्र भगवच्छब्द इति दिक् ।

कैवल्योपनिषत्तु पूर्वमेवविचारितेति न पुनर्विचार्यते। तथा महोपनिषदपि महानारायणोपनिषदिव बोध्या।

अतो नारायणानुवाकप्रक्रियाप्रत्यभिज्ञानादप्युपास्यविभूतिषु परशिवो विशतीति नात्र मुख्यत्वेन तदुपासनाया गन्धोऽपि । 'तत्र एको ह वै नारायण आसीन्न ब्रह्मा न ईशान' इत्यादिना ब्रह्मेशानाग्नीषोमद्यावापृथिवीनक्षत्रसूर्यसत्तां निषिध्य, नारायणस्य 'स एकाकी नर एवे'त्येकाकिनरत्वमनूद्य, ततो दशेन्द्रियमनस्तेजोहङ्कारप्राणात्मबुद्धीनां मात्राणां भूतानां जननं तत्सङ्घात-

द्रस्यादण्डवारितत्वात् । यत्तु 'सवा एष पुरुषोऽन्तरमय' इति श्रुतौ पुरुषशब्दाभिलाप्यशरीराणां यथा पृथिव्येका योनिस्तथा सर्वजीवभावेन वर्तमान अत्रोच्यत इत्युक्तं, तदप्येतेनैव निरस्तम् । मोक्षधर्मीयस्कान्दयोर्गतिमाह तस्मादित्यादि । ननु 'सोऽन्तरादन्तर'मित्याद्यथर्वशिरोवाक्येनान्तर्यामित्वं सिध्यतीत्याशङ्कायामाह सोऽन्तरेत्यादि । अस्य वाक्यस्यार्थो य स्थूलरूपत्यागपूर्वकसर्वान्तरसर्वरहस्यप्रवेशरूपस्त्वयोक्तः स मयापि तत्रोरीकृतः, परन्तु तेन प्रवेष्टुः प्रवेष्टव्याद्भेद एव सिध्यतीति नान्तरत्वसिद्धिरिति तथाकथनं वादिप्रतिवादिनोर्दूरापास्तमित्यर्थः ।

भगवच्छब्दस्य पूज्यमात्रसाधारणत्वं यदुक्तं तत्र विशेषस्य हानिं द्योतयति अथर्वेत्यादि।

एवमेकोनत्रिंशश्लोकार्थो दूषितः । त्रिंशार्थस्तु त्रयोदशश्लोकार्थदूषणे प्रसङ्गात्तत्रैव दूषित इति स्मारयन्नाह कैवल्येति । एकत्रिंशद्द्वात्रिंशार्थोऽपि महानारायणोपनिषद्विचारे दूषित इति त्रयस्त्रिंशस्यार्थं दूषयिष्यन्विशेषतः संरम्भाभावे हेतुमाह तथा महेत्यादि ।

उपास्यविभूतिष्वित्यादि । 'तस्यै शिखायै मध्ये पुरुषः परमात्मा व्यवस्थितः स ब्रह्मा स ईशानः सोऽक्षरः परमः स्वराडि'दिति मन्त्रदर्शनात्तथेत्यर्थः । एतद्बोधनार्थं हेतुकथनमुखेन तदर्थं सङ्गृह्याह तत्रेत्यादि । एवं हेतुद्वयेन तस्याः समस्ताया एव भगवत्परत्वबोधनाद्रुद्रपरतया नयनं निरस्तम् । उक्तमुपनिषदर्थं पुराणेनोपबृंहयति इदमित्यादि । भगवच्छब्दस्य वासुदेव एव प्रभावनौपचारिकत्वादेतस्य नारायणैकतानत्वं शास्त्रप्रकृतत्वान्मैत्रेयोक्तेः पराशरोक्तविष्णुपुराणोक्तानुवादरूपत्वाच्च ।

वतो हिरण्यगर्भस्याधिकारदानं, ततो ध्यानान्तरेण ललाटाच्छिवोत्पत्तिं ततो ललाटात्स्वेदपातस्याप्त्वं तास्वण्डं तस्मिन्ब्रह्मोत्पत्तिं तस्माद्वेदानां चोक्त्वाग्रे नारायणोपनिषद्वदेव हृदयपद्मे तस्य स्थितेरुक्तत्वात् । 'य इदं महोपनिषदं ब्राह्मणोऽधीत'इत्यादिना पाठफलनिरूपणे रुद्राणां शतसहस्राणि जप्तानि भवन्तीति रुद्रमन्त्रेभ्य आधिक्यबोधनाच्च । इदमुपबृंहितं तृतीयस्कन्धे मैत्रेयेण; 'भगवानेक आसेदमग्र आत्मात्मनां विभुः । स वा एष तदा द्रष्टा नापश्यद् दृश्यमेकराट् । सा वा एतस्य सन्द्रष्टुः शक्तिः सदसदात्मिका । मायानाम महाबाहो ययेदं निर्ममे विभुः । कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् । ततो भवन्महत्तत्त्वमव्यक्तात्कालचोदितात् । विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः । महत्तत्त्वाद्विकुर्वाणादहन्तत्त्वं व्यजायत । अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् । तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च । तामसो भूतसूक्ष्मादि'रित्यादिनाध्यायद्वयेन । अत्र आद्यश्लोकेन 'एको ह वा'इत्यादि 'एकाकी नर' एवेत्यन्तस्यार्थ उक्तः द्वितीयेन तस्य ध्यानान्तःस्थस्य 'यन्न स्तोममुच्यत' इत्यस्य, तृतीयादिभिः 'तस्मिन्पुरुषाश्चतुर्दश जायन्ते'त्यादेः । नस्तोमो नसो नासिकायाः प्राणानां स्तोमः समूहो यस्मिँस्तन्नस्तोमं, माया सर्वोपादानयोग्या भगवत्सामर्थ्यरूपा । श्रुतौ पाठक्रमस्त्वविवक्षितः । श्रुतौ बुद्धिं प्राणसमूहरूपमात्मानं चान्तर्भाव्य पञ्चविंशको गणः, अत्र तु करणकोटौ निक्षिप्य त्रयोविंशतिको गणः । श्रुतौ हिरण्यगर्भात्सृष्टिविलम्ब उक्तः । सोऽत्र, 'एते देवाः कला विष्णोः कालमायांशलिङ्गिनः । नानात्वात्स्वक्रियानीशा' इत्यनेन व्याख्यातः । श्रुतौ शिवोत्पत्तिरबुत्पत्तिस्तस्मिन्नण्डं तत्र ब्रह्मा तेन वेदादिसृष्टिः । इह भगवत्प्रवेशेन तत्त्वेभ्योऽण्डमुत्पन्नमप्सूवासे'त्युक्तं, तेनाबुत्पत्तिः सिद्धा, ताश्च न भूतान्तर्गताः, भूतानामण्डान्तर्व्याप्तत्वात् । 'आत्मानं चास्य निर्भिन्नमभिमानोऽविशत्पद'मित्यभिमानो देवरूपः । 'एते देवा'इत्युक्तत्वात् । सच रुद्र एव । 'रुद्रोभिमत्या हृदय'मितिसमानप्रकरणीयवाक्यात् । शेषं तु समानमितीदमेवोपबृंहणं बोध्यम् ।

---

ननु पञ्चाशत्तमे श्लोके केषाञ्चिन्मतमुपन्यस्तं तत्रोपबृंहणान्तरमानवमुपदर्शितम् । 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् अप्रतर्क्यमनिर्देश्यम्प्रसुप्तमिव सर्वतः । ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूता वृत्तौजाः प्रादुरासीत्तमोनुदः । सोऽसावतीन्द्रियो ग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ । सोऽभिध्यायन् शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभ-

किञ्च, यदेतदुपबृंहणत्वेनोपन्यस्तं 'आसीदिदं तमोभूत'मित्यादिमनुवचनजातं, तदसङ्गतमेव। अत्र पूर्वं तमःसत्ता, ततो महदादिव्यञ्जकस्वयम्भूप्रादुर्भावस्ततोऽभिध्यानेन पूर्वमपां सर्गस्तासु वीर्यपातेनाण्डस्य, तस्मिन् ब्रह्मणस्तस्यावयवत्वेन नारायणत्वमितियोगस्य कथनान्महोपनिषदि तु पूर्वं नारायणस्यैव सत्तामुक्त्वा, तेन परस्मिँस्तस्य रूढत्वं गमयित्वा, ब्रह्मेशानादीन्निषिध्य, नारायणस्यैकाकित्वनरत्वयोः कथनेन रूढेरेव दृढीकरणात्। ततो दशेन्द्रियादिक्रमेण पञ्चविंशतितत्त्वोत्पत्तिं तत्त्वसङ्घस्य पञ्चविंशकहिरण्यगर्भात्मकपुरुषत्वं तस्याधिकारदानं ततः सृष्टिविलम्बं च प्रथमखण्ड उक्त्वा, द्वितीये कामान्तरेण ध्याने शिवोत्पत्तिस्ततस्तृतीये ललाटस्वेदादबुत्पत्तिस्तासु पूर्वसृष्टतेजसो ब्रह्माण्डत्वं तस्मिन्ब्रह्मण उत्पत्तिस्तस्माद्वेदादिसृष्टिरितिक्रमकथनेनाण्डाभिमानिनि पञ्चविंशके हिरण्यगर्भेऽबयनत्वप्रयुक्तनारायणपदयोगसूचनादुभयोर्वैलक्षण्यात्। अतो मूर्खप्रतारणायैवेदमिति तदनुसारेण तदर्थपरिवर्तनेन च यत्तन्मतदूषणं तदपि यक्षबलिपदव्यामेव पदं धत्ते।

यत्तु, अस्तेरुत्पत्त्यवस्थान्तर्गतसत्ताख्यद्वितीयभावविकारवाचित्वेन मीमांसकैर्व्यवस्थापना'ल्लोहितो रोहितादासीद्बन्धुस्तस्याभवत्सुत'इत्यादिप्रयोगदर्शनाच्च 'एको ह वै नारायण आसी'दितिवाक्यं ब्रह्मेशानाद्युत्पत्तेः पूर्वं सर्गाद्यसमये नारायणस्यैकाकिनः परशिवात्प्रादुर्भावपरमिति तत्र सकलजगन्मूलकन्दत्वकथनस्य न कश्चिद्विरोध इत्युक्तं,

तत्प्रज्ञाचक्षुष्ट्वादेवेति जानीमः। 'सदेव सौम्येदमग्र आसीद्ब्रह्म वा इदमग्र आसीत्, आत्मैवेदमग्र आसी'दित्यादावपि तथावक्तुंशक्यतया ब्रह्मनित्यताया अपि दत्ततिलाञ्जलित्वापातात्। अथर्वशिरसि 'अहमेकः प्रथममासीद्वर्तामि च भविष्यामि चे'ति रुद्रवाक्येऽप्येवमर्थसिद्धेरुपपन्नतरत्वाच्च। ईशानशब्दस्य तत्र

---

वद्धैमं सहस्रांशुसमप्रभम्। तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं प्रोक्तं तेन नारायणः स्मृतः।' इति तत्कुतो नाद्रियत इत्याकाङ्क्षायामाह किञ्चेत्यादि। असङ्गतमिति, उपबृंहणत्वेनासङ्गतमित्यर्थः। असङ्गतिमेव व्युत्पादयति अत्रेत्यादि। तथा च हेतुत्रयेण परस्परं वैलक्षण्यान्मूलमूलिभावस्याऽशक्यवचनतया उपबृंहणत्वासङ्गतिरित्यर्थः। तत्प्रयासवैयर्थ्यमाह अत इत्यादि।

ननूपबृंहणमात्रे भेदेऽपि श्रुतौ प्रकारान्तरेण परशिवपरत्वं लभ्यत इत्याशयकं तन्मतमुपक्षिपति यत्त्वित्यादि।

दूषयति। तत्प्रज्ञेत्यादि।

तत्र परशिवे भवता योगरूढताया एव निर्णीतत्वादिहापि 'न ईशान'इत्यनेन तस्यैवोपस्थितेः सुवचत्वाच्च ।

न च सूतसंहितायां 'तप्तायःपिण्डवद्विप्रा रुद्रमूर्तिः परस्य तु । मूर्त्या तुल्यान्यमूर्तिभ्यो लक्षणैर्मुनिसत्तमाः ! परतत्त्वस्य नामानि प्रत्यासत्त्या मुनीश्वराः । त्रिमूर्तीनां तु रुद्रस्याप्यभिधानानि सुव्रत !' इति कथनादिह गुणिपरत्वस्य शक्यवचनत्वान्न दोष इति वाच्यम् । तथासति श्रुतीनां सन्दिग्धत्वात्सर्वत्र लिङ्गादिभिरेव ब्रह्मनिर्णयसिद्ध्या त्रिचत्वारिंशश्लोके भवदुपदर्शितयोगरूढ्या निर्णयस्य पितृतीर्थेन दीयतान्तिलाञ्जलित्रयम् । तथा पूर्वतन्त्रानुसरणस्यापि ।

किञ्चास्तां वैष्णवमतज्ञानवार्ता भवतो दूरवर्तिनी । भवतापि तुरीयकोटावभ्युपगम्यमानस्य नारायणस्य परशिवादुत्पत्तिः कस्यां श्रुतौ कण्ठरवेणोदिता प्रदर्शिता ? श्रुतौ परशिवशब्दश्चेत्युच्यताम् । नह्यथर्वशिरःशिखयोः । एकत्रादर्शनादपरत्र प्रायपाठेन गुणमूर्त्यनतिरेकस्य भवताभ्युपगमात् । नापि 'सोमः पवते' इति मन्त्रे । तत्र हि'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्ने जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णो'रिति सोमो लतात्मा मत्यादीनां विष्णवन्तानां सम्बन्धी जनिता लुडन्तः जनिष्यतेऽतः पवत इत्यर्थात् ।

यत्तु ज्ञानघनः—'उमया सह वर्तत इति सोमो महेश्वरः, तत्र मुख्यवृत्त्या वर्तमानोऽयं शब्दो गौण्या लतायां प्रविष्ट एतावदन्वयबलादेताञ्जनयतीति स्तूयत इत्याह,

तदप्यपास्तम् । तृज्ज्ञापकाभावात् । तृजाग्रहेऽपि प्रायपाठबलाद्देवताविशेषजनकत्वेनापि स्तुतिसिद्धेः । शिखातुल्ययोगक्षेमत्वात् । नापि मन्त्रोपनिषदादौ; अदर्शनात् । परशिवोत्पत्तिस्तु शिखायामिन्द्रशब्देनोक्ता । अत्र च 'न ईशान' इति पूर्वमीशानासत्त्वमुक्त्वा, ततो नारायणात् 'त्र्यक्षः शूलपाणिः पुरुषोऽजायते'त्यादिनोच्यते । अत्र यद्यपि 'बिभ्रच्छ्रिय'मित्युक्तं, तथापि विप्रतिषिद्धसमवाये भूयसां स्यात्स्वधर्मत्वमित्यथर्वशिखाविचारे भवदुपदर्शितेनैव न्यायेनोपक्रमानुग्रहादसञ्जातविरोधत्वेन स्वतःप्राबल्याच्च पर-

---

दूरवर्तिनीति, तुरीयाद्यःपरः साकारो विरुद्धधर्माश्रये निरुपाधिः, स त्वया न ज्ञायतेऽतस्तथेत्यर्थान्न त्वया विवदाम इत्यर्थः । तर्हि क्व विवाद इत्यतस्तन्मतेऽनुपपत्तिं दर्शयन्ननुयुनक्ति भवतेत्यादि । तर्हि परशिवोत्पत्तिः कुत्र कण्ठत उक्तेत्यनुयोग उत्तरमाह परशिवेत्यादि । एतेन पञ्चाशत्तमश्लोकोक्तवैष्णवमतस्य प्रबलत्वमपि सूचितम् ।

शिवत्वमेव निश्चीयते । नारायणोपनिषदि च 'नारायणाद्रुद्रोऽजायत'इति । एवं पूर्वोक्तरीत्या च सिद्धे तस्य जन्यत्वे एक एवेत्यवधारणमपीतरमात्रसत्त्वयोगमेव व्यवच्छिनत्तीति मुक्तलज्जैरादरणीयम् । अतो भवद्रीत्यापि तुरीयकोटिस्थत्वेन त्वयाभ्युपगतस्यापि नारायणस्य जन्म न भवतोपपादयितुं शक्यमिति त्वत्तो दूरनिरस्तं वैष्णवं परं तत्त्वम् ।

गुणमूर्तीनां जन्म तूभयवादिसम्मतमिति तत्समर्थनं तु पिष्टपेषणमिति न किञ्चिदेतदिति दिक् ।

किञ्च, ऋग्वेदे देवीसूक्ते 'अहं रुद्राय धनुरातनोमी'तिमन्त्रात्पूर्वं पठ्यते 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रङ्कृणोमि तं ब्रह्माणं तमृषिं सुमेधा'मिति । तस्यैवोत्तरञ्च 'अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वान्तः समुद्रे ततो वितिष्ठे भुवनानि विश्वोतामूं द्यां वर्षणोपस्पृशामीति । उग्रं शिवं; 'उग्रः कपर्दी श्रीकण्ठ'इति कोशात् । अस्य पितरमिति पूर्वमुपक्रान्तस्य रुद्रस्य पितरं ब्रह्माणं, तेन रुद्रब्रह्मादीनां देवीत उत्पत्तिस्तस्याश्च समुद्रस्थाद्विष्णोरिति दृश्यते, इति किमधिकं वदामः ?

एवं च 'यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मि, 'यस्मै नमस्तच्छिर'इति श्रुती नमोलक्षणत्वेन पशुनियोजनं शिशुमारशिरोरूपत्वञ्च विधत्त इति नमःशेषित्वेन निरतिशयैश्वर्यं शिवे विश्राम्यतीति यत् ज्ञानघनेनोक्तं,

---

'एक' इत्यवधारणस्योत्पत्तिमदितरमात्रव्यच्छेदकतया अनादिमुक्तपरशिवसद्भावप्रतिक्षेपासामर्थ्याद्यथाकथञ्चित्सामर्थ्येऽपि 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'तिश्रुत्यन्तरदर्शनेन 'एष वाव प्रथमो यज्ञ'इति श्रुतस्य ज्योतिष्टोम प्राथम्यस्येव त्रिमूर्त्युत्तीर्णपरशिवसद्भाव प्रतिपादनपरानेकश्रुत्यन्तरविरोधपरिहाराय तस्य सङ्कोचोपपत्तेश्चेति यदुक्तन्तद्दूषयति एवमित्यादि । एवमस्तेरुत्पत्त्यर्थकत्वस्य वेदान्तोपप्लावकत्वाथर्वशिरःस्थत्वसिद्धान्तोपप्लावकत्वाभ्यां ईशानशब्दादिभ्यश्च सिद्धे त्वदभिमतस्य जन्यत्वे इत्यन्वयः। पूर्वोक्तरीत्येति, नारायणोपनिषद्व्याख्यानोपदर्शितरीत्या । एतेन नारायणानुवाकप्रक्रियाप्रत्यभिज्ञाकृतशैवत्वाभिमानोऽपि वृथेति बोधितम् ।

मानवोपबृंहणार्थं पर्यावर्तनादिकुसृष्टिरपि व्यर्थेति हृदिकृत्य मायोपहितस्य तदभिमतस्य जन्यत्वं श्रुत्यन्तरेण दर्शयति किञ्च देवीत्यादि । एवं पञ्चाशत्तमश्लोको दूषितः ।

यदनेन ज्ञानघनमुपजीव्य सर्वनमस्यानां शिवविषयत्वं महाविष्ण्वादिजनकत्वं च शिवस्याङ्गीकृतं पञ्चत्रिंशे, तद् हृदि कृत्य ज्ञानघनमतमेवदूषयति एवञ्च यस्मा इति । एवमिति । जन्मसाधनेनान्तर्यामित्वे निराकृते सतीत्यर्थः । ननु श्रुतौ रुद्रदेवताककर्मप्रकरणे 'यस्मा'

तदप्यभिमानमात्रमेव। प्रथमश्रुतेः शूलगवाख्यकर्माधिष्ठातृत्वेन नमःशो-षित्यस्य तत्कर्मण्युपलक्षणविधया तादृक्कर्मान्तरे वा नमस्यताबोधकत्वेन यावन्न-मोविश्रान्त्यप्रतिपादकत्वात्। द्वितीयस्याः शिशुमारस्याधोमुखत्वेन परब्रह्मपद-विप्रकृष्टत्वापादकत्वाच्च। 'यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तरा हनुर्यज्ञो धरा विष्णुर्हृदयं संवत्सरः प्रजननमश्विनौ पूर्वपादावत्रिर्मध्यं मित्रावरुणावपरपा-दावग्निःपुच्छस्य प्रथमं काण्डं ततो रुद्रस्ततः प्रजापतिरभयं चतुर्थं स वा एष दिवः शाकरः शिशुमारः'इत्येवं श्रूयमाणत्वात्। 'यस्य पुच्छाग्रेऽवाक्शिरसः कुण्ड-लीभूतदेहस्य ध्रुव उपकल्पित'इति पञ्चमस्कन्धवाक्याच्च। अभयमित्यात्मलक्षणं ब्रह्मपदापारोक्ष्याद् भयहेतुभूतसंसारनिवृत्तेस्तथा च बृहदारण्यकं 'अभयं वै जनक प्राप्तोऽसी'तिस्वयमेव व्याख्यानाच्च। अतएव व्याख्यानेन संसारनैकल्या-विष्करात्सुसमर्थितं परमैश्वर्यम्। 'वज्रिणा मुद्रया शक्रं पद्मिन्या दर्शयेद्विधिम्। शङ्खिन्या केशवं रुद्रं शिरस्यञ्जलिमुद्रये'ति भरतोक्ताभिनयोऽप्येतेनैव व्याख्यातो ज्ञेयः। वस्तुतस्तु 'वैष्णवानां यथा शम्भु'रिति द्वादशस्कन्धात्स परमवैष्णवः सर्वदा भगवन्तं नमस्करोत्येवेति तस्याभिनायिका सा मुद्रेति ज्ञेयम्।

यच्चान्यमन्यमुपतिष्ठमानान्यपि नमांसि महेश्वरे विश्राम्यन्ति यथा मरुतः प्रकृत्य बह्वृचाः समामनन्ति–'स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसादिदिष्टने'त्युक्त्वा, 'नमसा सहे'ति सहार्थे तृतीया, 'दिदिष्टन दिशते'-त्यादिव्याख्यातं,

---

इति सामान्यकथनेऽपि सर्वसाधारणानां नमस्काराणां रुद्रपरताया अशक्यवचनत्वेन तेषां तत्परत्वाय कश्चिद्विशेषोऽवश्यंवाच्यो येन यच्छब्दः सार्थको भवेत्, स च विमृश्यमाणः पूर्वसा-धितान्तर्यामित्व एव पर्यवस्यति। तथा च सर्वत्र क्रियमाणनमोयदुद्देश्यकं तस्मा इत्यर्थः। अपेयमते तु नमःपदस्य जातिवाचकत्वबलात्सर्वं वाक्यं सावधारण'मिति न्यायेन यस्मा एव नम इति स्थूलान्वयावधारणबलाद्वा'यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इत्यत्राध्यापयितृत्वस्यैवानुवादसामर्थ्यात् 'ऋतं सत्य'मित्यत्र 'विश्वरूपाय वै नमोनम' इत्यस्य पुरोवादतायाः शक्यवचनात्वाच्च तत्सिद्धिः।

अतोऽन्तर्यामित्वनिराकारणेऽपि सार्वात्म्याच्छ्रुत्युपपत्तौ कथमभिमानमात्रत्वमित्यत आह प्रथमेत्यादि। सर्वकर्मारम्भजप्ये सामगानां प्रपदमन्त्रे 'विरूपाक्षाय ब्रह्मणः पुत्राय नम' इति श्रावणात्तस्यैव पुरोवादतौचित्यादपेयकृतक्लिष्टयोगेन तथेत्यर्थः। एतेनैवेति, नमोलिङ्गक-मन्त्राणां ब्रह्मपुत्रताज्ञापकत्वेनैवेत्यर्थः।

तदपि शिथिलं, सहपदाभावात् । उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वेन 'स्वयं नमसा कृत्वा स्तोमं दिशते'तिव्याख्यानस्य रुचिरत्वात् । किञ्च तुष्यन्तु ते स्वोक्तिभिस्तथापि शैथिल्यं नापैति । 'मरुतां पित'इत्यादिभिर्मरुत्पितृत्वस्य रुद्रे स्वयमेवाग्रे व्यवस्थापितत्वात्तत्पुत्राणां पितरि तथाकरणेऽप्यन्यनमसः शिवे विश्रान्तौ गमकाभावात् । न च 'नमस्ते अस्त्वायते नमो रुद्राय पराय ते ते नमो यत्र निषीदसी'तिमन्त्रे रुद्राधिष्ठाननमस उक्तत्वात्सर्वस्य तदधिष्ठानत्वेनाधिष्ठातर्यैव विश्रान्तेर्मन्त्र एवायं गमक इति वाच्यम् । यत्र निषीदसि तत्र ते नम इत्यपि वक्तुं शक्यत्वात् । यत्तदोर्नित्यसम्बन्धेऽपि बाधकाभावेनात्र त्रलन्ताध्याहारस्यैवोचितत्वेनाधिष्ठाननमसो लाभाभावात् । रुद्रानुवाकस्योदाहारणदानं त्वनुचितमेव । तत्र हि 'नमस्ते रुद्रमन्यव' इत्युपक्रमादुपसंहारे च 'मा नो वधीः पितरं मोत मातर'मित्यादिभिः स्वाहिंसनस्य हेतीनां पराचीनमुखीकरणस्य च प्रार्थनया संहाररुद्रनिगमनेन भीत्या नमःशसेरुत्कर्षानाधायकत्वात् । अस्तु वा यथा तथा, भगवन्महिमरूपताया ईशे उपपादितत्वात् तथैव सम्भवे विश्रान्तेरशक्यबोधत्वाद् भगवत्येव विश्रान्तिः । किञ्च, 'देवान्तरेषु विहितान्यपि तान्यमूनि स्रोतांसि सागर इव त्वयि सम्पतन्ती'ति दृष्टान्तोऽपि 'आकाशात्पतितं तोयं यथा गच्छति सागरम् । सर्वदेवनमस्कारः केशवम्प्रतिगच्छती'तिसन्ध्यावन्दने सर्वैः पठ्यमानाद्वाक्यात्तत्रैव पर्यवस्यतीति किमतोऽधिकं वच्मः ?

तेन 'नमो ब्रह्मणे नमोऽस्त्वग्नय'इति मन्त्रोक्तनमांस्यपि तत्रैव पर्यवस्यन्ति, मन्त्रसमाप्तौ 'नमो विष्णवे बृहते करोमीति'कथनाच्च । 'नमस्कृत्य हि वसीयांसमुपचरन्ती'ति श्रुतिरीश्वरसन्निकर्षप्राप्तानुवाद इति यदुक्तं, तत्तथैव ।

परमेष विशेषः । 'प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे । प्राज्ञैःपरस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने । सत्त्वं विशुद्धं[1] वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः । सत्त्वे च तस्मिन्भगवान् वासुदेवो ह्यधोक्षजो मे नमसा विधीयत'इति चतुर्थस्कन्धे सतीम्प्रति शिववाक्यात्सन्निकर्षः सर्वत्र तस्यैव सिध्यतीति । 'नमो ज्येष्ठाय श्रेष्ठाय चे'ति सामगैः कृच्छ्राधिकरणे पठ्यमानो मन्त्रस्तु भगवन्महिमरूपत्वेऽपि समानः । यश्च दाशतयीस्थे 'मा त्वा रुद्र चुक्रुधा मा नमोभि'रितिमन्त्रे देवान्तरैः सह नमस्कारनिषेधः सोऽपि

१ श्रेष्ठमिति ग्रन्थकृद्भिरेव सुखबोधाय टिप्पण्यां लिखितम् ।

महिमत्वेनैवोपपन्नस्तथा सहाह्वाननिषेधोऽपि। अतो नमोऽपि परमपुरुषस्यैवासाधारणं लक्षणं न भवदभिमतस्येति दिक्।

यच्चान्यत्तेनोक्तं विश्वाधिकत्वं रुद्रे विश्वत्वं मुरारौ नारायणोपनिषद्याम्नायते, 'आ वो राजानमध्वरस्ये'त्यादिभिर्यज्ञेश्वरत्वं रुद्रे, 'यज्ञो वै विष्णु'रित्यादिभिर्यज्ञत्वं विष्णौ, 'वासुदेवः परा प्रकृति'रिति तदसाधारणतन्त्रात्प्रकृतित्वं हरौ 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येव'इति मन्त्रोपनिषत्तः शिवे निमित्तकारणत्वमिति, तत्तदीशितव्यरूपः परमपुरुषस्तत्तदीश्वरेण कथं तादात्म्यमापद्यत इति;

तदपि फल्गु। नारायणोपनिषदि विश्वादिपदैर्नारायणस्य त्रितयपरिच्छेदातीतत्वसिद्ध्या यज्ञयज्ञेशप्रकृतिपुरुषतदतीतत्वादिसर्वरूपत्वसिद्धेर्विश्वाधिकपदेन शिवे अव्याकृतत्वपोषादध्वरस्येत्येकवचनेन यत्किञ्चिदेकयज्ञेशत्वसिद्धेस्तत्रापि सन्दिग्धवृत्तिकरुद्रपदप्रयोगाद्यस्य कस्यापि तत्पतित्वप्राप्त्या 'त्वमग्ने रुद्र' इत्युपक्रमात् 'सोऽरोदी'दितिब्राह्मणनिरुक्तस्याग्नेर्वा प्राप्त्या शिवाप्राप्तेः प्रतिज्ञादृष्टान्तानुपरोधाधिकरणे प्रकृतित्वयोनिशब्दवाच्यत्वयोः परब्रह्मण्येव व्यवस्थापितत्वेनादोषात् 'तद्वेद गुह्योपनिषत्सु गूढं तं ब्रह्मा वेद ते ब्रह्मयोनि'मितिमन्त्रोपनिषदापि तत्प्रतिपाद्यत्वेनैतदभिमते शिवे योनित्वस्य प्राप्ते'र्मम योनि महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्। तासां ब्रह्म महद्योनिरहं बीजप्रदः पिते'तिगीतोक्तेश्च वैपरीत्यस्यैव सिद्धेः। अतो 'जानन्ति मूढमतयस्तु तदेव सत्य'मित्यनेनान्येषां मूढमतित्वं वदता स्वस्यैव तथात्वं सम्पादितम्।

प्रकृतमनुसरामः। यच्च'उपक्रान्ति साधारणे'तिषोडशस्य श्लोकस्य विवरणे 'गीतासु वासुदेवेन यद्रूपं पार्थाय प्रदर्शितं, तच्च शैवमेव प्रतीयते, 'दर्शयामास पार्थाय परमं रूपमैश्वर'मिति तस्यैश्वरत्वनिरूपणात्। तद्रूपमास्थितेन कृष्णेन 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचि'न्निति विपक्षाणां प्रत्यक्षहननात्प्रागेव तेषां वीर्यनिहतत्वमुपवर्ण्य समयान्तरे स्वं रूपमास्थितेन मोक्षधर्मेषु पार्थं प्रत्येव 'निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून्। अप्रमेयप्रभावन्तं देवदेवमुमापतिम्। भजस्व नित्यं प्रयतो विश्वेशं हरमव्यय'मिति तेषामेव शिववीर्यनिहतत्वोपदेशेन तद्भजनोपदेशेन च तस्य रूपस्य शैवत्वव्यक्तीकरणाच्च।

---

शेषं स्फुटम्। अपेयोक्तमन्यदप्येतेन दूषितप्रायमतो न पुनरनूद्यते। एवं पञ्चत्रिंशश्लोकार्थो दूषितः। अतः परमग्रे पुराणार्थस्तेन विचारित इति त प्रसङ्गात्सिंहावलोकनेन षोडशश्लोकव्याख्यान उपपादितमर्थं ब्रह्मतर्कनवमश्लोकार्थं च दूषयितुमुपक्षिपति यच्चोपक्रान्तिमित्यादि।

न च शिवकृष्णयोर्भेदात् शैवं रूपं आत्मीयतया कृष्णेन प्रदर्शितमिति कथं सङ्गच्छत इति वाच्यं ? लैङ्गे शैवं रूपं योगप्रभावात्प्रदर्शितमिति प्रतिपादनेन इहापि 'पश्य मे योगमैश्वर'मिति वचनेन च योगप्रभावादर्शितमिति कल्पनोपपत्तेः ।

वस्तुतस्तु तयोरभेदस्यैव वैदिकमर्यादासिद्धत्वात्तद्दर्शने न काचिदनुपपत्तिः। न च 'द्रष्टुमिच्छामि ते रूप'मिति प्रार्थनया स्वरूपस्यैव दर्शनीयत्वान्नेदं साम्प्रतमिति वाच्यम् । तथाप्रार्थनायामपि वस्तुतो यत्स्वतः सर्वतोऽप्याद्यन्तस्यैव दर्शनीयत्वेन वैष्णवरूपाद्यशैवरूपप्रदर्शनेऽनुपपत्त्यभावात् । पूर्वं भगवन्महिमजातं श्रुतवत 'इमं विवस्वते योग'मित्यध्याये 'अपरं भवतो जन्मे'त्यादिप्रश्नेन तदुत्तरेण च भगवता किञ्चिदाद्यं सर्वोत्तरं रूपं सिद्धवत्कृत्य तदभिप्रायेणोच्यत इति निश्चयवतः 'परं भावमजानन्तो मम भूतमहेश्वर'मिति च श्रुतवत एव पार्थस्य तादृशप्रार्थनावाक्येन तस्मै तद्दर्शनौचित्याच्चेत्युक्तम् ।

यदपि ब्रह्मतर्कस्तवे 'मयैवैत' इति नवमश्लोकव्याख्याने भेदपक्षे 'मयैवैते निहता' इत्यत्रैवकारेण केवलमर्जुन एव व्यावर्तनीयः । 'निमित्तमात्रं भव सव्यसाचि'न्निति वाक्यशेषात्तत्र शिवप्रसङ्गाभावाच्च । अभेदपक्षेऽपि ' इहैकस्थं जगत्कृत्स्न'मितिश्लोके पादत्रयेण मम विश्वात्मकं रूपं द्रष्टुमिच्छसि चेत्पश्येत्यर्जुनेन पृष्टस्योत्तरमुक्त्वा, 'यच्चान्यद्द्रष्टुमिच्छसी'ति तुरीयपादे 'यद्वा जयेम यदि वा नो जयेयु'रितिकथनाज्जयपराजयादि यच्छङ्कसे तच्चेद्द्रष्टुमिच्छसि तत्पश्येति बोधितम् । तेन दुर्योधनादिसंहर्तुः संहारकं रूपं प्रदर्शयामीति सूचितम् । तद् दृष्ट्वा अर्जुनेन 'अमी च त्वा'मित्यादिभिर्घोररूपदर्शनमनूद्य, विष्णोरित्यनेन जगद्रक्षकत्वं सूचयित्वा, तादृशस्य कथमीदृशं रूपमिति शङ्कया 'आख्याहि मे को भवानुग्ररूप' इति पृष्टेन भगवता 'कालोऽस्मि लोके'त्यादिना उत्तरकथनात्कालाग्निरुद्ररूपं दधानस्य शिवस्येदं रूपमिति सूचितम्। अत एव 'पश्य मे योगमैश्वर'मिति 'रूपं परं दर्शितमात्मयोगा'दित्यादौ ईश्वरविषयस्वकीययोगातिशयत्वकथनमपि सङ्गच्छते ।

न च 'एतच्छ्रुत्वा वचनं केशवस्ये'ति सन्दर्भे यानि भगवन्तं प्रति अर्जुनवचनानि स्तुतिरूपाणि तेषामसङ्गत्यापत्तिरिति वाच्यम् । एवम्भूतशिवयोगनिष्ठत्वमाहात्म्यातिशयप्रदर्शनेन स्तुत्याद्युपपत्तेः । किञ्च, गीतासु क्वचिन् 'मदीयं रूप'मित्युक्तं, क्वचिद्योगप्रदर्शितमैश्वरं रूपमिति, क्वचिदुपरिब्रह्मलिङ्गमहिमवर्णनं' विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदि'त्यहमादिशब्दैर्दर्शितं,

क्वचिच्च 'तमेव चाद्यम्पुरुषम्प्रपद्ये' 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः', 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'त्यादावीश्वरनामाभिधेयशिवमहिमवर्णनम्। तत्र किमभिप्राया गीतासु भगवदुक्तय इति सन्दिहानेनार्जुनेनानुगीतावतारे पुनः पृष्टस्य भगवतो 'न शक्यं तन्मया भूयस्तथावक्तुमशेषतः। परं हि ब्रह्म कथितं योगयुक्तेन तन्मये'ति वचने स्वाशक्तिसूचनेन पूर्वं योगयुक्तत्वकथनेन च शिवयोगसामर्थ्यं लब्ध्वा शिवाहम्भावनया वा शैवरूपमेव दर्शितमिति निश्चीयते इत्युक्तं,

तत्तु सम्यगुक्तं, परं त्वबुद्ध्वा। तथाहि, 'अपरं भवतो जन्मे'ति शङ्कायां, 'अजोऽपि सन्नव्ययात्मे'त्यादिना पारमेश्वरस्वीयप्रकारामोषेण विभूतिरूपावतरणे श्रुते ततो 'भूय एव महाबाहो'इत्यादिना भगवन्मुखाद्भगवन्माहात्म्ये सम्यगवधारिते, 'परंब्रह्म परं धाम पवित्रं परमं भवान्। पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्। आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा। असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे' इतिसर्वर्षिसम्मतिपूर्वकं भगवन्तं परब्रह्मत्वेन ज्ञातवतो विभूत्यध्याये 'अथवा बहुनैतेन किं ज्ञातेन तवार्जुन। विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'दिति वाक्येनैकांशेन सर्वविभूत्याधारजगदवष्टम्भकत्वं श्रुतवतो गतमोहस्य तद्रूपदिदृक्षायां भगवता परमेश्वरेण पुरुषोत्तमेन निजांशभूतमैश्वरं रूपं दर्शितम्। तच्च शैवमिति युक्तमेव। तस्य तदंशत्वान्मुख्याधिकारित्वाच्च। न तु 'स्वतः परतरमि'त्यतो दर्शितम्। शिवे परात्परत्वस्याथर्वशिखाद्युपनिषद्विचार एव निरस्तत्वात्। अतो भूतमहेश्वरपदादपि न सन्देहसम्भवः। अतएव ब्रह्माण्डं सावरणं यथा मृत्स्नाभक्षणोत्तरव्यादाने जृम्भणे च मातृचरणेभ्यः प्रदर्शितं तथा नात्र, किन्त्वान्तरालिका एव प्रदर्शिता इत्यपि सङ्गच्छते। अतएव तम्प्रति 'आख्याहि मे को भवानुग्ररूप'इति प्रश्ने 'कालोऽस्मि लोकक्षयकृ'दिति भगवतोक्तम्। तदेव मोक्षधर्मे परामृष्टं 'निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपू'निति। 'अप्रमेयप्रभावं तं देवदेवमुमापतिम्। भजस्व नित्यं प्रयतो विश्वेशं हरमव्यय'मितितद्भजनोपदेशोऽपि शत्रुहननायैव।

---

दूषयति तत्त्वित्यादिना। अत्राभ्युपगमपक्षेण द्रोणपर्वणि शङ्करायोपकल्पितं नित्यपूजोपहारं वासुदेवेऽर्पयित्वा 'कैलासेऽधिशिवपार्श्वमपश्य'दिति यदुक्तं, तदपि यथाश्रुतमेव सम्भवति, भगवतः सर्वात्मकत्वेन तत्रार्पणे तस्य वृक्षमूलसेकन्यायेन पाशुपतास्त्रदातर्यपि तत्प्राप्तेस्तत्पार्श्वे तद्दर्शनौचित्यादिति बोध्यम्। वास्तवपक्षेण प्रतिवादिन आग्रहवादित्वेनातिबालिशत्वं बोधितम्।

बाह्यानामिवान्तराणामपि कामादीनां शत्रुत्वात् । न तु परमफलाप्तये । उत्त-रत्र गीतायां 'मन्मना भवे'ति, 'सर्वधर्मान्परित्यज्ये'त्याभ्यां परमफलार्थं गुह्यत-मत्वेन स्वभजनादेरेवोपदेशात् ।

इदमत्र 'तुष्यतु दुर्जन'न्यायेनाभ्युपगम्योक्तम् । वस्तुतस्त्वनुगीताविचारे, 'विदितं च महाबाहो सङ्ग्रामे समुपस्थिते । माहात्म्यं देवकीमातस्तच्च ते रूपमै-श्वर'मिति प्रथममेव रूपस्य भगवदीयत्वोक्त्या, ततो ब्राह्मणब्राह्मणीसंवादे 'देवं नारायणं भीरु सर्वात्मानं निबोध म'इति नारायणस्यैव सर्वात्मकत्वकथ-नेन, 'एकः शास्ते'त्यादिभिस्तस्यैव हृदि तिष्ठतः पुरुषस्य नियोजकत्वकथना-दिना, ततो गुरुशिष्यसंवादान्तर्गतब्रह्मोक्तिषु तत्तद्राजनिरूपणप्रस्तावे 'पशू-नामीश्वरः शिव'इति निरूप्य 'सर्वेषामेव भूतानामहं ब्रह्ममयो महान् । भूतं परतरं मत्तो विष्णोर्नान्यच्च विद्यते,' 'राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरं तं विजानीयात्स विभुः स प्रजापतिः । नरकिन्नरयक्षाणां गन्ध-र्वोरगरक्षसाम् । देवदानवनागानां सर्वेषामीश्वरो हि स' इति सर्वैश्वर्यस्य विष्णावेव प्रतिपादनात्तत्रैवेश्वरत्वेन ज्ञानस्योपदेशात् । अग्रे सर्वादिनिरूपण-प्रस्तावे 'अहं प्रजापतीनां च सर्वेषामविशेषतः । मम विष्णुरचिन्त्यात्मा स्वयम्भूरिति स स्मृत' इत्युक्त्वा 'देवदानवयक्षाणां पिशाचोरगरक्षसाम् । नर-किन्नरभूतानां सर्वेषामीश्वरः प्रभुः । आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान् । भूतं परतरं यस्मात्त्रैलोक्ये नेह विद्यत'इत्यनेन सर्वादित्वस्यापि तत्रैव ब्रह्मणा प्रतिपादनात् । अनुगीतोत्तरमुत्तङ्कोपाख्याने स्वाश्रमागतं भगवन्तम्प्रति 'द्रष्टुमिच्छामि ते रूपमैश्वरं तन्निदर्शये'ति प्रार्थने उत्तङ्केन कृते, 'ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः । शाश्वतं वैष्णवं धीमान् ददृशे यद्धनञ्जय'इत्यारभ्य 'तद्दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् । विस्मयं च ययौ विप्रस्तद्दृष्ट्वा रूपमै-श्वर'मिति पूर्वमर्जुनेनेदानीमुत्तङ्केन च दृष्टस्य रूपस्य वैशम्पायनेन कण्ठत एव वैष्णवत्वप्रतिपादनात् । तत उत्तङ्केनापि 'विश्वकर्मन्नमस्तेऽस्तु यस्य ते रूपमी-दृश'मितिनिगमनाच्च पार्थप्रदर्शितरूपस्य वैष्णवत्वं विष्णोरीश्वरत्वादिकं परात्परत्वं चोपपादनमन्तरेणैव फलतीति किमधिकं बालिशान् प्रति वदामः ? एवं च 'मयैवैते निहता'इत्यत्रापि नार्जुनमात्रव्यावृत्तिः । 'एत'इत्येतत्पदेन दशनान्तरविलग्नधृष्टद्युम्नद्रोणदुर्योधनादीनां सेनाद्वयवर्तिनां सङ्ग्रहात्तद्धन्तॄणा-मव्यावृत्तौ वाक्यार्थव्याघातेनावधारणवैयर्थ्यापातात् । 'सहास्मदीयैरपि योध-मुख्यैः 'वक्त्राणि ते त्वरमाणा विशन्ती'त्यस्य विरोधाच्च । किन्तु भगवदितर-

सर्वव्यावृत्तिः। तत्रापि कर्तृत्वमेव व्यावर्तनीयं न तु करणत्वमपि, प्रत्यक्षविरोधात् । 'निमित्तमात्र'मित्यस्य बाधप्रसङ्गाच्च। एवं सति 'निहतांस्तेन पूर्वं त्वं हतवानसी'ति मोक्षधर्मवाक्येऽपि तेन करणेन मया निहतानित्यर्थस्तेन न कोऽपि क्वापि विरोधः ।

यत्पुनर्गीतासु 'कच्चिन्मदीय'मित्यादिना किमभिप्राया गीतासु भगवदुक्तय इत्यर्जुनसन्देहोऽनुगीतावतारकार्जुनप्रश्नबीजत्वेनोक्तः स तु विमर्षणीयग्रन्थमेव विरुणद्धि। तत्र हि प्रश्ने ' विदितं च महाबाहो ' इति श्लोकेन भगवन्माहात्म्यतद्रूपयोर्वेदनमनुसंहितमुक्त्वा, 'यच्च तद्भवता प्रोक्तं पुरा केशव सौहृदात्। तत्सर्वं पुण्डरीकाक्ष नष्टं मे नष्टचेतसः। मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः प्रभो । भवांश्च द्वारकां गन्ता नचिरादिव बान्धवे'त्येतावदेवोक्तमिति तत्र त्वदुद्भावितसन्देहजगन्धस्याप्यलाभात् । प्रत्युत दृष्टमाहात्म्यरूपातिरिक्तसर्वविस्मरणस्यैव स्फुटत्वेन तद्बाधाच्च । अथालङ्काराभिनिवेशात् पर्यायोक्तेन लाभमभिमन्यसे, तर्हि तत्र मानं मृग्यम्। यद्यनुगीतारूपमुत्तरमेव तथात्वेन मन्यसे, तर्ह्यनुगीतासु कुत्र वा प्रतिपाद्यत्वेन शिवः स्फुटीकृत इति प्रदर्शनीयम्।

अथ विष्णोर्ब्रह्ममयत्वोक्त्या सूचित इति मन्यसे तर्हि पूर्वशिखादिविचारे निरस्तं परब्रह्मत्वं स्वकल्पितयुक्तिभिः पुनः साधय । ईश्वरगीतासप्तमाध्याये 'अन्यद्गुह्यतमं वक्ष्य' इत्युपक्रम्य 'अहं ब्रह्ममयः शान्त' इत्युक्त्वा-त्तत्राप्युत्तरं विचारय।

ननु तथाप्यनुगीतारम्भे भगवता 'न शक्यं तन्मया भूयस्तथावक्तुमशेषतः। परं हि ब्रह्म कथितं योगयुक्तेन तन्मये'ति तस्य पुनःकथने इदानीं स्वाशक्तिस्तदानीं योगयुक्तत्वञ्च किमित्युक्तमितिचेत्,

नोक्तं, देवानाम्प्रियत्वादेव तवायं विपर्ययः।तत्र हि पूर्वं'श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम्। धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान्। अबुद्ध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियम्। नूनमश्रद्दधानोऽसि दुर्मेधाश्चासि पाण्डवे'तिद्वाभ्यां शरणागमनात्मकस्वरूपिधर्मस्य 'मामेवैष्यसी'ति शाश्वतसर्वलोकात्मकफलस्य चाग्रहणे क्रमेण श्रद्धाभावमेधादोषप्रयुक्तं तदधिकारजाघन्यं सूचयित्वा, तज्जनितकोपात्पूर्वार्धे 'शाक विभाषितोमर्षण' इति इत्यस्य शक्यमिति प्रयोगेण तस्यामर्षणीयत्वमुत्तरार्धेऽधिकाराभावगमकं प्राह। अशेषतस्तथाभूयो वक्तुं तत्तवाश्रद्धादिकं न शक्यं, न मर्षणीयम्। हि यस्माद्धेतोः

परंब्रह्मयोगयुक्, योगे चित्तवृत्तिनिरोधे ऐकाग्र्ये वा युनक्ति स्वयुक्तं करोति तादृशं ते तव तुभ्यं वा कथितं, एवमपि सति न तन्मया, छन्दोबाहुल्यात् तन्मयी न जाता त्वन्मेधा । अतस्तवाधिकारो हीनोऽवगत इति साकल्येन तथा न वक्तव्यमित्यर्थः । एतदेव समासावपि बोधितम् । 'मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह । अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत । ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन् कुरुनन्दन । सर्वपापविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम् । पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते । मया तव महाबाहो तस्मादत्र मनः कुर्वि'त्यनेन स्वविषयकप्रीतेः संशयितत्वबोधनेन जघन्याधिकारं दृढयित्वा तादृशाधिकारोचिताध्यात्मसाधनकथनेन पूर्वोक्तानुवादकथनेन च । तत्रापि पूर्वमध्यात्मसाधनानामेवोक्तत्वात् ।

योगयुक्तेनेत्यस्यैकपदत्वं त्वयुक्तं, पौनरुक्त्यवैयर्थ्याभ्याम् । तदनादृत्यैकपदत्वाङ्गीकारपक्षेऽपि योगपदे शिवयोगरूपविशेषगमकाभावादयुक्तमेव ।

एतेनैव 'शक्य'मित्यत्र 'शक्ल शक्ता'वित्यस्य प्रयोगमङ्गीकृत्य, उत्तरार्धे 'न तन्मये'त्यस्य 'कथित'मित्यनेनान्वये, तन्मया न कथितं किन्तु मदाविष्टेन शिवेनेत्येवं पुनरुक्त्यादिपरिहारोऽपि निरस्तो वेद्यः । उपसंहारे 'पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते । मया तव महाबाहो' इत्यस्य व्याकोपात् ।

नन्वष्टचत्वारिंशत्तमश्लोकव्याख्याने ईश्वरगीतासु 'नारायणश्च भगवान् देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तम'मित्युक्तत्वेन भगवद्गीतायास्तदनुवादरूपत्वस्य गमकत्वान्नायुक्तमिति चेत्,

न, तत्राप्येवमर्थाभावात् । तथाहि, तत्रोपक्रमे नारायणाश्रमगतेभ्य ऋषिभ्यो ज्ञानोपदिदिक्षायामाविर्भूते शिवे नारायणेनोक्तं, 'यदि प्रसन्नो भगवान् मुनीनां भावितात्मनाम् । सन्निधौ मम तज्ज्ञानं दिव्यं वक्तुमिहार्हसि ।' तथा, 'त्वं हि वेत्थ महात्मानं न ह्यन्यो विद्यते शिव । ततस्त्वमात्मनात्मानं मुनीन्द्रेभ्यः प्रदर्शये'ति, एवं शिवं प्रत्युक्त्वा, 'प्रष्टुमर्हथ विश्वेशं प्रत्यक्षं पुरतः स्थितम् । ममैव सन्निधावेष यथावद्वक्तुमीश्वरः ।' इति ऋषीन् प्रत्युक्तम् । शैवज्ञानमेव यदि प्रतिपाद्यं स्यात्तदा तज्ज्ञानमिति, 'त्वं हि वेत्थ महात्मान'मिति च न वदेत्, स्वज्ञानं स्वमात्मानमित्येव वदेत् । अत उत्तरार्धेऽपि वेदनकर्मभूत एवात्मा 'आत्मान' मित्यनेन प्रदर्शनकर्मतया परामृष्यते न तु करणभूतः । 'ममैव सन्निधा'वित्यादिना तस्यासामर्थ्यसूचनात् । एवं सत्यग्रे यत्स्वात्म-

योगपदं तत्रापि स्वपदेन मूलमेव परामृष्यते, 'स्वमपीतो भवती'त्यत्रेव, न तु वक्तृरूपं, अनुपपत्तेरुक्तत्वात्।

यानि च क्वचित्क्वचिन्मामित्यादीनि पदानि तानि त्वनुगमाधिकरणविषयवाक्यस्थास्मच्छब्दवदनिर्णायकानि । तस्मादुक्तविधोपक्रमेण हरिरर्जुनाय दास्यतीत्यनुक्त्वा दत्तवानित्युपसंहारेण च पूर्वोक्त एवार्थः ।

यदि च 'सनत्कुमारो भगवान् संवर्त्ताय महामुनिः । दत्तवानैश्वरं ज्ञानं सोपि सत्यव्रताय त्वि'त्यादिभिः शिवोक्तमेव सर्वैरुक्तमिति व्यासेन प्रतिपादनादीश्वरगीताया एव पुरोवादत्वं मन्यसे, तदापि त्वदभिमतोपसंहारप्राबल्यन्यायेन तदर्थव्याख्यानरूपभगवद्गीताया एव निर्णायकत्वं सिध्यतीत्युभयथापि स एवार्थ इति निश्चयः ।

नन्वेवं सति 'यदाहं लब्धवान् रुद्राद्वामदेवादनुत्तमम् । विशेषाद्गिरिशे भक्तिस्तस्मादारभ्य मेऽभव'दिति स्ववृत्तान्तकथनं, 'गच्छार्जुन स्वकं स्थानं न शोकं कर्तुमर्हसि । भज त्वं परया भक्त्या शरण्यं शरणं शिव'मित्युपदेशश्चार्जुनं प्रति व्यासस्येति द्वयं कौर्मस्थं कथं सङ्गतं स्यादिति चेद्,

गुरुत्वोपाधिना भगवदभिन्नत्वज्ञानेन, अवतारेषु 'तव पूजां करिष्यामि वरं च त्वत्तो गृहिष्यामीति शिवाय दत्तेन वाराहपाद्माद्युक्तेन वरेण चेति ब्रूमः ।

एवं च 'उत्तमः पुरुषस्त्वन्यः', 'यस्मात्क्षरमतीतोऽहं,' 'मामेकं शरणं व्रज,' 'येऽप्यन्यदेवताभक्ताः,' 'अन्तवत्तु फलं तेषा'मित्यादिवाक्ययुक्तगीताशास्त्रश्रवणोत्तरं 'करिष्ये वचनं तवे'तिप्रतिज्ञातवतार्जुनेन यावज्जीवं शिवपूजैव कृतेति यदुक्तं, तदपि कामादिनिवृत्त्यर्थं भगवदाज्ञया कृतेति कथनादेव प्रत्युक्तम् । यावज्जीवं तत्कृतिगमकाभावाच्चेति दिक् ।

यत्तु षष्टितमे श्लोके श्रुतार्थश्रवणावृत्तिपरस्य भूयःशब्दस्य स्वारस्यात् 'मन्मनाभवे'त्यादिना बहुशः पूर्वं प्रतिपादितस्यार्थस्य वर्णना 'न्मामेकं शरणं व्रजे'त्यस्य 'तमेव शरणङ्गच्छे'त्यवधारणविरोधेन ईश्वरातिरिक्तभजनविधिपरत्वाच्छ्रीकृष्णस्य ईश्वरप्रयोगोपपत्तेर्गीतायाः शिवपरत्वोपपादनस्थले दर्शितत्वाच्च 'सर्वगुह्यतम'मित्यादिकं बुद्धिसौकर्याय सकलार्थोपसंहाररूपत्वाच्छिव-

---

'स्वमपीतो भवती'ति श्रुतिस्तु छान्दोग्ये श्वेतकेतूपाख्यानेऽस्ति । 'यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षत' इति ।

परमित्युक्तं, तदपि कोशे ईश्वरपदस्य 'स्वामी त्वीश्वरः पतिरीशिते'ति पति-वाचकत्वस्यापि दर्शनादसाधारणत्वाभावेन तस्य लिङ्गादिनिर्णेयत्वादन्तर्यामिस्वरूपविचार ईश्वरशब्दार्थनिर्णये च शिवैकतानत्वखण्डनाद्गीतायाः शिवपरत्वनिराकरणाच्च निरस्तम् ।

न च पाद्मे गीतामाहात्म्ये गीतायाः शिवरूपत्वकथनाच्छिवपरत्वं शङ्क्यं, शब्दार्थयोरैक्याभावात्, ज्योतिश्चरणाधिकरणे तथा निर्णयात् । अतो गङ्गाधारकस्येव तस्यापि रूपस्य वैष्णवत्वमेव ।

यत्तु ब्रह्मतर्कस्तवे शिवेन शिरसा धृताया गङ्गायास्तावद्भगवच्चरणोदकव्यतिरिक्तत्वं साधयितुमुक्तं, 'द्विविधा गङ्गा, एका हिमवतः कन्यका ब्रह्मलोके प्रवहन्ती केनचिदंशेन ब्रह्मलोकाद्भगीरथेन भूलोकं नीता, अन्या तूर्ध्वप्रसारितभगवच्चरणप्रभवा सत्यधः पतन्ती केनचिदंशेन व्योम्नि स्थिता देवानां विहारोपयोगिनी, अंशान्तरेण मेरोरुपरि ब्रह्मपुर्याश्चतुर्दिक्षु प्रवाहातिबलेन चतुर्धा विभक्ता प्राच्यादिषु प्रविष्टा । तत्र प्रथमा तावत्सेनान्युत्पादनार्थं यतमानैः शिववीर्यधारणार्थं ब्रह्मप्रेरणया शिवजायात्वयोग्यां कन्यां गवेषमाणैर्देवैर्वृता

---

ज्योतिश्चरणाधिकरणे तथानिर्णयादिति । इदं समन्वयाध्यायाद्यपादेऽस्ति ज्योतिश्चरणाभिधानादिति । अत्र चिन्तितम् । 'अथ यदितः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति छान्दोग्ये 'गायत्री वा इदं सर्वभूतं यदिदं किञ्चे'ति गायत्रीं प्रकृत्य श्रूयते । तत्र किञ्ज्योतिःपदेन किं ब्रह्मोच्यत उतादित्यादिज्योतिरिति संशये, आदित्यादिज्योतिरेवोच्यते, द्युमर्यादित्वस्य दीप्तेश्च तद्धर्मत्वात्कौक्षेयज्योतिषोऽपि तदंशत्वेनोपसंहारविरोधाभावाच्चेति पूर्वः पक्षः । सिद्धान्तस्तु ज्योतिर्ब्रह्मैव । कुतः चरणाभिधानात् । 'तावानस्य महिमा अतो ज्यायांश्च पूरुषः पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी'ति पूर्वमन्त्रोक्तब्रह्मपादस्यात्र द्युसम्बन्धित्वेनाभिधानात् । न च दीपनादिधर्मविरोधः । 'येन सूर्यस्तपति तेजसेद्ध' इति श्रुत्यन्तरे ब्रह्मधर्मत्वेनैवोक्तेः । उपक्रमे गायत्रीनिरूपणं तु गायत्र्या ब्रह्मणि चेतोऽर्पणबोधनायेति द्वितीयसूत्रे उक्तम् । ततो भूतादिपादव्यपदेशोपपत्तेश्चैवमिति तृतीयसूत्रे श्रुतौ भूतपृथिवीशरीरहृदयानि निर्दिश्य, 'सैषा चतुष्पदा षड्विधा गायत्री'त्युक्तं, तच्छन्दसि सर्वथा असम्बद्धशब्दरूपे छन्दसि भूतादीनाम्पादत्वस्याशक्यवचनत्वादिति प्रतिपादितम् । तेन शब्दार्थयोर्भेदो वस्तुतः उपचारादेवाभेद उच्यत इति सिद्धं तस्मादित्यर्थः । ब्रह्मतर्कोक्तं प्रमेयान्तरं दूषयितुम्प्रसञ्जयति अत इत्यादि । स्फुटमग्रिमम् ।

कुटिलाभिधाना काली ज्येष्ठा हिमवतो मध्यमा कन्या तेन तदर्थं दत्ता देवैर्ब्रह्म-लोके नीता सती ब्रह्मणा तामवलोक्य शिवतेजोधारणासमर्थेयं वराकी मुच्य-तामित्युक्ते, तया जनार्दनं समाराध्य समर्था भविष्यामीत्यहङ्कृते स्ववाक्या-नङ्गीकारक्रुद्धेन ब्रह्मणा 'सर्वा त्वमापोमयी भवे'ति शप्ता मन्त्रैर्निरुद्धा तत्रैव प्रवहन्ती स्थितेति, 'श्वेताङ्गी नीलपद्माक्षी'त्यादि 'ब्रह्मणो विमलालय'मित्य-न्तेन वामनपुराणसन्दर्भेण कुटिला ब्रह्मशापादापोमयीत्यवगम्यते । तथा, 'यत्तत्पीतं हुताशेने'त्यादिना 'सा तु सन्त्यज्य तं बालं ब्रह्माणं सहसाऽगमत् । आपोमयी'त्यन्तेन वामनपुराणसन्दर्भेण कुटिला गङ्गा महापगा सती पुत्रं शरवणे त्यक्त्वा पुनरागत्य ब्रह्मलोक एव तिष्ठतीति निश्चीयते ।

इयमेव रामायणे 'एते वै शैलराजस्य सुते लोकनमस्कृते । गङ्गा च सरितां श्रेष्ठा उमादेवी च राघवे'ति । 'अथ ज्येष्ठां सुतां सर्वे देवतार्थचिकीर्षया । शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदी'मिति ब्रह्मणा आविर्नीं सञ्ज्ञामादाय गङ्गादिपदैर्निर्दिष्टा । 'इयमाकाशगङ्गाख्या यस्यां पुत्रं हुताशनः । जनयिष्यति देवा वः सेनापतिमरिन्दम'मिति निजलोकसन्निहितता आकाशगङ्गात्वेन च निर्दिष्टा । रामायण एव भगीरथेन गङ्गावतरणार्थं ब्रह्माणमुद्दिश्य तपःकरणस्य कथनात्तत्तपःप्रसन्नस्य वरदानार्थमागतस्य ब्रह्मण 'इयं हैमवती गङ्गा ज्येष्ठा हि-मवतः सुते'ति वाक्ये गङ्गापदाच्च भगीरथेनेयमवतारिता स्वपितामहतारणार्थ-मिति निश्चीयते । तथा 'करिष्यामि महाराज वचस्तेनात्र संशयः । वेगं तु मम दुर्धर्षं पतन्त्या गगनात् क्षितौ । नक्षमस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप । अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरादिति' भारतीयगङ्गावाक्याद्, 'धारयेद्भवती वेगं रुद्रस्त्वात्मा शरीरिणाम् । यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तु'ष्विति श्रीभागवतीयभगीरथवाक्याद्, 'गङ्गायाः पतनं राजन्पृथिवी न सहिष्यति । तां वै धारयितुं वीर नान्यं पश्यामि शूलिन' इति रामायणीयब्रह्मवाक्याच्च तस्या एव धारणं शिवेन कृतमित्यपि निश्चीयते ।

द्वितीया तु विष्णुपदी गङ्गा, सा च विष्णुपदान्निर्गत्य शीघ्रं सागरं प्रविष्टा । 'तच्छिद्रात्स्पन्दिता तत्र पादभ्रष्टाथ निम्नगा । संसारसागरं साशु पावनी साग-रंगमे'ति सभापर्ववाक्याद्, 'अथाण्डभेदादपतच्च शीतलं महाजलं पुण्यकृद्भिश्च जुष्टम् । प्रवर्तते चापि सरिद्वरा तदा गङ्गेत्युक्ता ब्रह्मणा व्योम्नि संस्थिते'ति-कौर्मवाक्याच्च केनचिदंशेन देवानां विहारार्थं व्योम्नि पतिता, अवशिष्टेन केन-

चिदंशेन सागरं प्रविष्टेत्युभयानुरोधेन योज्यम् । एवं च भगीरथानुग्रहार्थं हैमवती गङ्गा शिवेन शिरसा धृता न तु विष्णुपदीति सिध्यति ।

यद्यपि विष्णुपुराणादिषु 'ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थित' इत्यादिभिर्भगवद्वामपादाङ्गुष्ठादुत्पत्तिं ततो ध्रुवलोकसप्तर्षिमण्डलशशिमण्डलमेरुषु क्रमेण पातमुक्त्वा, 'जगतः पावनार्थाय सम्प्रयाति चतुर्दिशम् । सीता चालकनन्दा च चक्षुर्भद्रा च संस्थिता । एकैव हि चतुर्भेदा दिग्भेदकृतलक्षणा । भेदं चालकनन्दाख्यं यस्याः शर्वोऽपि दक्षिणम् । दधार शिरसा प्रीत्या वर्षाणामधिकं शतम् । शम्भोर्जटाकलापाच्च विनिष्क्रान्तास्थिशर्करान् । पावयित्वा दिवं निन्ये सा पापात्सगरात्मजा'निति पठितम् ।

मार्कण्डेयेऽपि 'ध्रुवाधारं जगद्योनेः पदं नारायणस्य य'दित्यादिना पूर्ववन्मेरुपरिपातादिकमुक्त्वा ततोऽलकनन्दाया गन्धमादनादिहिमवदन्तं गमनमुक्त्वा 'दधार तत्र तां शम्भुर्मुमोच च वृषध्वजः । भगीरथेनोपवासैः स्तुत्या चाराधितो विभु'रित्यादिना भगीरथस्यानुरथं स्रोतसैकेन दाक्षिणमित्यन्तेन सागरपावनार्थत्वं सूचितम् ।

स्कान्दकेदारखण्डेऽपि 'सङ्कल्पेनैव ववृधे वामनो भगवानज' इत्यादिना सर्वलोकव्याप्तिमुक्त्वा 'सत्यलोकस्थितेनैव ब्रह्मणा परमेष्ठिना । कमण्डलुजलेनैव अम्भसा चावनेजने । तत्पादसम्पर्कजलाच्च जाता पापापहा मङ्गलमङ्गला च । यया त्रिलोकी च कृता पवित्रा यया च सर्वे सगराः समुद्धृताः । यया कपर्दः परिपूरितश्च शम्भोस्तदानीं च भगीरथेन ।'

महाभारते 'विष्णोः पदाच्छिशुमाद्ध्रुवा सोमात्सूर्यान्मेरुरूपाच्च विष्णोः । समागता शिवमूर्ध्नो हिमाद्रि'मिति विष्णुपदी शिरसा धृतेति पठ्यते ।

तथापि वामनपुराणरामायणवचनस्वारस्यानुरोधेन ब्रह्मलोकस्थिता गङ्गा भगीरथेन नीता तदनुग्रहार्थं शिवेन धृता च, विष्णुपदान्निर्गताया हैमवतीजलेनापि मिश्रणमासीदित्येतदवलम्ब्य तदभेदोपचारेण विष्णुपदी शिवेन शिरसा धृता सागरानभिपावितवतीति विष्णुपुराणवचनान्युदाहृतानि योजनीयानि । कथमन्यथा त्रिविक्रमावतारकाल एव मेरौ निपत्य भुवि प्रवहन्त्यां विष्णुपद्यां सत्यां भगीरथेन त्रिदिवाद्गङ्गानयनं कृतमिति विष्णुपुराण एवोक्तं सङ्गच्छेत ।

ननु त्रिविक्रमावतारकाले निर्गता विष्णुपदी ध्रुवलोक एव स्थिता, सा भगीरथेन प्रसादिता मेरौ निपत्य दक्षिणस्यां प्रवहन्ती शिवेन शिरसा धृता,

तस्मिन्नियमाकाशगङ्गेति ब्रह्मसेवार्थं ब्रह्मलोकमागता विष्णुपदी ब्रह्मणेयमिति निर्दिष्टेति कल्पयिष्यत इति चेत्,

मैवम्। 'तच्छिद्रात्स्पन्दिता तत्रे'त्युदाहृतभारतश्लोके निर्गमनानन्तरमेव विष्णुपद्याः शीघ्रंसागरप्रवेशस्योक्तत्वेन भगीरथकालपर्यन्तं ध्रुवलोकतद्वस्थानकल्पनानुपपत्तेः। न च तदा केनचिदंशेन भुवि पतिता सागरमेव प्रविष्टा न भूतले प्रवहन्ती स्थिता, अतो भगीरथकृतं तस्यास्त्रिदिवानयनं सङ्घटते इति वाच्यम्। भगीरथार्थमवतरन्त्यास्तस्या मेरौ पतने तत्र निपत्य स्वत एव दिक्षु प्रवहन्त्याः पतनवेगधारणार्थं शिवप्रसादनस्याकर्तव्यत्वेन तदुक्त्यसङ्घटनात्। अस्मिन्पक्षे मेरौ तन्निपातोक्तिस्त्रिविक्रमावतारकालवृत्तान्तविषया वाच्या, तदा मेरौ निपतिता ततः प्रभृति भुवि अद्यपर्यन्तं प्रवहन्त्येव वर्तमाना, 'जगतः पावनार्थाय सा प्रयाति चतुर्दिश'मित्युदाहृतविष्णुपुराणादवगतेति तस्यामिह सत्यां त्रिदिवात्तदानयनार्थं भगीरथप्रयत्नस्यासङ्घटनाच्च। तस्मात्तत्सङ्घटनाय 'नेयमाकाशगङ्गे'ति रामायणवचनस्वारस्यलाभार्थं च ब्रह्मलोकस्थिता हैमवती भगीरथेन तपोभिरानीता शिवेन च शिरसा धृता सागरानभिपावितवती तदभेदोपचारेण तद्वृत्तान्तस्यैव तस्यां विष्णुपुराणादिषु वर्णनमित्येव कल्पनं युक्तम्। ध्रुवलोकाद्भगीरथेन तपोभिर्विष्णुपद्यानीतेति कल्पनेऽपि त्रिविक्रमावतारकालमारभ्य मेरूपरि निपत्य प्रवहन्त्यां शिवधृतत्वादितद्वृत्तान्तवर्णनस्य तदभेदोपचारमूलत्वकल्पनावश्यम्भावादिति।

तदतिपेलवम्। वामनपुराण एव 'विष्णवङ्घ्रिणा प्रसरता कटाहे भेदितेऽम्बरात्। कुटिला विष्णुपादान्तात्पपाताकुलिता ततः। तस्माद्विष्णुपदीत्येवं नाम्ना ख्यातिरभून्मुन'इति कुटिलाया विष्णुपदीनामकत्वे, ततः अम्बरादाकुलिता कुटिला विष्णुपादान्तात्पपातेति साक्षाद्भगवत्पादान्तसम्बन्धस्यैव हेतुत्वेन कथनात्, केदारखण्डेऽपि 'कमण्डलुगतेनैव अम्भसा चावनेजने। तत्पादसम्पर्कजलाच्च जाते'ति गङ्गायाः पापापहत्वादिषु भगवत्पादसम्पर्कजलाज्जातत्वस्य हेतुताकथनेन कुटिलाया अपि तेन तथात्वसूचनाच्च स्वलिखितवचनानामेवोपचारपक्षे विरोधात्।

किञ्च। पूर्वश्लोके गङ्गाधारणं कालकूटास्वादनञ्च जगत्संरक्षणाय करुणया शिवेन कृतमिति प्रतिज्ञाय कथं तदित्याकाङ्क्षायां अगस्त्यपीतस्य लोकपावनेनोपकारकस्य समुद्रस्य परिपूरणं भगीरथानीतगङ्गया भविष्यतीति भारतीयब्रह्मवाक्यात्तद्वेगधारणेन प्रजानां विषभीतिनिवारणेन चेति समाहितम्। प्रकृते

च सभापर्वीयवाक्येन विष्णुपद्याः कमण्डलुब्रह्माण्डोपरिष्ठभेदेन द्विविधाया अपि त्रिविक्रमावतारकाले सागर एव प्रवेश उक्तः । एवं तथैव पूरणसम्भवे पूर्वोक्तभारतसन्दर्भसिद्धस्वोक्तसंरक्षणविरोधाद्वदतोव्याघातः ।

किञ्चोक्तकार्यार्थं चेद्गङ्गा ध्रियेत, तदा सागरस्मशान एव गत्वा ध्रियेत, कार्यद्वयस्य तत एव सम्भवात् । न तु हिमाद्रौ, प्रयोजनाभावात् । तस्मान्ना-त्रैवमर्थः । किन्तु धारणञ्च चरणामृतत्वादेव सकलजगत्पावनाय स्वेष्टसिद्धये च कृतम् । 'तथेति राज्ञाभिहिते सर्वलोकहितः शिवः । दधारावहितो गङ्गां पादपूतजलां हरेः । यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभू'दिति श्रीभागवतवाक्यात् । तदपि जलद्वयस्य न तु हैमवत्या एव, केदारखण्डीयवाक्ये जलद्वयं प्रस्तुत्य कपर्दपरिपूरणकथनात् । 'तपसाहं सुतप्तेन समाराध्य जनार्दनम् । यथा हरस्य मूर्धानं नमयिष्ये पितामहे'ति कुटिलोद्योगस्य वामनपुराण एवोक्तत्वात् त्वयापि तदुपगमाच्च । वाल्मीकीये गङ्गाष्टकेऽपि 'गाङ्गं वारि मनोहारि मुरारिचरणच्युतम् । त्रिपुरारिशिरश्चारिपापहारि पुनातु मा'मिति सामान्यवाक्याच्च । भगीरथेन च चरणामृतार्थमेव तपः कृतं, नतु हैमवत्यर्थम् । विष्णुपुराणे 'पौत्रस्ते त्रिदिवाद्गङ्गां भुवमानेष्यती'त्युपक्रम्य भगवद्विष्णुपादाङ्गुष्ठनिर्गतस्य जलस्यैव तन्माहात्म्यमित्यादिकपिलवाक्यात् । न चैवं विष्णुपद्याः विलम्बेनागमनाङ्गीकारे सभापर्वस्थवाक्यविरोधः शङ्क्यः । बहुषु पुस्तकेषु तस्यासत्त्वात्, सत्त्वेऽपि तत्राशुपावनीत्यन्वयात् । सागरपदस्य सगरात्मजनिखाते योगरूढत्वेन त्वद्रीत्या तदानीं तदभावेन वाक्यविरोधाच्च । न च पातविलम्बस्य काल्पनिकत्वं शङ्क्यं, पञ्चमस्कन्धे महता कालेन युगसहस्रोपलक्षणेन 'दिवो मूर्धन्यवततारयत्तद्विष्णुपदमाहु'रिति ध्रुवंलोकावध्यागमन एव तत्कल्पसमासेरुक्तत्वाद्, विष्णुपुराणे कालस्यानुक्तत्वेन तदसङ्घटनाभावाच्च । न च रामायणोक्तब्रह्मोद्देश्यकभगीरथतपःकरणविरोधः शङ्कनीयः । मेरावपि ब्रह्मसदन एव निपातेन ब्रह्मपुराणीयगोदामाहात्म्ये 'गङ्गेयं सरितां श्रेष्ठा सर्वकामप्रदायिनी । त्रिदैवत्या मुनिश्रेष्ठे'ति कथनेन च तदविरोधात् ।

अतोत्रायं निष्कर्षः । भगीरथावसरे मेरौ ब्रह्मसदने निपत्य चतसृषु दिक्षु भोगभूम्यात्मकेषु वर्षेषु स्वल्पेन प्रवाहेणागता, 'नन्दा चालकनन्दा च सरितौ बाह्यतः पुरः । तीर्थपादपदाम्भोजरजसातीव पावन' इति चतुर्थस्कन्धीयालकावर्णनवाक्यात् । अवशेषेण तु प्रचीयमाना तत्रैव हि स्थिता, पापामर्जनभीत्या कर्मभूमौ भारते वर्षे नागतेति च । 'कोऽपि धारयिता वेगं पतन्त्या

मे महीतले। अन्यथा भूतलं भित्त्वा नृप यास्ये रसातलम्। किं वाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम्। मृजामि तदघं कुत्र राजंस्तत्र विचिन्त्यता'मिति नवमस्कन्धीयगङ्गावाक्यादवसीयते। एवं च भगीरथस्य ब्रह्माणमुद्दिश्य शिवमुद्दिश्य च गङ्गावतरणाय वेगधारणाय च तपःकरणं प्राञ्जलमेव सङ्गतं भवति। नतु हैमवत्यर्थम्। प्रचयाभावेन दुर्धरतद्वेगस्यायौक्तिकत्वात्।

सत्यलोक एव जलत्रयस्यैकीभूयाकाशे प्रवहणात्सर्वस्यैवाकाशगङ्गात्वं, न तु केवलं कटाहविवरादागतस्यैवेति च।

कालकूटधारणमपि न केवलं स्वसामर्थ्यादेव, किन्तु भगवन्मन्त्रोऽपि तत्र सहायभूतः। 'अच्युतानन्तगोविन्दपदमानुष्टुभं शुभम्। ॐ नमः सम्पुटीकृत्य जपन्विषमधाच्छिव'इति भविष्योत्तरीयापामार्जनस्तोत्रे वाक्यादित्यलं विस्तरेण वाचाम्।

माण्डूक्यश्रुतिस्तु प्रागेव तापनीयविचारे विचारिता। ईशानमन्त्राश्च महानारायणोपनिषद्विचारे। आयुष्यसूक्तशिवसङ्कल्पसूक्तादिपठिता अपि मन्त्रास्तेनैव विचारितप्रायाः। केचित्पृथगपि विचारिताः। तथा नमोलिङ्गका अपि। तस्मान्निर्व्याजं सर्वाधिपत्यं नमःशेषित्वादिकं च भगवत्येव पर्यवस्यतीति विरुद्धधर्माश्रयो निरुपाधिर्महाविभूतिरानन्दाकारो भगवानेव सकलवेदवेदान्तप्रतिपाद्यः। परमशिवस्तु तस्य मुख्यविभूतिरूपः सगुण एवेति सिद्धम्।

---

यत्तु द्वात्रिंशे बृहदारण्यकछान्दोग्यस्थदहरविद्ययोर्मायोपहितशिवपरत्वं प्रतिपादितं, यदपि 'सर्वस्य वशी सर्वस्येशाने'त्यादेर्बृहदारण्यकवाक्यस्य निर्विशेषप्रकरणस्थत्वेऽपि निर्विशेषे वशित्वाद्यभावेन सगुणोपाधिविशेषणोपाधिविशेषगतगुणाम्नानद्वारा तत्स्तुतिपरत्वमङ्गीकृतं, यदपि त्रयस्त्रिंशे प्रणवपादादिनिरूपिकाया माण्डूक्यश्रुतेर्नृसिंहोत्तरतापनीयैकवाक्यतया शिवपरत्वं व्यवस्थापितं, तत्तु त्रयोदशश्लोकदूषणावसरे प्रागेव दूषितामिति पुनस्तदर्थं न प्रयतामह इत्याह माण्डूक्येत्यादि। त्रयस्त्रिंश उक्तानामीशानादिमन्त्राणां चतुस्त्रिंशे उक्तानामन्येषां मन्त्राणाञ्च शिवपरत्वं तस्य विभूतिमुख्यत्वेन स्तावकतयेति पूर्वप्रतिपादितमहोपनिषद्विचारादेव सिद्धमतस्तत्रापि न पुनरुद्योग इत्याह ईशानेत्यादि। अतःपरं यत्तेन षड्विंशे श्लोके पुराणवचनैः शिवस्य परभावः प्रतिपादितः सोऽपि सव्याज एवेति बोधयितुं पुराणतात्पर्यन्निरूपयिष्यन् पूर्वोक्तानुसन्धानाय वैदिकतात्पर्यनिर्णयसिद्धमाह तस्मादित्यादि।

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति' इति ब्रह्माण्डप्रथमाध्यायवाक्यात् पुराणादिना वेदार्थो निश्चेतव्य इत्यतः पुराणार्थमुपन्यस्यति

अयमेव चार्थो निखिलपुराणेषु प्रतिपाद्यते। तदपि दिङ्मात्रमिह प्रदर्शयामः। तथाहि श्रीभागवते दशमस्कन्धोपान्त्ये–'राजोवाच–देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम्। प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम्। एतद्वेदितुमिच्छामः सन्देहोऽत्र महान् हि नः। विरुद्धशीलयोर्विभ्वोर्विरुद्धा भजतां गति'रिति परीक्षिता पृष्टे, 'श्रीशुक उवाच–शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः। वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा। ततो विकारा अभवन् षोडशामीषु कश्चन। उपधावन् विभूतीनां सर्वासामश्नुते गतिम्। हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः। स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवे'दिति शुकेनोत्तरितम्। तेन भगवतः शिवस्य च प्रकृतिपरत्वशश्वच्छक्तियुक्तत्वाभ्यां निर्गुणसंवृतत्वाभ्यां च परापरभावो बोधितस्तथा च भगवतो विभूतिमत्त्वं शिवस्य विभूतित्वं स्फुटति, तदपि तत्तद्भजनफलाभ्यां सर्वविभूतिप्राप्तिनिर्गुणभवनरूपाभ्यां बोधितम्। किञ्चैतदग्रे वृकासुरोपाख्याने शिवसङ्कटमोक्षमुक्त्वा परमशिवत्वमपि बोधितं, 'अहो देव महादेव पापोऽयं स्वेन पाप्मना। हतः को नु महत्स्वीश जन्तुर्वै कृतकिल्बिषः। क्षेमी स्यात् किमु विश्वेशे कृतागस्को जगद्गुरौ' इतिविश्वेशादिपदाभ्याम्। भगवतस्ततोऽपि परत्वं च, 'य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः। गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथारिभि'रितिपरादिपदैः संसृतिमोक्षरूपफलकथनेन च। एतदग्रिमाध्याये भृगुकृतपरीक्षायामपि त्रिषु गुणमूर्तिष्वपि विष्णोरेवाधिक्यमुक्तम्। 'भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभय'मिति गुणमूर्तेरप्यपराधबाहुल्ये निर्विकारताप्रतिपादनात्। 'त्वया खलु पुराणानि सेतिहासानि कृत्स्नशः। आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत। यानि वेदविदां श्रेष्ठो भगवान् बादरायणः। अन्ये च मुनयः सूत परावरविदो विदुः। वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनु-

---

अयमित्यादि। तत्र श्रीमद्भागवतस्यात्यन्तनिर्णायकत्वं बोधयिष्यन् पूर्वं तदर्थं तत्राह **तथा-हीत्यादि**। तदपीति, विभूतित्वं विभूतिमत्त्वमपि फलाभ्यामिति। फलस्य तात्पर्यनिर्णयलिङ्गत्वादिति भावः। शिवोऽत्र परम एव विभूतित्वेन विवक्षितो न तु संहाराधिकारीत्याशयं प्रकटयति **किञ्चेत्यादि**। भगवानपि न स्थित्यधिकारीत्याह **भगवत इत्यादि**। गुणिविष्ण्वादिभ्यस्तेन गुणिरुद्राधिक्यं व्यवस्थापितं, तत्र कटाक्षं कुर्वन्नाह **एतदित्यादि**। प्रमाणबलविचारेणाप्यस्यार्थस्य निर्णीतत्वमाह **किञ्च त्वयेत्यादि**।

प्रह्लाद' इति तस्य बहुज्ञत्वमनूद्याग्रे 'तत्र तत्राञ्जसायुष्मन्भवता यद्विनिश्चितम्। पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसी'ति । तथा 'अतः साधोऽत्र यत्सारं समुद्धृत्य मनीषया। ब्रूहि नः श्रद्दधानानां येनात्मा सुप्रसीदती'ति प्रथमस्कन्धे आत्मप्रसादैकैकान्तश्रेयोरूपपुराणेतिहासधर्मशास्त्रसारप्रश्नात्। द्वादशस्कन्धे च 'सर्ववेदान्तसारं हि श्रीभागवतमिष्यते' इति वाक्यात् 'सर्ववेदेतिहासानां सारं सारं समुद्धृतमि'ति वाक्याच्च श्रीभागवतं वेदान्तार्थनिष्कर्षरूपमिति, तेनाऽपि श्रुतीनां पूर्वोक्त एवार्थोऽतिनिश्चितो भवति।

किञ्च वेदव्याख्यानरूपभारतकरणोत्तरमप्यपरितोषे तन्निवृत्त्यर्थं नारदोपदेशेन क्रियमाणे समाधौ स्वयमनुभूयेदमुक्तम् 'भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले। अपश्यत्पुरुषं पूर्णं मायां च तदुपाश्रयाम् । यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम् । परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते । अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे । लोकस्याजानतो व्यासश्चक्रे सात्त्वतसंहिताम्। यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे। भक्तिरुत्पद्यते पुंसः शोकमोहभयापहे'ति कथनात्। अग्रे 'शुकमध्यापयामासे'ति श्रुत्वा शौनकादिभिः 'स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः। कस्य वा बृहतीमेतामात्मारामः समभ्यस'दिति पृष्टे, 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरि'रिति सूतोत्तरात्। 'परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया। गृहीतचेता राजर्षे आख्यानं यदधीतवान्। तदहं तेऽभिधास्यामि महापौरुषिको भवा'निति द्वितीयस्कन्धे शुकवाक्याच्च तादृशाऽधिकारिणा एतदादरेण गृहीतं कथितञ्च । अतोऽपीदमेव निर्विचिकित्सं शास्त्रार्थनिश्चायकमिति सर्वसारमिति सर्वत्रायमेवार्थो बोद्धव्यः।

एवं वैष्णवेऽपि प्रष्टव्यम्। तत्रापि 'सोऽहमिच्छामि तत्वज्ञ त्वत्तः श्रोतुं जगद्यथा । बभूव भूयश्च यथा महाभाग भविष्यति । यन्मयं च जगत्सर्वं यतश्चैतच्चराचरम् । लीनमासीत्पुरा यत्र लयमेष्यति यत्र चे'त्यादि मैत्रेयप्रश्ने 'अविकाराय शुद्धाय चे'त्यारभ्य 'सर्गस्थितिविनाशानां जगतो यो जगन्मयः।

---

वक्त्रवस्थाविचारेणाऽपि प्रमाणोत्कर्षमाह किञ्च वेदेत्यादि । प्रचारयितृस्वरूपविचारेणाप्याह अग्र इत्यादि ।

भगवान् वासुदेव एव परब्रह्मेति श्रीभागवतसिद्धनिर्णयं विष्णुपुराणेऽप्यतिदिशन्स्तदर्थमाह एवमित्यादि । अत्र प्रश्नलिखनमुखेन ब्रह्मकार्यलक्षणेन ब्रह्मजिज्ञासुत्वं

मूलभूतो नमस्तस्मै विष्णवे परमात्मने' इत्यादिभिर्नमस्कृत्य, 'परः पराणां परमः परमात्मात्मसंस्थितः। रूपवर्णविनिर्देशविशेषेण विवर्जितः। अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः। वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम्। सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततः स वासुदेवेति विद्वद्भिः परिपठ्यते। तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम्। एकस्वरूपं च सदा हेयाभावाच्च निर्मलम्। तदेतत्सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत्। तथा पुरुषरूपेण कालरूपेण च स्थितम्। परस्य ब्रह्मणो रूपं पुरुषः परमं द्विजे'त्यादिभिर्नामनिरुक्तिपूर्वकं विरुद्धधर्माश्रयं मूलरूपमुक्त्वा, 'व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापर'मित्यादिभिः सर्वं तत्प्रश्नमुपक्रमे उत्तरयित्वा सर्वपुराणकथनोत्तरमुपसंहारेऽपि'मनुरप्याह वेदार्थं संस्मृत्य द्विजसत्तम। तदर्थः श्रूयतामत्र सम्बन्धे गदतो मम। द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती'ति मनुतात्पर्यमुक्त्वा' 'द्वे विद्ये वेदितव्ये इति चाथर्वणीश्रुतिः। परया त्वक्षरप्राप्तिर्ऋग्वेदादिमयापरे'ति तयोर्विद्ययोः स्वरूपमुक्त्वा पराप्रतिपाद्यस्य परब्रह्मणोऽक्षरस्य स्वरूपमाह—'यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्। अनिर्दिश्यमरूपं च पाणिपादाद्यसंयुतम्। विभुं सर्वगतं नित्यं भूतयोनिमकारणम्। व्याप्यव्याप्यं यतः सर्वं तं वै पश्यन्ति सूरयः। तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिणाम्। श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्। तदेव भगवद्वाच्यं स्वरूपं परमात्मनः। वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मन'इति। ततस्तस्य भगवदादिशब्दवाच्यताप्रकारमाह—'अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज। पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः। शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्तते। मैत्रेय भगवच्छब्दः सर्वकारणकारणे। संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः। नेता गमयिता स्रष्टा गकारार्थस्तथामुने। ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गिता। वसन्ति सर्व-

---

मैत्रेयस्य बोधितम्। नमस्कारमुखेन प्रतिपाद्यं प्रदर्शितम्। सर्वत्रासाविति। सर्वत्रासौ वसति, समस्तं चात्र वसतीत्यन्वयः। सन्देहाभावार्थमुपक्रमोपसंहारयोरवैषम्यन्दर्शयितुमाह उपसंहारेत्यादि। आथर्वणी श्रुतिरिति, मुण्डकोपनिषत्। परविद्याप्रतिपाद्यस्याक्षरस्य निष्कृष्टं स्वरूपमाह तद्विष्णोः परमं पदमिति, पदं स्थानम्। औपचारिक इति। अक्षरेऽप्यौपचारिकश्चेत्तदंशेषु सुतरां तथेति बोधितमेतेन। भगवच्छब्दस्य मुख्यवृत्त्या यत्र योगोरूढेरुपष्टम्भाय तं विशदयति शुद्ध इत्यादि। भगवच्छब्दस्य ज्ञानिनि पारिभाषिकत्वं

भूतानि सर्वभूताखिलात्मनि । सर्वभूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः । एवमेष महाशब्दो भगवानिति सत्तमः । परमब्रह्मभूतस्य वासुदेवस्य नान्यतः । तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारतः । उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्योभगवानिति । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः । सर्वाणि तत्र भूतानि वसन्ति परमात्मनि । भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः'इति । तथाग्रेऽस्मिन्नर्थे सम्मतिमप्याह-'खाण्डिक्यजनकायाह पृष्टः केशिध्वजः पुरा । नामव्याख्यामनन्तस्य वासुदेवस्य तत्त्वतः । भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानि यत् । धाता विधाता जगतां वासुदेवस्ततः स्मृतः' इत्यादिना 'स ईश्वरो व्यक्तसमस्तरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः । सर्वेश्वरः सर्वगतः सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः । स ज्ञायते येन सदस्तदोषं शुद्धं परं निर्मलमेकरूपम् । सन्दृश्यते वाप्यथ गम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्त'मितिमनुकेशिध्वजसम्मतिपूर्वकमुपक्रमोक्तमर्थं निगमयामास ।

किञ्च, ' ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युते'ति स्निग्धं दृष्ट्वा पराशरः शिष्यमैत्रेयाय गुह्यमिदमुपदिष्टवान् ।

मैत्रायणीयोपनिषदि मैत्रेयोऽपि स्वशिष्याय शाकयन्यायेदमेवोपदिष्टवानिति ।

श्रीभागवते च 'विदुरायोवाचे'त्यपि ।

तस्मादत्रापि भगवन्मूलरूपो विरुद्धधर्माश्रयो निरुपाधिरेव प्रतिपादितः ।

तथा आग्नेयेऽपि । उपक्रमे 'ऋषय ऊचुः–सूत त्वं पूजितोऽस्माभिः सारात्सारं वदस्व नः । येन विज्ञातमात्रेण सर्वज्ञत्वं प्रजायत' इति प्रश्ने, 'सूत उवाच–

---

बोधयन्नाह उत्पत्तिमित्यादि । तेन भगवद्व्यतिरिक्तेष्वेषा परिभाषैव प्रवृत्तिनिमित्तमिति बोधितम् । भगवत्यपारिभाषिकत्वं निगमयति ज्ञानेत्यादि ।

एतस्य पुराणस्य मैत्रायणीयोपनिषदर्थोपष्टम्भकत्वं मैत्रेयस्याधिकारित्वं द्रढयन्नाह किञ्चेत्यादि । एतेन श्रीभागवतस्य सर्ववेदान्तसारत्वं वैष्णवस्य तु किञ्चित्प्रमेयप्रतिपादकत्वेन तच्छेषत्वमिति बोधितम् ।

सर्वपुराणार्थं सङ्गृह्य तेन प्राथमिकवादप्रतिपन्नस्य प्रमेयस्य दृढत्वं समर्थयति तस्मादित्यादि ।

सर्वपुराणश्रुतिप्रतिपाद्यत्वं भगवत एवेति दृढयितुं तामसपुराणेष्वपि तस्यैव प्रतिपाद्यत्वं बोधयन्नाग्नेयपुराणार्थं दर्शयति तथा आग्नेयेत्यादि । अत्र छान्दोग्यस्थश्वेतकेतूपा-

सारात्सारो हि भगवान् विष्णुः सृष्ट्यादिकृद्विभुः । ब्रह्माहमस्मि तं ज्ञात्वा सर्वज्ञत्वं प्रजायत इति । एवं विष्णोः सारात्सारत्वं सूतः सङ्क्षेपत उवाच । सर्वं पुराणमपि कथयित्वा, समाप्त्यध्याये इदमुक्तं पुराणप्रवक्त्राग्निना महेश्वरेणैव-'अग्निरुवाच-आग्नेयं ब्रह्मरूपं ते पुराणं कथितं मया । सप्रपञ्चनिष्प्रपञ्चविद्याद्वयमयं महत् । ऋग्यजुःसामाथर्वाख्या विद्या विष्णुः सकल्पकाः । छन्दःशिक्षाव्याकरणनिघण्टुज्योतिराह्वयाः । निरुक्तधर्मशास्त्रादिमीमांसान्यायविस्तराः । विद्याश्चैवार्थशास्त्राद्या वेदान्तान्या हरिर्महान् । इत्येषा चापरा विद्या परविद्याक्षरं परम् । यस्य भावोऽखिलं विष्णुस्तया नो बाधते कलिः । अनिष्ट्वा तु महायज्ञानकृत्वा च पितृस्वधाम् । कृष्णमभ्यर्चयन् भक्त्या नैवेशो मरणे भवेत् । सर्वकारणमत्यन्तं विष्णुं ध्यायन्न सीदति । अल्पतन्त्रादिदोषो वा विषयाकृष्टमानसः । कृत्वापि पापं गोविन्दं ध्यायन् पापैः प्रमुच्यते । तद्ध्यानं यत्र गोविन्दः सा कथा यत्र केशवः । तत्कर्म यत्तदाराध्यं किमन्यैर्बहुभाषितैः । तत् पितापि च पुत्राय शिष्याय च गुरुर्द्विजः । परमार्थपरं ब्रूयाद्यदेतत्ते मयोदितम् । संसारे भ्रमता लभ्यं पुत्रदारा धनं वसु । सुहृदस्तु तथैवान्ये नोपदेशो द्विजेदृशः । किं पुत्रदारैर्वित्तैर्वा किं मित्रक्षेत्रबान्धवैः । उपदेशः परो बन्धुरीदृशो यो विमुक्तये । द्विविधो भूतसर्गोऽयं दैवतोऽसुर एव च । विष्णुभक्तिपरो दैवो विपरीतस्तथासुरः । एतत्पवित्रमारोग्यं धन्यं दुःस्वप्ननाशनम् । सुखप्रीतिकरं नृणां मोक्षे

---

ख्यानप्रसिद्धे महावाक्ये भगवानेव प्रतिपाद्यत इति बोधयितुमुपक्रमस्थप्रश्नोत्तरे दर्शिते । श्रुतावेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया उपक्रम एव दर्शनाद्, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'तितदभेददर्शनेन सर्वविज्ञानप्रतिज्ञापूर्तेरुपसंहारे च दर्शनात् । तथा च तदुपबृंहणरूपत्वमेवात्र मुख्यमिति बोधितम् । आग्नेयमित्यादिना परापरविद्यास्वरूपकथनेन मुण्डकोपबृंहणत्वं विष्णुपुराणसामानाधिकरण्यं च बोधितम् । अनिष्ट्वेत्यादीनां छान्दोग्यमुण्डकादिश्रुतीनां भक्तावेव तात्पर्यमिति बोधितम् । श्वेताश्वतरे 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इत्युपसंहारे श्रावणात् । छान्दोग्येऽपि आत्मत्वेन ज्ञातेऽपि ब्रह्मणि सर्वज्ञत्वोपपत्तौ सृष्ट्यादिमाहात्म्यकथनस्य प्रयोजनान्तराभावान्माहात्म्यत्वोपदेशाभ्यां माहात्म्यज्ञानस्य भक्तिपूर्वाङ्गत्वेन निरुपधिस्नेहस्य भक्तिस्वरूपत्वेन च 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'तिपञ्चरात्रोक्तलक्षणकभक्तेरेव सूचनात् । 'आवृत्तिरसकृदुपदेशा'दितिसूत्रे, उपदेशत्वेन महावाक्यस्य बोधनादत्राप्युपदेशस्यैव तत्पितेत्यादिनोत्कृष्टत्वबोधनेन तदुपबृंहणाच्च 'द्विविधो भूतसर्गश्चे'त्यादिना 'यस्य देवे परे'त्यादिश्वेताश्वतरोपसंहारोपबृंहणाच्च ।

कृत्यन्तु चेष्टित'मिति । तेन सकलसारसारभूत'अक्षु'रित्यादिश्रुत्युक्तरीतिको भगवानेव परमोत्कृष्टो भगवतोऽधिको नान्यो, भगवद्भक्त एव, 'दैव इतर आसुर'इतिप्रतिपादितमिति तत्रापि स एवार्थः ।

तथा वाराहपुराणेऽपि । 'योऽसौ नारायणो देवः परमात्मा सनातनः । भगवान् सर्वभावेन उताहो नेति संशय'इति धरण्या पृष्टे, 'वाराह उवाच— 'मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः । रामो रामश्च कृष्णश्च बौद्धः कल्की च ते दश । इत्येताः कथितास्तस्य मूर्तयो भूतधारिणि । दर्शनं प्राप्तुमिच्छूनां सोपानानीव शोभने'इत्यवताराणां दिदृक्षुसोपानत्वमुक्त्वा, ततो 'यत्तस्य परमं रूपं तन्न पश्यन्ति देवताः । अस्मदादिस्वरूपेण पूजयन्ति ततो हृति'मित्यनेन मूलरूपस्यादृश्यत्वमुक्त्वा, ततो 'बह्वयो भगवतो मूर्त्यो रजसस्तमसस्तथा । याभिः संस्थाप्यते विश्वं स्थितं सञ्चाल्यते च हे'तिमूर्तिभिः सृष्ट्यादिकर्तृत्वमुक्त्वा, ततः 'त्वमेका तस्य देवस्य मूर्तिराद्या धरा धरे'इत्यादिना पृथिव्यप्तेजोवाय्वाकाशाख्याः पञ्चमूर्त्तीरुक्त्वा एवमष्टौ निरूप्य, 'आभिर्व्याप्तमिदं सर्वं जगन्नारायणेन हि'इति मूर्तिभिः सर्वव्याप्त्या पूर्वोक्तहेतुद्वयेन च नारायणस्य सर्वभावेन भगवत्त्वमाह । ततोऽग्रे रुद्रादिवाक्यैरपि प्रागितिहासेऽयमेवार्थो दृढीक्रियते ।

तथैव मार्कण्डेये । पुराणावतार एव जैमिनिना मार्कण्डेयं प्रति भारतार्थं तत्त्वतो ज्ञातुं प्रथमत इदमेव पृष्टं–'कस्मान्मानुषतां प्राप्तो निर्गुणोऽपि जनार्दनः ।

---

श्रुत्युक्तरीतिक इति सारात्सारत्वकथनेन साराधिदैवत्वबोधनात् तथेत्यर्थः । एतेन सकलपरविद्यासारत्वमक्षरात्मकस्य शिवस्य तत्सारत्वं भगवत इति निश्चीयते पुराणाकूतमितिबोधितम् । स एवार्थ इति । श्रीभागवतशेषरूप इत्यर्थः ।

वाराहेऽप्यतिदिशति तथेत्यादि । अत्र 'योऽसौ नारायण' इति प्रश्नमुखेन नारायणशब्दाङ्कितश्रुतीनां तात्पर्यमत्र निर्णीयत इति बोधितम् । 'वराह उवाचे'त्यादिनोत्तरे च धृतिपदेन 'एष आत्मा सेतुर्विधृति'रित्यादिश्रुतिप्रतिपाद्यत्वं दर्शितम् । 'यत्तस्य परमं रूपं तन्न पश्यती'त्यादिना अदृश्यत्वं न रूपाभावात् किन्त्विच्छाभावादिति बोधितम् । पूर्वोक्तहेतुद्वयेनेति । बृहन्नारायणमुण्डकोक्तादृश्यत्वेन बृहदारण्यकोक्तधृतित्वेनेत्यर्थः । तेन सर्वासां श्रुतीनां नारायणानुवाकोक्ते नारायण एव तात्पर्यं बोधितम् ।

राजसपुराणेष्वपि भगवत एव प्रतिपाद्यत्वमाह तथैव मार्कण्डेय इति । अत्रापि प्रश्नोत्तराभ्यां वेदव्याख्यानरूपभारतस्य भगवत्येव तात्पर्यं, 'अद्भुतकर्मण' इत्यनेन तत्कृतितात्पर्यस्य दुर्ज्ञेयत्वञ्च बोधितम् । स्फुटमन्यत् ।

वासुदेवो जगत्सूतिस्थितिसंहारकारणम्'। तस्य चोत्तरं, मार्कण्डेयोपदिष्टैः सर्वज्ञैः पक्षिभिः पुनरपि 'कस्मान्मानुषतां प्राप्तः कृतकृत्योऽपि स प्रभुः? वासुदेवोऽखिलाधारः सर्वकारणकारण'मिति जैमिनिना पृष्टैरुक्तं, 'नमस्कृत्य सुरेशाय विष्णवे प्रभविष्णवे । पुरुषाय पुराणाय शाश्वतायाव्ययाय च । चतुर्व्यूहात्मने तस्मै त्रिगुणायागुणाय च । वरिष्ठाय गरिष्ठाय वरेण्यायामिताय च । यज्ञाङ्गायाखिलाङ्गाय वेदार्थैरीडिताय च । यस्मादणुतरं नास्ति यस्मान्नास्ति बृहत्तरम् । येन विश्वमिदं व्याप्तमजेन जगदादिना ! आविर्भावतिरोभावदृष्टादृष्टविलक्षणम् । वदन्ति यत्सृष्टमिदं तथैवान्ते च संहृत'मित्येतैः स्वरूपकथनपूर्वकं नमस्कृत्य, ततो 'ब्रह्मेशाना'वेकैकश्लोकेन नत्वा, ततोऽग्रे, 'प्रवक्ष्यामो मतं कृत्स्नं व्यासस्याद्भुतकर्मणः । येन भारतमुद्दिश्य धर्माद्याः प्रकटीकृताः । आपो नारा इति प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः । स देवो भगवान्सर्वं व्याप्य नारायणो विभुः । चतुर्धा संस्थितो ब्रह्मन्सगुणो निर्गुणस्तथा । एका मूर्तिरनिर्देश्या शुक्लां पश्यन्ति तां बुधाः । ज्वालामालोपरुद्धाङ्गीं निष्ठा सा योगिनां परा । दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा । वासुदेवाभिधानासौ निर्ममत्वेन दृश्यते । रूपवर्णादयस्तस्या न भावाः कल्पनामयाः । अस्त्येव सा सदा शुद्धा स्वप्रतिष्ठैकरूपिणी । द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारत्यधः । तामसी सा समाख्याता तिर्यक्त्वं च समाश्रिता । तृतीया कर्म कुरुते प्रजापालनतत्परा । सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी । चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा । रजस्तस्या गुणः सर्गं सा करोति सदैव ही'त्युक्त्वा, 'यदा यदा हि धर्मस्य ग्लानिर्भवति जैमिने। अभ्युत्थानमधर्मस्य तदात्मानं सृजत्यसा'विति भारतस्थं व्यासमतं प्रकाशितम् । एवं चात्रापि निर्गुणस्य वासुदेवस्य साकारस्य स्वप्रतिष्ठितत्वं प्रतिपाद्यते इति पूर्वोक्त एवार्थो व्यासाशयगोचर इति फलति ।

तथा पाद्म उत्तरखण्डे पार्वतीं प्रति शिवेनैव महता प्रबन्धेन भगवतः सर्वेश्वरत्वमनुपाधिकत्वं स्वस्य तदाज्ञाकारित्वं च प्रतिपादितं त्रिंशाध्यायादारभ्य । तत्र पूर्वं, 'भगवँस्त्वं परो देवः सर्वज्ञः सर्वपूजितः । त्वल्लिङ्गमर्च्यते देवैः शिवब्रह्मादिकैरपि । त्वत्तो लभन्तेऽभिमतां सिद्धिं सर्ववरप्रद । त्वं जन्ममृत्युरहितः स्वयम्भूः सर्वशक्तिमान् । सदा ध्यायसि किं स्वामिन् दिग्वासा मदनान्तकः ? तपश्चरसि कस्मात्त्वं जटिलो भस्मधूसरः ? किं वा जपसि देवेश परं कौतूहलं हि मे ? अनुग्राह्या प्रिया तेऽस्मि तत्त्वं कथय सुव्रत'इति देव्या पृष्टे

'श्रीमहादेव उवाच 'नेदं कस्यापि कथितं गोपनीयमिदं मम। किन्तु वक्ष्यामि ते भद्रे त्वं भक्तासि प्रियासि मे। पुरा देवयुगे देवि विशुद्धमतयोऽखिलाः। यजन्ति विष्णुमेवैकं ज्ञात्वा सर्वेश्वरेश्वरम्। प्रयान्ति परमामृद्धिमैहिक्यामुष्मिकीं द्रुतम्। या न प्राप्या सुरैः सर्वैरक्षया क्लेशवर्जिता। न तां गतिं प्रपद्यन्ते विना भागवतान्नरात्। मन्मुखादपि संश्रुत्य देवा विष्णुबहिर्मुखाः।'इत्यादिना पुराकल्पमुक्त्वा, ततः 'अलब्ध्वा चात्मनः पूजां सम्यगाराधितो हरिः। मया चास्मादभिश्रैष्ठ्यं वाञ्छताहङ्कृतात्मना। ततः साक्षाज्जगन्नाथः प्रसन्नो भक्तवत्सलः। अंशांशेनात्मनैवेतान् पूजयामास केशवः।'इत्यादिभिस्तत्कृतं देवपूजनं, ततो 'द्वापरादौ युगे भूत्वे'त्यादिना जनविमुखीकरणाय स्वज्ञापनं, स्वपावित्र्याय भगवता दत्तं सहस्रनामस्तोत्रं चोक्त्वा, ततो भगवत्पूजाविधिं नारायणाष्टाक्षरमन्त्रार्थादिकं चोक्त्वा, मायाप्रार्थनया ब्रह्मप्रार्थनया च 'अन्यसृष्टिं भगवतः' 'सर्वतः पाणिपादान्तत्वादि' च निरुपधि सर्वैश्वर्यं चोक्त्वा, ततः स्वोत्पत्तिमाह—'अथ नारायणः काममध्यायत स चेतसा। ध्यानान्ते तस्य भालात्तु स्वेदबिन्दुरजायत। स स्वेदो बुद्बुदाकारः पृथिव्यामपतत् क्षणात्। तस्मात्तु बुद्बुदात्सोऽहमुत्पन्नोऽस्मि वरानने। त्र्यक्षश्च शूलहस्तोऽहं जटामुकुटमण्डितः। किं करोमीति देवेशमवोचं विनयान्वितः। ततो नारायणो देवो मामित्याह मुदान्वितः। करोषि जगतां रुद्र संहारं भीमदर्शनः। साक्षात्सङ्कर्षणांशेन संहारार्थं वरानने। तस्मान्नारायणाद्देवादुत्पन्नोऽस्मि भयङ्कर'इति। मध्ये च तैत्तरीयोपनिषत्पुंसूक्तमन्त्रानपि पपाठ; व्याचख्यौ च। तस्मादत्रापि पूर्वोक्त एवार्थ इति दिङ्मात्रेण दर्शितम्।

एवमेव गारुडब्राह्मब्रह्मवैवर्तादिषु महापुराणेषु, नारसिंहबृहन्नारदीयबृहद्वामनप्रभृतिषूपपुराणेषु च प्रतिपादितं, विस्तरभयान्न लिख्यते।

न चात्रार्थवादत्वं सचेतसा शङ्कितुमपि शक्यं, 'पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः। तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हि। समस्तकर्मनिर्मूलसाधनानि नराधमाः। पुराणान्यर्थवादेन ब्रुवन्नरकमश्नुते। यावद्ब्रह्मा सृजत्येतज्जगत्स्थावरजङ्गमम्। तावत्स पच्यते पापी नरकाग्निषु सन्ततम्। अहो हि वाक्ये चतुक्षरे द्वे पुण्यस्य पापस्य निदानभूते। उच्चारणादेव नृणां मुनीन्द्रा नारायणश्चेति तथार्थवादः। पुराणेषु द्विजश्रेष्ठाः सर्वधर्मप्रवक्तृषु। प्रवदन्त्यर्थवादत्वं ये ते निरयगामिन'इति बृहन्नारदीये प्रथमाध्याय एव दोषस्मरणात्। अथवा-

---

पाद्मस्थं तु प्रकटार्थम्। अन्यसृष्टिमिति, मोहकस्य रुद्रस्य सृष्टिम्।

दपदमत्र यद्यपि सामान्यतः प्रयुक्तं तथाप्यसदर्थवादपरमेव ज्ञेयम्, अन्यत्र बाधितार्थत्वदोषारोपानाक्रान्तत्वेन नरकजनकत्वायोगात्।

किं बहुना सर्वेष्वेव पुराणेषु भगवानेव प्रतिपाद्यते इति। 'वेदे रामायणे पुण्ये पुराणे भारते तथा। आदावन्ते च मध्ये च हरिः सर्वत्र गीयते'इति हरिवंशासमासिदशास्थवाक्यादवसीयते।

यत्तु 'पुराणैर्दशभिर्विप्राः प्रोक्तो रुद्रस्तथैव च। चतुर्भिर्भगवान् विष्णुर्द्वाभ्यामम्बा प्रकीर्तिता। अग्निरेकेन विप्रेन्द्रास्तथैकेन दिवाकरः। एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः। प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिष्वि'ति सूतसंहितावाक्यं, तत्तु शिवांशभूतसगुणविष्णुपरमिति सन्दर्भ एव स्फुटति। 'ब्रह्मविष्णुमहेशानैरुपास्यं गुणमूर्तिभि'रित्यादिवाक्यदर्शनात्। तेन न कोऽपि शङ्कांशः।

किञ्चैतादृशगुणमूर्त्युपास्यस्यापि शिवस्य सोपाधिकत्वं सूतसंहितायामेव निश्चितम्। 'उमार्धविग्रहः श्रीमान् सोमार्धकृतशेखरः। ब्रह्मविष्णुमहेशानैरुपास्यः परमेश्वर'इत्यादिभिः परमशिवस्योमासहायत्वसाम्बत्वबोधकैर्वाक्यैः।

न च तेषु परमशिवो नोक्तः किन्त्वीशानादिव्यूहान्तर्गत एव कश्चिदुच्यत इति वाच्यं, महेशानोपास्यत्वलिङ्गविरोधात्। अष्टमाध्याये च नैमिषेयैः 'कः कालाद्यनवच्छिन्न'इति पृष्टे, 'ब्रह्मणोऽन्ते मुनिश्रेष्ठा मायायां लीयते जगत्। तथा विष्णुश्च रुद्रश्च प्रकृतौ प्रलयङ्गता'वित्यादिना, 'माया च प्रलये काले परस्मिन् परमेश्वरे। सत्यबोधसुखानन्दब्रह्मरुद्रादिसञ्ज्ञितम्। अभेदेन स्थितं याति हेतुस्तत्र सुदुर्गम'इत्यन्तेन सर्वलयमुक्त्वा, 'अन्यथाभानहेतुत्वादीर्यमाणेति कीर्तिता। आत्मतत्त्वतिरस्कारात्तम इत्युच्यते बुधैः। विद्यानाश्यत्वतोऽविद्या मोहस्तत्कारणं यत'इत्यादिना तमोऽसत्कारणाव्यक्तादिशब्दवाच्यतां

---

अथाप्पयदीक्षितैः रत्नत्रयपरीक्षायां विष्णोः पुराणचतुष्टयप्रतिपाद्यत्वं न तु सर्वपुराणप्रतिपाद्यत्वमिति सूतसंहितावाक्यबलेनोक्तं, तद्दूषयितुं तद्वाक्यव्यवस्थां वदति यत्त्वित्यादि। एतेनैव पञ्चचत्वारिंशोक्तप्रभासखण्डवाक्यमपि दत्तोत्तरम्। यदपि तत्र पुराणग्रन्थसङ्ख्याबाहुल्याच्छिवोत्कर्ष इत्युक्तं तदपि 'चरितं रघुनाथस्य शतकोटिप्रविस्तर'मित्यादिवाक्यदर्शनाल्लिगुप्रलापतयैव फलतीतिदिक्।

प्रसङ्गात्सूतसंहितार्थमाह किञ्चेत्यादि।

ईर्यमाणेति। ईर्यतेऽन्यथाक्रियत इतीर्यं, भ्रमविषयः। तन्मानं अनुमाने लिङ्गभूतं

प्रतिपाद्य, 'एषा माहेश्वरी शक्तिर्न स्वतन्त्रा परात्मव'दित्यन्तेन मायास्वरूपकथनपूर्वकं कालस्य कल्पितत्वमुक्त्वा, 'कालो माया च तत्कार्यं शिवेनैवावृतं सदा। शिवः कालानवच्छिन्न'इति सन्दर्भान्ते कालानवच्छिन्नत्वनिगमनेन तादृशस्यापि यावत्सृष्टिकालं मायासाहित्यकथनेनोपासनायां, 'अम्बिकासहितो देवो नीलकण्ठस्त्रिलोचन'इत्यम्बिकासाहित्यकथनेनापि च कालानवच्छिन्नस्य तस्य मायोपहितपरमशिवत्वस्फुटीभावात्। नवमाध्याये च 'कृतं सत्यं परं ब्रह्म पुरुषं साम्बमीश्वर'मित्यतोऽपि । एवमेव ज्ञानयोगखण्डभक्तिखण्डयोरपि कथनाच्च।

तत्राप्येष विशेषः। अग्रे यज्ञवैभवखण्डीयत्रयोदशाध्याये 'चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमाः। अनुप्रविष्टा या संविन्निर्विकल्पा स्वयम्प्रभा। सदाकारा परानन्दा संसारोच्छेदकारिणी। सा शिवा परमा देवी शिवाभिन्ना शिवङ्करी'इत्येतैः परमशिवस्य शक्तेः स्वरूपं प्रपञ्चसृष्टिप्राक्कालवर्तिशक्त्याकारप्रविष्टसंविद्रूपमित्युक्तम् । तदध्यायव्याख्यानारम्भे च माधवाचार्यैः संविद्रूपायाः परशक्तेः परशिवादन्यत्वशङ्कया प्रसक्तं मिथ्यात्वं निरूपयितुमुपक्रमत इति प्रतिज्ञाय, 'मायैवास्य परा शक्ति'रिति भ्रमं व्युदसितुं तस्याः शक्तेः स्वरूपं दर्शयतीत्यारभ्यास्याः शिवस्य च परमार्थतः पूर्वोक्तचिद्रूपत्वाद्भेदो नास्ति इत्यर्थः, तथा च शिवशक्त्योर्भेदावभास एव मिथ्या, न तु प्रपञ्चवत्स्वरूपमित्यन्तेन परशिवत्वदशायां तदविनाभावः प्रदर्शितः। अग्रे मूलग्रन्थ एव 'जगत्कारणतापन्नः शिवया मुनिपुङ्गवाः। सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थक'इत्यादिभिरेतत्तुरीयपादघटितैः पञ्चत्रिंशश्लोकैः, 'न शिवेन विना शक्तिर्न शक्तिरहितः शिवः। उमाशङ्करयोरैक्यं यः पश्यति स पश्यती'- त्यन्तैः सर्वावस्थासु तदधीनत्वं तद्व्यतिरेकेनाशक्तत्वमविनाभावश्चोक्तः । शक्त्याकारश्च पूर्वं मायाया उक्तः। अत्र च शक्त्याकारव्याख्याने प्राणिकर्मेत्यादिनाभिमुखो भवतीत्यन्तेन प्राणिकर्मपरिपाकवशाद्विकल्पने चिद्रूपस्य किञ्चित् स्वप्रतिष्ठतापरित्यागेन मायाभिमुख्येऽङ्गीकृतः। एवं सति संविद्रूपत्वेऽपि परशक्तेर्गुणाविनाभावस्य परशिवे च तदाकारकसंविच्छक्त्यविनाभावस्य तया विना निरर्थकत्वस्य च मूल एवोक्तत्वात्। टीकायां च स्वप्रतिष्ठतापरित्याग

---

यस्याः सा ईर्यमाणेत्यर्थः। मोहस्तत्कारणं यत इति, यतः तस्य मोहस्य कारणं अतो मुह्यन्त्यनयेति करणव्युत्पत्त्या मोह इत्युच्यत इत्यर्थः। तत्कार्यं शिवकार्यम्।

ननु मायोपहितत्वं मयाङ्गीक्रियत एवेति तस्यानुवादे तव का वा इष्टसिद्धिरत आह **तत्राप्येष विशेष** इति, वक्ष्यमाणोऽस्ति विशेष इत्यर्थः। निरूपयितुमिति। अन्यत्वनिरस-

एव परशिवस्वरूपाङ्गीकाराच्च । 'मायिनं तु महेश्वर'मित्यादिभवदभिमतरीतिकस्य परशिवस्य मायाधीनपरप्रतिविम्बस्वरूपत्वेन सोपाधिकत्वं स्फुटीभवतीति ।

कौर्मवायुसंहितयोस्तु तथाकथनाभावान्निरुपाधिकस्योदितत्वादित उत्तमत्वम् । तेनैकोनचत्वारिंशश्लोकोपन्यस्तब्रह्माण्डपुराणीयसप्रणवचतुर्वेदवाक्यव्यवस्थापितः परभावो बिम्बत्वेन स्फुटति, तथाप्ययं परभावो मैत्रायणीयतापनीयोक्तदिशा तयोः साहजिकयशसः श्रियश्चानुक्त्या 'शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः'इति पादाभ्यां दशमस्कन्धे द्विविधस्थापितस्य भगवदपेक्षया अपरत्वस्फुटीकारेण च मध्यमभाव एव पर्यवस्यति ।

अत एव मात्स्ये कल्पानुकीर्तनाध्याये चतुर्विधान् कल्पानुक्त्वा 'सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते । अग्नेः शिवस्य माहात्म्यं तामसेषूपवर्ण्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः । सात्त्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुच्यते । तत्रैव योगसंसिद्धा गमिष्यन्ति पराङ्गति'मिति चोक्त्वाग्रे उच्यते 'ब्राह्मसंवत्सरशतादेकाहः शैव उच्यते । शैववर्षशतादेकं निमेषं वैष्णवं विदु'रिति ।

किञ्च, पुराणसङ्ख्यानुक्रमणिकाध्यायेऽप्येवं सङ्कीर्णादिविभाग उच्यते, तेन तत्कल्पानुसारिधर्मादिवक्तॄणां पुराणानामपि तथात्वमायाति । तत्र सर्वेषु

---

नेन मिथ्यात्ववारणमत्र फलति निवारयितुमिति वा पाठो भविष्यति । मायाधीनपरेत्यादि । तथा च मायाधीनत्वशक्त्यधीनसामर्थ्यकत्वाभ्यां कृत्वा स्वतःसामर्थ्याभाव इति विशेषः । भगवतस्तु स्वशक्त्यनधीनत्वमित्यपि, 'अनन्वितं ते भगवन्विचेष्टितं यदात्मना चरसि हि कर्मनाज्यसे । विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्तिनीं भवा'नित्यादिवाक्येभ्य इत्यर्थः ।

कौर्मवायुसंहितयोरिति । इदं शिवपुराणपाद्मादीनामप्युपलक्षणम् । एतावत्कथनेन सिद्धमाह तेनेत्यादि । तथा च त्वया क्वचित्सूतसंहितासम्मतिः प्रदर्श्यते क्वचित्कौर्मादीनाम् । तेषां तु परस्परमेवं विरोधस्तेनैकस्यैव प्रतिबिम्बत्वबिम्बत्वयोर्विरोधादसङ्गतिरिति भावः । यथा कथञ्चित्समाधानेऽपि परत्वप्रतिरोधमाह तथापीत्यादि । एतेनैव संहाररुद्रस्य त्रिमूर्तिमुख्यत्वं त्रयोदशे उक्तम् । 'तप्तायःपिण्डवद्विप्रा रुद्रमूर्तिः परस्य तु । मूर्त्या तुल्यान्यमूर्तिभ्यो लक्षणैर्मुनिसत्तमा' इत्यादिसूतसंहितावाक्यैस्तदपि यक्षबलिन्यायमेवानुसरतीत्यपि बोधितम् ।

साधितस्य मध्यमभावदृढीकरणाय तत्प्रसङ्गेन सप्तचत्वारिंशोक्तार्थदूषणाय च मात्स्योक्तकल्पविभागवाक्यानि सम्मतित्वेनाह अत एव मात्स्य इत्यादि ।

एवं कालपरिच्छेदेन मध्यमत्वं पोषयित्वा फलतोऽपि पोषयितुमाह किञ्चेत्यादि ।

पुराणेषु यथोक्तधर्माचरणान्मुक्तिरेव फलमुच्यते यद्यपि, तथापि 'तत्रैव योगसंसिद्धा गमिष्यन्ति परां गति'मितिमात्स्यस्य पुराणत्रैविध्यमुपक्रम्य, 'सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः स्मृताः । तथैव तामसा देवि निरयप्राप्तिहेतव' इति पाद्मोत्तरखण्डद्विचत्वारिंशाध्यायस्थशिववाक्यस्य 'पार्थिवाद्दारुणो धूमस्तस्माद्ग्निस्त्रयीमयः । तमसस्तु रजस्मात्सत्त्वं यद् ब्रह्मदर्शन'मिति प्रथमस्कन्धद्वितीयाध्यायवाक्यस्य च विचारे तामसराजसपुराणोक्तधर्माचरणात्तामसराजसावस्थात्यागरूपैव मुक्तिरायाति, न तु परमा; उक्तवाक्यविरोधात् । उक्तप्रकारादरणे सर्वसामञ्जस्याच्च। एवं च फलतोऽपि शिवस्वरूपस्य मध्यमभावसिद्धिः । न च 'निरयप्राप्तिहेतव'इति वाक्यविरोधः । नितरां अयो निरयः मानुषं सुखमिति यौगिकार्थग्रहणे सामञ्जस्यात् ।

एवं च सात्त्विककल्पान्प्रस्तुत्य यत् कौर्मे उक्तं 'ध्यानं तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः । आराध्य मां च गिरिशं यान्ति तत्परमं पद'मिति, तदपि साक्षात्प्राप्तिक्रमप्राप्तिभ्यां सङ्गच्छते । न च 'न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते'इति द्वादशस्कन्धे शिववाक्यात् 'क्वचिद्रुद्रः क्वचिद्विष्णुः क्वचिद्ब्रह्मा प्रशस्यते। नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन । तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति'इति कौर्मादिभ्यश्चोच्चनीचभावनिषेधान्न पूर्वोक्तं साधीय इति शङ्क्यं, तेषां स्वरूपमात्रपरत्वात् । तथाहि, श्रुतिष्विव पुराणेष्वपि सृष्टिर्गुणातीतेनैव क्रियते इति प्रकृतिपुरुषोत्पादकत्वादवसीयते । तस्य च स्वत एव सर्वाकारत्वं पूर्वमेवोपपादितमिति तदभिप्रायाणि तानि वचांसि । मध्यमभावस्तु प्रकृत्युत्पत्त्यनन्तरं तस्य रूपस्य सर्वदा तदधीनत्वादिकृतः फलविलम्बकृतश्चोच्यते । अत एवोपाधिवादोऽवकाशमाप्नोति । एवं यत्र प्रकृतिपुंसोर्न सृष्टिस्तत्र गुणमूर्तिकर्तृकावान्तरसृष्टिरेव । तत्राप्युच्चनीचभावतदभावौ गुणस्वरूपस्वस्वरूपकृतौ । एवमुभयथापि स्वरूप-

---

एषैव कूर्मपुराणीयवाक्यव्यवस्थेत्याह एवश्चेत्यादि । एतदुपष्टम्भाय न चेत्यादिना· शङ्कय समाधत्ते तेषामित्यादि । यत्तु सप्तचत्वारिंशे केषाञ्चिन्मतेन कल्पविभागमुपन्यस्य, तन्मूलेषु मात्स्यवाक्येषु 'यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते' इति वाक्यमुक्त्वा शिवादिमाहात्म्यवर्णकत्वस्य विभाजकोपाधित्वञ्चोक्त्वा, तामसत्वदशायां ब्रह्मणा उक्तत्वाच्छैवपुराणानामप्रामाण्यमापाद्य ततो बहूनां विरोधेनास्य वाक्यस्यैवाप्रामाण्यं तथैव युक्त्याशङ्क्योभयसामञ्जस्यार्थमस्य वाक्यस्य सत्त्वा-

तस्तारतम्याभावो लीलार्थं तरतमभावोऽपि फलति । भगवद्रूपं तु प्रकृत्युत्पत्त्युत्तरमपि न प्रकृत्यधीनं, 'हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः पर'इति 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थन्ते ममाहमिति दुर्धिय'इति 'अनन्वितं ते भगवन्विचेष्टितं यदात्मना चरसि कर्म नाज्यसे । विभूतये यत उपसेदुरीश्वरीं न मन्यसे स्वयमनुवर्ततीं भवा'निति दशमद्वितीयचतुर्थस्कन्धवाक्यैस्तादृशैर्वैष्णवादिवाक्यैश्चावसीयते । तस्मान्न पूर्वोक्तशङ्कालेशोऽपि ।

यत्तु ज्ञानघनः प्रललाप, 'भवति चात्र पुराणं, पुराणः किल पुरुषः पितामहं वागूजिगीषया निजानुभावदर्शिततदनुप्रवेशनिर्गमनसामर्थ्यैः, स्वदेहमनुप्रविष्टं अपगमनशक्त्यपहारपराजितमितस्ततः परिश्रमं तमन्ति तनीयसा नाभिरन्ध्रेण निर्गमयामास, ततः पद्मभूरित्युच्यते । स पद्मजोपि नारायणमेवंविधमधोक्षेण निर्गमयामासेति प्रवादः । अध इन्द्रियमधोबिलं इत्यर्थः । अतः खलु 'कंसारातिरधोक्षज'इति निघण्टुरिति,

तन्न । अधोक्षजनामनिरुक्तेः कल्पनामात्रत्वात् । पुराणनामालिखनात् । पुरुषस्य पितामहोदरप्रवेशनिर्गमाभ्यां दर्शितनिजानुभावत्वे, ततः पुनर्ब्रह्मणोपि तथाकरणेन दर्शितनिजानुभावत्वे पुनः पुरुषप्रवेशप्रयोजनाभावाच्च । 'प्रवाद' इति कथनाच्च । अत एव सौरपुराणे पञ्चविंशाध्याये 'आसीदेकार्णव'इत्यारभ्य विष्णुशयनस्थाने ब्रह्मण आगमनमुक्त्वा ब्रह्मणा को भवानिति प्रश्ने ततो हरिणाहमन्तर्यामीत्युक्त्वा ब्रह्माणं प्रति को भवानिति पृष्टे ततो 'ब्रह्मणाहं सर्वात्मकः परमो देव'इत्युक्ते, ततः 'एवं पितामहेनोक्तो भगवान् कमलापतिः । प्रविष्टो ब्रह्मणो देहं तत्र लोकान् ददर्श सः । विस्मितः कमलाकान्तो निर्गतश्च

---

दिलक्षणवैषम्यपरत्वं, तेषां पुराणानां च 'यो ह खलु वा वास्य'ति मैत्रायणीयोक्तदिशा तत्तद्देवताविशेषप्रतिपादकत्वमिति विषयविभागेन परस्परबाध्यबाधकभावं निरस्योक्तम् । मात्स्यवचनजातं पूर्वोक्तरीत्या सर्वपुराणप्रामाण्योपपादनपरं, न तु केषाञ्चिदप्रामाण्यापादनपरम् । कल्पानां सात्त्विकादिविभागस्तु तत्तत्कल्पे तत्तद्गुणोत्कर्षादेव न तु वक्तृगुणोत्कर्षात् । तेन तेषु तेषु कल्पेषु तत्तद्गुणमूर्तेराधिक्याख्यातानि पुराणानि । उक्तं च कौर्मे 'क्वचिद्रुद्रः क्वचिद्विष्णुः क्वचिद्ब्रह्मा प्रशस्यते । नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन । तत्तत्कल्पान्तवृत्तान्तमधीत्य च । महर्षिभिः । तानि तानि प्रणीतानि विद्वाँस्तत्र न मुह्यती'ति । एतत्सर्वमनेनैव दूषितमिति बोधितम्

एतस्य भ्रान्तत्वबोधनायैतदुपजीव्यस्य मतमाह यत्तु ज्ञानेत्यादि ।

दूषयति । तन्नेत्यादि । तथा चाप्पयदीक्षितोऽन्धानुगत्वान्महान्ध इति भावः ।

विधेर्मुखात्। सहस्रशीर्षा पुरुषो ब्रह्माणं पुनरब्रवीत् । विधे त्वमपि मे देहं प्रविश्याशु विलोकय। चराचरात्मकांल्लोकान् सदेवासुरमानुषान् । ततो विरञ्चिर्भगवानुदरं कमलापतेः । प्रविश्य भुवनान्सर्वान् दृष्ट्वाभूद्विस्मितो विधिः । नापश्यन्निर्गमद्वारं पिहितानि च चक्रिणा । ततोऽसौ नाभिपद्मस्य नालमार्गमविन्दत । तेन मार्गेण निर्गत्य ब्रह्मा ब्रह्मविदां वरः । रेजे पङ्कजमध्यस्थो देवदेवः पितामह'इत्येतावदेवोच्यते, नाधिकम् । एवं कौर्मपूर्वभागसप्तमाध्यायेऽपि । तेन परीक्षायामपि विधिमुखादेव निर्गमः । अतः पुराणविरुद्धमेवं निर्वचनं कुर्वन् स्वस्याधोबिलजातत्वं स्वमुखस्य चाधोबिलत्वमेव प्रकटीचकारेति दिक् ।

यत्तु शिवतत्त्वविवेके विष्णुपुराणे प्रष्टुरेकस्य प्रागेव शिष्यभूतस्य सामान्यप्रश्नेऽपि परिचितहृदयेन गुरुणा तदीयपूर्वसिद्धभक्तिवर्धनाय तदनुकूलविशेषविषयमुत्तरमुक्तमिति वक्तुं शक्यं, वायुसंहितायां तु परस्परविवदमानानामनेकेषामृषीणां प्रश्ने प्रवृत्तमुत्तरं न तथा नेतुं शक्यमित्युक्तं,

तदपि न साधनीयः। श्रुतौ पुराणे च सर्वत्राधिकारिष्वेव गुह्योपदेशदर्शनात्तादृशे यदुच्यते तदेव प्रबलम् । यत्पुनर्विवदमानेषु वादशमनायोच्यते तत्त्वधिकाराभावेऽपि तावन्मात्रार्थत्वात्तर्करूपमप्रतिष्ठितमिति विपरीतमपि सम्भावयितुं शक्यत्वान्निर्बलम् ।

यत्तु 'अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः । एकस्तद्वेद भगवानादित्यो ज्योतिषां पति'रिति वाक्यं, तदप्यन्तर्यामिब्राह्मणे 'यमादित्यो न वेदे'ति श्रावणात्पूर्वमज्ञानेऽपि भगवत्कृपया पश्चात्तस्य ज्ञानं वदति निर्विचिकित्सशाब्दज्ञानं वा, तावतापि तद्वाक्यस्य पुराणान्तरात्प्राबल्यमिति न सिध्यति, अवाचनिकत्वात् । यथा श्रोत्रधिकारं वाक्यप्रवृत्तेरायुष्मतैवादृतत्वात् ।

---

पुनरपि सप्तचत्वारिंशोक्तमेव प्रमेयान्तरं दूषयति यत्तु शिवेत्यादि ।

दूषयति तदपीत्यादि । यत्तु पुलस्त्यवरदानलब्धदेवतापारमार्थ्यवेदनेन पराशरेणोपदिष्टत्वाज्जगत्कारणविषयसामान्यप्रश्ने 'विष्णोः सकाशादुद्भूत'मित्याद्युत्तरक्रमेणावतीर्णत्वेन देवताविशेषमहिमप्रश्नोत्तरसन्दर्भरूपपुराणान्तरवत् 'न बुद्धिभेदं जनये'दितिवत्प्रष्टुरभिमतार्थो बहूकृत इति नेतुमशक्यतानन्यथासिद्धत्वाच्च विष्णुपुराणं पुराणान्तरात्प्रबलमिति मतमुपक्षिप्य, तन्निराकरणमतिक्षोदीय इत्युपेक्षितमित्युक्तम् । तदप्येतेनैव निरस्तम् ।

यदपि तत्रैव श्लोके आदित्यपुराणादीनामुत्कर्षं हृदि कृत्वोक्तं तदुपक्षिप्य दूषयति यत्त्विति ।

एवमेव वायूक्तावपि ज्ञेयम् । एतेनैव पराशरोपपुराणीयः शिवस्य परभावोपदेशो व्याख्यातो ज्ञेयः ।

न च 'उत्कर्षो यः पुराणेषु दृश्यते वैष्णवेषु च । असौ तत्त्वात्मना विष्णोर्न स्वरूपेण सत्तम । सर्वकारणमीशानः साम्बस्सत्यादिलक्षणः । न विष्णुर्न विरञ्चिश्च न रुद्रो नापरः पुमान् । श्रुतयश्च पुराणानि भारतादीनि सत्तम । शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति वै'इतिपराशरोपपुराणादिवाक्याद्भ्रमितव्यं, अत्रापि तत्त्वात्मनेत्यनेन मूलात्मना, न स्वरूपेणेत्यनेन न गुणमूर्त्यात्मनेत्युक्त्वा, द्वितीयश्लोके मायोपाधिकस्येशानस्य कारणत्वं प्रतिपाद्य, सत्यादिलक्षणत्वं गुणमूर्तिषु निषिध्य, तृतीयश्लोके श्रुत्यादयः सर्वे सत्यादिलक्षणं शिवं हृदिकृत्य साम्बं कारणं ब्रुवन्ति, न तु साम्बमेव तादृशं ब्रुवन्ति । तेन सूतसंहितादावुक्तेषु चतुर्षु वैष्णवपुराणेषु य उत्कर्षः सात्त्विकशिवांशविष्णोः स तथेति तात्पर्यात् । तथाच साम्ब एव चेन्न तादृग्गुणोत्कर्षस्तर्हि कुतस्तरां साम्बांश इति भावः । इदं च शिवेशानादिशब्दानां निरुपाधिब्रह्मवाचकत्वादिव्युत्पादनमेव व्युत्पादितमस्माभिः ।

किञ्च, यथात्रेदं तथा हरिवंशसमाप्तौ 'वेदे रामायणे पुण्ये पुराणे भारते तथा । आदावन्ते च मध्ये च हरिः सर्वत्र गीयते'त्युक्तम् । तथा मोक्षधर्मेऽपि । एवं सति निर्गुणत्वेन भगवान् प्रतिपाद्यते, सगुणत्वेन परशिव इति वचनद्वयाविरोधाय वाच्यं, तदा न कोऽपि क्वापि विरोध इति दिक् ।

---

एवमेव मुख्याधिकाराभावमन्यत्राऽतिदिशति एवमित्यादि ।

अतः परं सप्तचत्वारिंश आगमबलाबलादिकं विचारितं त्यक्त्वा, अष्टचत्वारिंशोक्तं पौराणमेवाभासीकर्तुमाह न च उत्कर्ष इत्यादि दिगित्यन्तम् । यदत्र श्लोके भगवद्गीताया ईश्वरगीतानुवादकत्वमुक्तं, तत्तु गीतोक्तविश्वरूपविमर्षे एव प्रत्युत्तरितमस्माभिः । ऊनपञ्चाशश्लोकोक्तं तु आथर्वणमहोपनिषद्विचारे प्रागेव दूषितम् ।

यत्तु पञ्चाशश्लोकेऽवतरणिकायां 'यो ब्रह्माणं विदधाति पूर्वं'मितिमन्त्रे पूर्वं ब्रह्मसृष्टिवत् 'यजुर्भ्योऽथ विष्णु'मित्यादिश्रुतिभ्यो विष्णुरुद्रयोः 'अण्डाहिरण्मय'मितिमन्त्रेण ब्रह्मविष्णो रुद्रात्सृष्टिरुक्ता, सा तु सप्तचत्वारिंशदूषणे गुणातीतादेव सृष्टेरङ्गीकारेण पूर्वं श्रुतिविचारेऽपि तथा स्थापनेन गुणमूर्तीनां तत्तत्कल्पीयोच्चनीचभावसत्त्वेऽपि वास्तवसाम्ये नास्माभिरप्यनुमोद्यते । तथा ब्रह्मरुद्रयोः सात्त्विकमपि परमेतावान्विशेषः । सूतगीतायां 'यस्य मायागतं सत्त्वं शरीरं स्यात्तमोगुणः । संहाराय त्रिमूर्तीनां स रुद्रः स्यान्न चापर'इति वाक्यात्सत्त्वं शिवस्य रूपोपाधिस्तमस्तु कार्योपाधिरिति त्रिमूर्तिसंहर्तरि परशिवेऽपि तामसकार्यकर्तृत्वं भवतैव दर्शितं, तेन

यच्च कैश्चित्तामसत्वं शिवस्योच्यते, तदपि तैर्भवदुक्तमेवानूद्यते, 'यदा तमस्तन्न दिवा न रात्रिस्तमो वा इदमग्र आसी'दित्याद्युदाहृत्य मायायास्तमःपदवाच्यतां बोधयता, परशिवस्य मायोपाधिकत्वं च प्रतिपादयतायुष्मताभ्युपगमात् । अतो न तेषु कोप उचितः ।

यत्तु 'यत्तामसकलालेशगृहीतस्त्वं पयोनिधौ । निद्रापरवशः शेषे कथं तत्सात्त्विको भवान्'इति ब्रह्माण्डवाक्यं, तत्रापि शिवे संहारार्थं तमोग्रहणस्य दुश्चिकित्सव्रणनिवारणाय निदानज्ञभिषक्शस्त्रग्रहणस्येवानुकम्पाबोधकमिति स्वोक्तमेवोत्तरत्वेनावधेहि ।

वस्तुतस्तु तत्राप्येष स्फुटो विशेषः । यथा दिवसेऽतिव्यापृता रात्रौ सुषुप्ताः सुखं लभन्ते, तथा प्रलये भगवन्निद्रयेति किमधिकं वच्मः? वस्तुतस्तु न तामसी तत्र निद्रानेन वाक्येनापादयितुं शक्यते, अस्य प्रश्नत्वेन विवादत्वेन वा प्रतीयमानत्वेन सिद्धान्तवाक्यत्वाभावात् । योगनिद्रामात्रस्यैवानुशासनदर्शनाच्च । अतो यथा संहाररुद्रपरशिवयोर्विवेकाग्रहाद् भ्रमतमसि मज्जनमङ्गीकृतं बालिशानां तथैव परब्रह्मणो भगवतः सत्त्वगुणोपहितस्य च विवेकाग्रहादेव भ्रमः स्वोक्तावप्यवधेयः ।

यदपि 'शिवस्य पशवो जीवाः सर्वे संसारवर्तिनः । भारतादिषु गण्यन्ते इति तावदतिस्फुट'मित्युक्त्वा, तेषां पशुत्वं गौण्या व्यवस्थाप्य, 'मनुष्याणां देवयजनवत्तेषां सर्वेषां शम्भुपूजनं नित्यं, अन्यथा तेषां शिवपशुत्वोक्तिर्निर्विषया स्या'दित्याद्युक्त्वा शैवलिङ्गादिसम्मतिरस्मिन्नर्थे प्रदर्शिता, सा तु तत्त-

---

निष्कर्षो भवतैव स्फोर्यत इत्याशयेनाह यच्चेत्यादि । कोप इति । 'तामसत्वेन निष्कर्षप्रलापो मूर्खाणां गलहस्तित' इति वाक्यसूचितः स इत्यर्थः ।

यत्पुनर्निद्रया विष्णोस्तामसत्वमापादितं, तत्र विशेषकथनमुखेन सत्त्वाधिक्यं शिवापेक्षया ध्वनयितुमाह यत्तु यत्तामसेत्यारभ्य अवधेय इत्यन्तम् । एवं पञ्चाशस्य श्लोकोक्तस्यार्थो दूषितः ।

यः पुनरेकपञ्चाशे गुणमूर्तिषु संहाररुद्रोत्कर्षः सूतसंहितादिवाक्यैः प्रतिपादितः स तु तामसकल्पानुसारी तामसकल्पे च तामसत्वत्यागरूपैव मुक्तिर्न परमेति व्यवस्थापितं, क्रममुक्तौ चायमुत्कर्ष उपयुज्यते । अतो नास्माकं विरुद्ध इत्युपेक्षितः । विष्णुब्रह्माणौ च तत्र तदंशभूताविति पूर्वमेवोपपादितमिति विष्णुनिष्कर्षदर्शनेऽपि भ्रमो नोदेष्यतीत्यतोऽप्युपेक्षितः ।

द्विपञ्चाशे तु न कश्चिद्विशेष इति तदप्युपेक्ष्य त्रिपञ्चाशोक्तं दूषयति यदपीत्यादि । अर्थस्तु स्फुटः ।

त्पुराणशैवागमाद्युक्तपूजादीनामविद्वदधिकारकत्वं तत्कर्तृणां संसारित्वं च स्फोरयन्ती शिवतत्त्वविवेकग्रन्थकृतोऽतीव सौष्ठवमाविष्करोति ।

किञ्च, भगवत एवाधिक्यमेतेनाप्यवगम्यते । प्रथमस्कन्धे सूतेन 'व्यासः संहितामेतां शुकं पाठयामासे'त्युक्ते, 'शौनक उवाच–स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः । कस्य वा महतीमेतामात्मारामः समभ्यस'दिति । तदा सूत आह 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरि'रिति द्वितीयस्कन्धे शुकोऽपि 'परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता'इति स्वाधिकारमूचे । तेन भगवत्सेवायां निर्गुण-अधिकारिण उक्ताः । भारते मोक्षधर्मे नरनारायणीये च 'अहो ह्येकान्तिनः सर्वान् प्रीणाति भगवान् प्रभुः । विधिप्रयुक्तां पूजां च गृह्णाति भगवान्स्वयं' इति, 'नूनमेकान्तिधर्मोऽयं श्रेष्ठो नारायणप्रिय' इति, 'सहोपनिषदान् वेदान् ये विप्राः सम्यगास्थिताः । पठन्ति विधिमास्थाय ये चान्ये यतिधर्मिणः । तेभ्यो विशिष्टान् जानामि गतिमेकान्तिनां नृणा'मित्यादिभिरेकान्तिनो भगवद्धर्मादावधिकारिण उक्ताः । ते च ज्ञानिन एव न तु पशव इति विभाव्यताम् । एवमेव पुराणान्तरे स्फुटमेव विस्तरभयान्न लिख्यते ।

एतेनैव लिङ्गार्चनमपि व्याख्यातम् । 'यद्यर्चयन्ति त्रिदशा लिङ्गं मम सुरोत्तमौ । तदैतत्प्रतिगृह्णीयां नान्यथा तु कथञ्चने'त्यादिवामनपुराणसन्दर्भेण भगवद्वरदानात् पूर्वं तत्पूजाभावावगमात् । तेन देवादिचातुर्वर्ण्यान्तैस्तत आरभ्यैव पूज्यते, न तु सर्गादिमारभ्य ।

यत्तु 'यद्यर्चयन्ती'त्युक्तिस्तु पशुपत्यर्थेनान्वयात् नेतव्येत्युक्तं, तत्तु पशुपत्यर्थनास्वरूपनिरूपणेनैवापास्तमिति पूर्वस्मात्सर्वक्रतुशेषित्वापादकसुदर्शनमतापाकरणग्रन्थादेवावगन्तव्यम् ।

यत्तु वामनपुराणीयवाक्यानुदाहृत्याग्रे 'जितेन्द्रियत्वं शौचं च माङ्गल्यं भक्तिरेव च । शङ्करे भास्करे देव्यां धर्मोऽयं मानुषः स्मृत' इति शिवभक्तिर्वि-

---

तत्रत्यमन्यदपि तस्याकौशलस्फुटीकारायेत्याह एतेनैवेत्यादि । तथा च लिङ्गार्चनेन निरवग्रहैश्वर्यसिद्धिर्नापि विष्णोः सकाशादुत्कर्षसिद्धिरित्यर्थः ।

ननु वरदानोक्तिरर्थवाद इति हृदिकृत्वा यदुक्तं तद्दूषयति यत्त्वित्यादि । एवं त्रिपञ्चाशोक्तं दूषितम् ।

एवमेव हेलया चतुःपञ्चाशोक्तं दूषयति यत्तु वामनेत्यादि ।

शिष्य मनुष्यधर्मत्वेनापि महर्षिभिर्विहितेति प्रतिपादितमित्युक्तं, तत्तु तत्सन्दर्भादेव विरुध्यते । तत्र हि मानुषं धर्मं देवत्रयसाधारणभक्तिरूपमुक्त्वा, तदग्रे 'धनाधिपत्यं भोगानि स्वाध्यायं शङ्करार्चनम् । अहङ्कारं सशौण्डीर्यं धर्मोऽयं गुह्यकेष्विति । परदारावमर्शित्वं परार्थैक्ये च लोलुपा । स्वाध्यायत्र्यम्बके भक्तिर्धर्मोऽयं राक्षसः स्मृत ' इति विशिष्य गुह्यकराक्षसधर्मत्वेन कथनात् । सन्दर्भारम्भे च 'देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः । स्वाध्यायो वेदवेत्तृत्वं विष्णुपूजारतिः सदा । दैत्यानां बाहुशालित्वं मात्सर्यं युद्धसत्क्रियाः । विन्दनं नीतिशास्त्राणां हरभक्तिरुदाहृते'ति दैत्यधर्मत्वकथनाच्च । अतोऽपि ये देवांशास्तेषां विष्णुपूजा स्वधर्मो ये च दैत्यांशास्तेषां शिवभक्तिरिति स्फुटति ।

वस्तुतस्त्वयं वामनपुराणीयः सन्दर्भः पूर्वोक्तश्चैतौ ग्रन्थकृतो लिखितुमेव नोचितौ । अथ ज्ञात्वा लिखितौ, तदा तु ग्रन्थस्यास्य व्याजस्तुतिरूपत्वमेव प्रकटीकृतमिति किमधिकं वदामः ?



# अथ श्रीगायत्र्यर्थो विचार्यते ।

तत्र,

यदुक्तमिति गायत्र्या देवता श्रीसदाशिवः ।
असाधारणतत्रत्यभर्गशब्देन निश्चितः ॥ १ ॥
तत्तुच्छमेव लिङ्गस्य विष्णुसाधारणत्वतः ।
तद्बोधकश्रुतेरग्रे स्वयमेव निरूपणात् ॥ २ ॥
यदुक्तमेष भर्गाख्यो रुद्रो हि ब्रह्मवादिनः ।
इति मैत्रायणीयानां वाक्यमर्थनिरूपणे ॥ ३ ॥
तदन्यार्थं यतस्तस्मिन्नयमर्थो न लभ्यते ।
अत्र योऽस्त्यन्तरादित्ये तद् भर्गाख्या त्रिधास्य तु ॥ ४ ॥
यथा कार्यान्तराद्योगस्तथा संहरणादपि ।
बोधितस्तेन रुद्रत्वं तस्यैवात्र निगद्यते ॥ ५ ॥

---

## अथ श्रीगायत्र्यर्थः ।

अथ पञ्चपञ्चाशे गायत्रीविचारे तेन कारिकाभिर्भूयान्संरम्भः कृतः तं कारिकाभिरेव दूषयति **यदुक्तमित्यादि** । 'अमुष्याः प्रतिपाद्या चे'ति पूर्वपादहीना तदीयैव कारिकैषा ।

असाधारणत्वं खण्डयति **तत्तुच्छमिति** । **स्वयमेव निरूपणादिति**, । 'अत्र केचन मुह्यन्ते विष्णुसञ्ज्ञमितिश्रुतिः । काचिद्वरेण्यं सवितुर्भर्गं विष्ण्वभिधं जगौ' । ततश्च विष्णुरेवार्थो गायत्र्या इति तल्लब्धिवितिकारिकया कथनादित्यर्थः ।

ननु यद्यपि श्रुतावुक्तं तथापि श्रुत्यन्तरे भर्गशब्देन रुद्रस्य निर्णीतत्वाद्विष्णुसञ्ज्ञापि ।'सर्वे देवाः संविशन्तीति विष्णु'रिति शिखावाक्यानुसारेण शिवपरैव नेयेत्याकाङ्क्षायां तदुक्तमनूद्य भर्गशब्देन रुद्रस्य निर्णयं दूषयति **यदुक्तमेष** इत्यादि । अन्यार्थत्वं व्याख्यातुं श्रुतिं पठति '**अथ भर्ग**' इत्यादि ।[१]

व्याख्याति **अत्र य** इत्यादि । **अस्य त्विति** योगपदेनान्वेति ।

**यथाकार्यान्तरा**दित्यादि । भाभिर्गत्या भरगत्वेन च यथा तथा भर्जनादपीत्यर्थः । **तस्येति** आदित्यान्तर्गतस्य ।

---

१ 'अथ भर्गं इति यो ह वा अमुष्मिन्नादित्ये निहितस्तारकोऽक्षिणीवैष भर्गाख्यो भाभिर्गतिरस्य हीती भर्गो भर्जयतीति वैष भर्ग इति रुद्रो ब्रह्मवादिनोऽथ भ इति भासयतीमान् लोकान् र इति रञ्जयतीमानी भूतानि ग इति गच्छन्त्यस्मादिमाः प्रजास्तस्माद्भरगत्वाद्भर्गः शश्वत्सूयमानात्सूर्यः सवनात्सविते'त्यादि । इयं पङ्क्तिर्यद्यपि सार्धत्रयश्लोकानन्तरमेव श्रीमद्भिर्ग्रन्थकृद्भिर्व्यलेखि, तथाप्यवलोकनसौकर्यायात्र मुद्रितेत्यवधेयं सुधीभिः ।

स त्वक्षिद्वित्वलिङ्गेन हरिरेवेति निश्चयः ।
श्रुत्यन्तरे गुणातीतः सर्वैः शब्दैः स उच्यते ॥ ६ ॥
यतः प्रवृत्तिः शब्दानां मुख्या तत्रैव सम्मता ।
श्रुतेर्यद्वात्र रुद्रत्वं प्राणत्वायोपवर्णितम् ॥ ७ ॥
अतो मर्त्याच्छरीरात्ते प्रयान्तो रोदयन्ति हि ।
इत्येतद्वाजिशाखोक्तरूपा अप्येष एव हि ॥ ८ ॥
इति ज्ञापयितुं धातुर्णिजन्तोऽत्र निरूप्यते ।

किञ्च,

भ्रस्ज पाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ ॥ ९ ॥
भ्राजते दीप्यते यस्माज्जगच्चान्ते दहत्यपि ।
कालाग्निरूपमास्थाय सप्तार्चिः सह रश्मिभिः ॥ १० ॥
भ्राजते स्वेन रूपेण तस्माद्भर्ग इति स्मृतः ।
इत्याह याज्ञवल्क्योऽपि तेनेदं यौगिकं पदम् ॥ ११ ॥

---

तर्हि तस्य शिवरूपत्वं प्रतिवादिना स्थापितमिति व्यर्थो दूषणप्रयास इत्यतः पूर्वोक्तं स्मारयन्नाह **स** त्वित्यादि । युक्त्यन्तरमपि स्मारयति गुणातीत इत्यादि ।

रुद्रशब्दस्य प्रयोजनान्तरमाह यद्वेत्यादि । प्राणत्वायेति । प्राणपदं जीवात्मनोऽपि सङ्ग्राहकम् ।

**वाजिशाखोक्तरूपा** इति । बृहदारण्यके शाकल्यब्राह्मणे 'कतमे रुद्रा' इति 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा' इति श्रुत्युक्तरूपा इत्यर्थः ।

रोदयितृत्वादत्र रुद्रत्वमुच्यत इत्यत्र गमकमाह धातुर्णिजन्त इति । तथा च मैत्रश्रुतौ भर्जयतीति णिजन्तसामर्थ्यं तथात्वज्ञापकम् । यद्यपि धातुभेदोऽस्ति तथापि संहरणात्मकभर्जनस्य रोदनफलकत्वान्न दोषः ।

ननु भर्गपदस्य यौगिकत्वेऽपि तस्य रुद्रे पर्यवसानाद्रुद्रपदस्य रूढत्वमादरणीयं, योगार्थग्रहणे मानाभावादित्याकाङ्क्षायां, रुद्रपदस्य यौगिकत्वे तादृग्योगग्रहणे च मानं वदन्नाह किञ्चेत्यादि ।

**पाचयत** इति । यद्यप्यौषधिपाचनादयमर्थः सिध्यति, तथापि 'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेती'त्यादितैत्तिरीयश्रुतौ सूर्यस्य प्राणग्राहकत्वस्य सिद्धत्वात्तद्ग्रहणेन सन्तापयन् पाचयत इत्यर्थः ।

सिद्धमाह तेनेत्यादि । तथापि सान्तस्य भर्ग इत्यस्य शिववाचकत्वाय चक्षोः सूर्यो ब्रह्मैतदितिदृष्टान्तेन वर्णविकारेऽपि बहुसारूप्येण पदाभेदमङ्गीकृत्य योगपक्षे यत्त्वया 'मैवं

न रूढं गमयेत्किञ्च रूपास्थाननिरूपणात्।
रुद्रत्वं कृत्रिमं तस्मात्तदर्थः कृष्ण एव हि ॥ १२ ॥
श्रुतितात्पर्यतः किञ्च 'विष्णुसञ्ज्ञ'मितिश्रुतिः।
काचिद्वरेण्यं सवितुर्भर्गं विष्णवभिधं जगौ ॥ १३ ॥
याज्ञवल्क्योऽपि पुरुषं व्योम्नि तद्विष्णुसञ्ज्ञितम्।
भ इति भासते लोकान् र इति रक्षते प्रजाः ॥ १४ ॥
ग इत्यागच्छतेऽजस्रं भरगाद्भर्ग उच्यते।
इत्याह गायत्र्यर्थस्य व्याकृतौ योगशास्त्रके ॥ १५ ॥
अतोऽपि प्रोक्त एवार्थः सद्भिराद्रियतां सदा।
यच्छिवस्यापि विष्णुत्वं शिखावाक्येन शङ्कितम् ॥ १६ ॥
तन्निरस्तं पूर्वमेव शिखातात्पर्यनिर्णये।
यच्च योगेन विष्णुत्वं योगनैर्बल्यतो न तत् ॥ १७ ॥
न चोपबृंहणबलात्तत्सिद्धिस्तत्स्वरूपवान्।
तेषु तेषु पुराणेषु हरिर्वै गीयते यतः ॥ १८ ॥
'ध्येयः सदे'तिवाक्येऽपि पुराणेष्वेवमुच्यते।
आदित्यमण्डलासीनं रुक्माभं पुरुषं परम् ॥ १९ ॥
ध्यायन्जपेत्तदित्येतन्निष्कामो मुच्यते द्विजः।
आदित्यमण्डलान्तःस्थं परं ब्रह्माधिदैवतम् ॥ २० ॥
छन्दोनिवृत् स्याद्गायत्री मया दृष्टा सनातनी।
तथाश्वमेधिके पार्थं प्रत्याह भगवान् स्वयम् ॥ २१ ॥

---

न वर्णविकृतिमनाश्रित्यैव वैदिकीमुपपादयितुं शक्या योगाः सर्वे प्रदर्शिता' इति तौल्यमुक्तं तत्र वैदिकीपदमेवोत्तरत्वेन ज्ञेयम्। रूढिपक्षे विकृतेरवैदिकत्वादिति भावः।

ननु योगग्रहणेऽपि योगरूढशिवग्रहणे किम्बाधकमत आह किञ्चेत्यादि। कृत्रिमामिति। अतो न रूढ्यवकाश इत्यर्थः। सिद्धमाह तस्मादित्यादि सदेत्यन्तम्।

विष्णुपदस्य शिववाचकत्वं यौगिकत्वं च यत्तेनोक्तं तद्दूषयति यच्छिवेत्यादि। ननु वायुसंहितायां 'शिवतत्त्वादिभूम्यन्तं शरीरादिघटादि च। व्याप्याधितिष्ठति शिवस्तस्माद्विष्णुरुदाहृत' इति, लैङ्गे च 'भगवान् भगसद्भावान्निर्मलत्वाच्छिवः स्मृतः। स्वामी स्वमस्य यत्सर्वं विष्णुः सर्वप्रवेशना'दिति निरुक्तेरागमे शिवनामाष्टके विष्णुशब्दस्य गणनाच्च विष्णुपदस्य शिववाचकत्वे सिद्धे, आदित्यान्तर्गतस्य विष्णुत्वं शिवपरं कुतो न सिध्यति?

तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम्।
'उदुत्यञ्च' जपेन्मन्त्रं 'चित्रं' 'तच्चक्षु'रित्यपि ॥ २२ ॥
गायत्रीं च यथाशक्ति जप्त्वा सूक्तञ्च मामकम्।
इत्यतो नात्र शङ्कांशस्तेनादित्ये स्थितो हरिः ॥ २३ ॥
सर्वदेवात्मकः सर्वान्तर्यामी ध्यायतां सदा।
छन्दोगश्रुतिरप्येतमन्तर्यामिणमाह हि ॥ २४ ॥
अक्षिद्वित्वादिभिर्लिङ्गैस्तदेतदुपपादितम्।
तथैव तैत्तिरीयेऽपि त्रयीविद्यात्मके रवौ।
अन्तर्हिरण्मयो ब्रह्म पुरुषः पठ्यते तथा ॥ २५ ॥
रविमध्ये स्थितः सोमः सोममध्ये हुताशनः।
तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥ २६ ॥

---

किञ्च श्रुतौ गायत्रीप्रतिपाद्ये विष्णुपदं रुद्रपदञ्च प्रयुक्तं, तत्र द्वयोः प्रतिपाद्यत्वासम्भवादेकत्र गौणत्वमन्यत्र मुख्यत्वमवश्यं वाच्यमेव। तथासति कस्य मुख्यत्वमित्यपेक्षायां मन्त्रलिङ्गाविरोधिनि विवरणे विद्यमानस्य मुख्यत्वमितरस्य गौणत्वमिति निश्चेयमन्यथा विरोधपरिहाराभावात्। मन्त्रे च भर्गशब्दोऽस्ति, तेन रुद्रपदघटितमेव विवरणं मुख्यं, विष्णुपदघटितं निर्बलमतो न पूर्वोक्तं साधीय इत्यत आह न चेत्यादि 'नात्र शङ्काश' इत्यन्तम्। तथाच पुराणेषु शिवो विष्णुर्वा यः कश्चित्प्रतिपाद्यते, स तद् देवतात्मना न प्रतिपाद्यतेऽपि तु तत्तद्रूपेण परब्रह्मैव प्रतिपाद्यते, तत्तु नानापुराणवाक्यान्युपन्यस्य, श्रुतीश्चोपन्यस्य, पूर्वमेवोपाधिराहित्यात्षोडशान्तोपास्यत्वात्सर्वान्तरत्वादिना च महता संरम्भेणाथर्वशिखाद्यपेक्षया नृसिंहमन्त्रराजस्याधिक्यप्रदर्शनेन विष्णुरूपमिति साधितं, अत एतैरुपबृंहणैरपि मूलरूपमेव हृदि निधाय, तस्य रूपान्तरे तत्प्रतिपुरुषे वा विष्णुत्वमुच्यते नतु शिवरूपमेवोद्दिश्य, तेन न भवतो भवादृशस्य वाभिमते निरङ्कुशयोगरूढिसिद्धिः। शब्दान्तरवद् भर्गशब्दोऽपि वस्तुतस्तत्रैव रूढो योगोऽपि तत्रैव निरङ्कुशो मन्त्रे च सान्तत्वादन्तत्वाभ्यां सन्दिग्धश्चातो न तद्विरोधोऽपीति पूर्वोक्तमेव साधीय इत्यर्थः।

उदुत्यमित्यादि। 'उदुत्यं जातवेदसं देवं वहन्ती'त्यादिमन्त्रं, 'चित्रं देवानामुदगादनीक'मित्यादिमन्त्रं 'चक्षुर्मित्रस्य वरुणस्याग्ने'रित्यादिमन्त्रं च जपेदित्यर्थः। सिद्धमाह–तेनेत्यादि। स्वोक्तमुपष्टम्नाति छन्दोगेत्यादि तत्तथेत्यन्तम्। तैत्तिरीय इति। 'आदित्यो वा एष एतन्मण्डलं तपति तत्र ऋचस्तदृचामण्डलꣳस ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजꣳषि स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मय' इत्यनुवाके,

रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
अग्निमध्ये स्थितं सत्यं सत्यस्यान्तः स्थितोऽच्युतः ॥ २७ ॥
इति मैत्रश्रुतिर्योगियाज्ञवल्क्यस्मृतिस्तथा ।
सर्वान्तरत्वं कृष्णस्य वदतस्तेन तत्तथा ॥ २८ ॥
यत्तु सन्ध्यासु भगवद्भक्तैर्भास्करमण्डले ।
उपास्या भगवन्मूर्तिरित्येतावत्परं वचः ॥ २९ ॥
ननु गायत्र्युपास्यत्वपर्यन्तस्थापनक्षमम् ।
नहि श्रुतिविरुद्धेऽर्थे तात्पर्यं तस्य युज्यते ॥ ३० ॥
इत्युक्तं, तन्न; पूर्वोक्तश्रुतिस्मृतिविरोधतः ।
तस्मात्षडक्षराद्यर्थध्यानार्थत्वप्रसाधनम् ॥ ३१ ॥
यत्कृतं वचसस्तत्तु मज्जतः फेनधारणम् ।
यच्च तत्र हि संवादः कृष्णपाण्डुतनूजयोः ॥ ३२ ॥
वैष्णवागमधर्माणां विधानाय प्रवर्तितः ।
'भगवन् वैष्णवा धर्माः किन्निष्ठाः किम्परायणाः ॥ ३३ ॥
कथं त्वमर्चनीयो हि मूर्तयः कीदृशास्तु ते ।
कथं वैखानसा ब्रूयुः कथं वै पाञ्चरात्रिकाः ॥ ३४ ॥
एवमेव पुरावृत्तं वैष्णवं धर्मशासनम् ।
इति तत्रादिमध्यान्तवचनैरवसीयते ॥ ३५ ॥
श्रुता मे मानवा धर्मा इति तेभ्यो विविच्य सः ।
युष्मदीयान् परान् धर्मान् पुण्यान् कथय मेऽच्युत' ॥ ३६ ॥

---

एतदग्रिमे चेत्यर्थः । तेन तत्तथेति, भगवतः सर्वान्तरत्वेन हेतुना तद्भर्गः पदं तथा भगवत्परमित्यर्थः । एवं भर्गशब्दार्थनिर्णयेन गायत्र्या भगवत्परत्वं स्थापितम् । अतः परं यदाश्वमेधिकवाक्यानां तेन प्रयोजनान्तरमुक्तं, तद्दूषयितुमुपक्षिपति यत्त्वित्यादि इत्युक्तमित्यन्तम् ।

दूषयति तन्नेति । तेनाश्वमेधिकगतिरन्यथोपपादिता, तन्मण्डलस्थमित्यतः प्राचीनवचने 'वैष्णवो हि षडक्षरः, ततः षडक्षरादीनि चतुःकृत्वः परिवर्तयेत्' इति जप्य उपन्यस्तदर्थो- षडक्षराद्यर्थो रविमण्डले ध्येयो विधीयते, तेन श्लोकेनेति न वैशसमिति तद्दूषयति तस्मादित्यादि वचस इत्यन्तम् । प्रणवनमःसम्पुटितवैष्णवस्य प्रणवनमआदिकस्य नारायणमन्त्रस्य तद्वद्वासुदेवमन्त्रस्य च चतुस्त्रिद्विकृत्वः परिवर्तने च चतुर्विंशत्यक्षराणि भवन्ति । 'चतुर्विंशत्यक्षरा गायत्री'ति श्रुतेः । ततो गायत्रीत्वकल्पनेन गायत्र्यर्थभूतस्य शिवस्य षडक्षरादेरर्थस्य यद्ध्यानं तदर्थत्वस्य प्रसाधनमित्यर्थः ।

इति प्रश्न उपक्रान्तिगतस्तेनाप्यतिस्फुटम् ।
'वेदोक्तानेव तानाहुर्धर्मान्सन्तो मनूदितान् ॥ ३७ ॥
श्रौतान् वर्णाश्रमाचारानुपदिश्य प्रपञ्चतः ।
इत्येष मानवो धर्मो युष्माकं कथितो मया' ॥ ३८ ॥
इत्युक्तिश्चोपसंहारे व्यासगीतासु दृश्यते ।
प्रसिद्धा च मनूक्तीनां वैदिकाचारनिष्ठता ॥ ३९ ॥
तथा च मानवाद्धर्मजातादन्यत्वनिश्चये ।
विष्णवागमस्थिता धर्मास्तन्त्रोक्ता इति गम्यते ॥ ४० ॥
ततस्तद्वैष्णवं धर्मशास्त्रमित्यभिधीयते ।
इति तत्रत्यसंवादमादायागमधर्मता ॥ ४१ ॥
चिन्तितास्य तथा धर्मान्मानवेभ्यो विविच्य च ।
उक्तमागमनिष्ठेन गायत्र्या विष्णुचिन्तनम् ॥ ४२ ॥
कार्यं न वेदनिष्ठैस्तन्मोक्षधर्माद्विरुध्यते ।
एकं साङ्ख्यं च योगश्च वेदारण्यकमेव च ॥ ४३ ॥
परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते ।
एवमेकान्तिनां धर्मो नारायणपरात्मकः ॥ ४४ ॥
इत्युक्तं तत्र तस्माद्ये वैदिका देहबन्धनम् ।
जिहासन्त्येष तद्धर्मो न जडानामिति स्थितिः ॥ ४५ ॥

---

दूषयति तन्त्वित्यादि । उदुत्यादीनां यथाश्रुतानां ग्रहणे गायत्र्यां तथाकल्पनस्य मानाभावग्रस्तत्वात्तथेत्यर्थः ।

यत्तेन पूर्वोक्तकल्पनां त्यक्त्वा यथाश्रुतामेव गायत्रीं प्रसिद्धामङ्गीकृत्य तथा विष्णुचिन्तनमागमनिष्ठपरं न वेदनिष्ठपरमित्युक्तं, तद्दूषयितुमुपक्षिपति यच्चेत्यादि वेदनिष्ठैरित्यन्तम् । अत्र यत्पदस्थाने किञ्चपदं तत्कारिकासु, तेन पूर्वोक्तकल्पनात्यागोऽवगम्यते । 'अभिधीयत'इत्यन्तं तत्कारिकाः । इतीत्यारभ्य स्वीयास्तदर्थसङ्ग्राहिकाः । उक्तमिति । एवञ्चागमनिष्ठेन गायत्र्या विष्णुचिन्तनं कर्तव्यं नतु तत्कार्यं वैदिके वर्त्मनि स्थिरैरिति कारिकयोक्तमित्यर्थः । दूषयति तदित्यादि । अन्वयस्तु 'या चिन्तिता यदुक्तं, तन्मोक्षधर्माद्विरुध्यते, इति यत्तदोर्नित्यसम्बन्धात् ज्ञेयः ।

तत्रेति मोक्षधर्मे । चतुर्णां परस्पराङ्गत्वेनैक्यमेवोक्तं तेन परस्पराविरोधेन वेदारण्यकप्राधान्ये तथा पञ्चरात्रप्राधान्ये वा न कोऽपि विशेष इति कथञ्चिदपि न वैष्णवेषु वेदनिष्ठत्वहानिरित्यर्थः ।

मानवेभ्यो विवेकोऽत एतेषान्तदनन्तरम् ।
शुश्रूषा प्रश्नपुण्यत्वकथनादपि युज्यते ॥ ४६ ॥
मनुर्हि मुनिभिः पृष्टो धर्मान्नानाविधान्बहून् ।
प्राहाधिकारिभेदेनेत्युक्तं स्कन्धे तृतीयके ॥ ४७ ॥
अतो धर्मा न ते मुख्या याज्ञवल्क्योऽत एव हि ।
'यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ॥ ४८ ॥
नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयम्' ।
वदन्नेवं मनूक्तं तमपि नाङ्गीचकार ह ॥ ४९ ॥
नो चेत्तद्भेषजमितिश्रुतिं पश्यन्कथं वदेत् ?
तस्मादस्माभिरुक्तं यत्तद् दृढं, यत्तु जल्पितम् ॥ ५० ॥
क्वचित्तन्त्रानुरोधेन धर्मं पौराणिका अपि ।
वदन्ति तादृशोंऽशस्तु ग्राह्यस्तन्त्रावलम्बिना ॥ ५१ ॥
एतत्पराशरपुराणीयवाक्यावलम्बतः ।
यत्तु तन्त्रानुसारेण कथितं तत्परित्यजेत् ॥ ५२ ॥
धर्मशास्त्रे पुराणे च यत्नतो वैदिको जनः ।
इति स्मृतिभिरेवात्र व्यवस्थायाः प्रदर्शनात् ॥ ५३ ॥
तस्मादागमनिष्ठानामाचारविकृतावपि ।
वेदनिष्ठैः सदा कार्यं गायत्र्या शिवपूजनम् ॥ ५४ ॥

---

नन्वेवं सति मानवेभ्य एतेषां विवेकः कुत इत्यत आह **तस्मादित्यादि एतेषामित्यन्तम्** । **जडानामिति, कर्मादिपराणामित्यर्थः।** एतदर्थमेवायं विवेक इत्यत्र मानमाह **तदनंतरमित्यादि।**

नतु तर्हि मानवा जघन्या इत्यागतं, तथासति 'यद्वै किञ्चिन्मनुरवदत्तद्भेषज'मितिश्रुतिव्याकोप इत्यत आह **मनुर्हीत्यादि।** उक्तमिति, 'यः पृष्टो मुनिभिः प्राह धर्मान्नानाविधान् बहून्। नृणां वर्णाश्रमाणां च सर्वभूतहिते रत'इति श्लोकेनोक्तं, तथाच पुण्यत्वं न प्रतिषिध्यतेऽपि तु सर्वसाधारणत्वम् । तेन तत्तदधिकारिभिस्ते ते ग्राह्या न सर्वे सर्वैः । अतो न भेषजश्रुतिकोपः। अत एव विष्णुपुराणे 'मनुरप्याह वेदार्थ'मित्यादीना मनुतात्पर्यमुक्त्वा, तत आथर्वणश्रुत्युपन्यासपूर्वकं भगवत्येव तस्य तात्पर्यं भगवान्पराशरो निरणयत् । याज्ञवल्क्यश्च शूद्रापरिणयं **नाङ्गीचकार,** तेन तेषां सङ्कीर्णत्वादमुख्यत्वाच्च तेभ्यो वैष्णवधर्मविवेको न त्ववैदिकत्वादिति भावः।

यत्तेन तन्त्रार्थस्याग्राह्यत्वमुक्तं तदङ्गीकृत्य प्रतिकूलयितुं तदुपक्षिपति **यत्तु जल्पितमित्यारभ्य इतीत्यन्तम्** ।

इत्येतदपि युष्माकं दूषणायैव निश्चितम् ।
पुराणे धर्मशास्त्रे च योंशः श्रुत्या विरुध्यते ॥ ५५ ॥
स तन्त्रार्थस्तु विज्ञेय इति तत्रास्य लक्षणात् ।
तथाच भर्गशब्दस्य विष्णुसञ्ज्ञत्वबोधिकाम् ॥ ५६ ॥
श्रुतिं न्यक्कृत्य गायत्र्या या हि शैवत्वकल्पना ।
पुराणबलतः सैव तन्त्रार्थ इति हीयताम् ॥ ५७ ॥
शब्दस्य यदिदं तत्त्वं भर्ग इत्यस्य चिन्तितम् ।
घञमादृत्य सञ्ज्ञायामकर्तरि च कारके ॥ ५८ ॥
छन्दोबाहुलकेनादेरुदात्तत्वसमर्थनात् ।
भर्गाख्यस्तं चिन्तयामीतिमैत्रश्रुतिदर्शनात् ॥ ५९ ॥
'तद्भर्गाख्यं किमपि ह्री'त्येवं साम्बस्तुतेरपि ।
तन्न युक्तं, शकन्ध्वादिपररूपे कृते सति ॥ ६० ॥
भर्गाख्येतिप्रयोगस्यानायासेनैव सम्भवात् ।
नवा तलवकाराणां[1]मितिब्राह्मणदर्शनात् ॥ ६१ ॥

---

पराशरोपपुराणीयं तन्त्रार्थलक्षणमुपन्यस्य तन्त्रार्थग्राह्यत्वं प्रतिकूलयति एतदपीत्यादि ।

विज्ञेय इति । एतदग्रे 'समासेन मनीषिभि'रिति चतुर्थः पादोऽस्ति। तत्रेति पराशरोपपुराणदशमाध्याये ।

हीयतामिति । हि निश्चयेन इयतां ज्ञायतामिति हीयतां त्यज्यतामिति वार्थः ।

एवं गायत्र्याः शिवपरत्वदूषणेन भगवत्परत्वं व्यवस्थापितं, अतः परं यत्र नोक्तं 'अजन्तत्वेन निर्णीताद्भर्गशब्दान्महेशितुः । वाचकात्प्रतिपाद्योऽसौ गायत्र्या इति मीयत' इत्यनेन भर्गशब्दस्यादन्तत्वं यत्र नाङ्गीकृतं, तद्दूषयिष्यन्नदन्तत्वसाधिकां युक्तिं दर्शयति शब्दस्येत्यादि । 'भ्रस्ज पाके' इति धातोर्णिचि कृते 'भ्रस्जोरोपधयो'रिति रमागमे तदीयाकारमकारयोरित्वाल्लोपे भर्जीत्यस्माद् 'अकर्तरि च कारके सञ्ज्ञाया'मित्यनेनाकर्तरि कारके घञि प्राप्ते, 'बहुलं छन्दसी'त्यनेन कर्तृकारकेऽपि घञि कृते, 'ञ्नित्यादिर्नित्य'मित्यनेनाद्युदात्तस्वरे जाते, असुन्प्रत्ययान्ताद्विशेषाभावेनादोषाद्भर्गाख्येति श्रुतिस्मृतिप्रयोगाच्च भर्गशब्दस्यादन्तत्वं चिन्तितमित्यर्थः ।

श्रुतिस्मृतिप्रयोगस्य सान्तपक्षेऽपि सिद्धिप्रकारं वदन् दूषयति तन्नेत्यादि । शकन्ध्वादिपररूपस्य टिमादाय भवनात्सुखेन प्रयोगसिद्धेरगतिकगतेर्बाहुलकस्याश्रयो न युक्त इत्यर्थः ।

---

[1] "कः सविता का साविन्री इत्युपक्रम्य द्वितीयः पादो भर्गमयः।" पङ्क्तिरियं 'तलवकाराणा'मितिपदानन्तरं ग्रन्थकृद्भिर्लिखिता, सौकर्यायात्र निवेशिता ।

सिद्धिः पृषोदरादित्वे सलोपादस्य सम्भवात् ।
अतो ज्ञानघनेनोक्तं फल्गु तद्वदिदं मतम् ॥ ६२ ॥
तस्माददन्ततैतस्यैकान्ततो नैव सिध्यति ।
तेन व्यत्ययमालम्ब्य स्वादेशं च समर्थना ॥ ६३ ॥
प्रयोगस्य तृतीये च पादेऽस्याप्यन्वयो मुधा ।
द्वितीयपादविवृतौ यतो मैत्रायणश्रुतिः ॥ ६४ ॥
'तं चिन्तयामि भर्गाख्य'मिति तस्यान्वयं जगौ ।
तेन भर्गस्तत्पदयोः सुपो लुगवबोधितः ॥ ६५ ॥
अतो यदुक्तं सवितुर्वरेण्यमिति विश्रुतः ।
श्रुतौ मैत्रायणीयानामन्वयः फल्गु तद्यतः ॥ ६६ ॥

---

ज्ञानघनोक्तं प्रयोगान्तरं साधयँस्तन्मतं दूषयति नवेत्यादि सिध्यतीत्यन्तम् । 'पृषोदरादीनि यथोपदिष्ट'मिति सूत्रेण पृषोदरादीनां शिष्टैर्यथोच्चारणं क्रियते तथैव तेषां साधुत्वमप्यङ्गीकृतम् । पृषोदरादिश्चाकृतिगणोऽतो भर्गमयप्रयोगोऽप्युपपद्यत एवेति न तेनाप्येकान्ततोऽदन्तत्वसिद्धिरतस्तथेत्यर्थः ।

सिद्धमाह तेनेत्यादि । व्यत्ययमिति । 'भूयः सृष्ट्वा पतय'इत्यत्रेव भर्ग इत्यत्राऽपि द्वितीयार्थे प्रथमाव्यत्ययम् ।

स्वादेशमिति । 'सुपां सुलु'गिति सूत्रेणामः स्वादेशं मुधापदस्य समर्थनापदेनाप्यन्वयः । अस्मिन्पक्षे भर्गपदं द्वितीये धीमहीतिपादेऽन्वेति । प्रथमान्तपक्षेऽन्वयं दूषयति तृतीयेत्यादि । अन्वयस्तु सवितुर्देवस्य वरेण्यं तं भर्गं चिन्तयामि यः पूर्वोक्तः अस्माकं धियः बुद्ध्युपलक्षितानि सर्वेन्द्रियाणि प्रेरयतीत्येवमर्थकः प्रथमः । अस्मिन्पक्षे तत्पदे अमो लुक्, भर्गपदे प्रथमार्थे द्वितीया वा । अमः स्वादेशो वा । द्वितीये तु भर्गशब्दः प्रथमान्तो यो भर्ग इत्येवं तृतीयपादेनान्वेति ।

एतत्पक्षदूषणे हेतुमाह द्वितीयेत्यादि । नन्वेवं सति प्रथमः पक्षोऽस्त्वित्यत आह तेनेत्यादि । तेनेति, 'तत्सवितुर्वरेण्य'मित्यसौ वा 'आदित्यः सविता स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिनोथ भर्गो देवस्य धीमहीति सविता वै देवस्ततो योऽस्य भर्गाख्यस्तं चिन्तयामीत्याहुर्ब्रह्मवादिनोऽथ धियो यो नः प्रचोदया'दिति बुद्धयो वै धियस्ता योऽस्माकं प्रचोदयादित्याहुरिति विवरणवाक्येन तमिति द्वितीयां भर्गाख्यं चिन्तयामीत्यन्वयं च बोधयतोभयत्र [1]आमो लुगवबोधितस्तेनोभावपि पक्षावसङ्गतावित्यर्थः । श्रौतान्वयस्तु एवं प्रवरणीय इत्यत्र वक्ष्यमाणरीत्या प्रवरणीयत्वकथनेन सवितुर्देवस्य वरेण्यं तद्भर्गो धीमहि यः सविना

---

१ तत्पदभर्गःपदयोरित्यर्थः ।

पूर्वपादप्रतीकं तद्विवरीतुमुदाहृतम् ।
न त्वन्वयाय येनाग्रे तत्रोक्तो दर्शितोऽन्वयः ॥ ६७ ॥
'तदक्षरं तत्सवितुर्वरेण्य'मिति यच्छ्रुतम् ।
श्वेताश्वतरमन्त्रे तद्वरेण्यत्वाय बुध्यताम् ॥ ६८ ॥
एवं याजुषमन्त्रेऽपि पूर्वपादो निरूपितः ।
फलार्थं ब्राह्मणे आह प्रसूत्या इति दर्शनात् ॥ ६९ ॥
अतोऽन्वयो निराबाधः क्रमतः पादयोर्द्वयोः ।
श्रौतत्वात्कल्पना वाग्भिर्नैव न्यक्कारमर्हति ॥ ७० ॥
अथ चेदृषिभिर्दृष्टमदन्तत्वं तदास्तु तत् ।
न तु तेन व्यवसितं युष्माकं सिद्धिमेष्यति ॥ ७१ ॥
भर्गान्वयस्तृतीये चेत्पादे दृष्टस्तथाप्यसौ ।
औदुम्बरीवेष्टनवन्नेदृक् सन्मानमर्हति ॥ ७२ ॥
अथ वास्तामियं चिन्ता येऽन्वया भवतोदिताः ।
तेऽपि सन्तु तथाप्येतैर्भवदिष्टं न सिध्यति ॥ ७३ ॥

---

नः धियः प्रचोदयादिति । तस्य सवितुर्देवस्य वरेण्यं भर्गो धीमहीति च लभ्यते । अस्मिन्पक्षे तत्पदं लुप्तषष्ठीकं, तत्सङ्ग्रहाय सुप इत्युक्तं ।

ननु मैत्रश्रुतौ श्वेताश्वतरे यजुर्मन्त्रे च सवितुर्वरेण्यमित्येवान्वयो दृष्टो न तु भर्गशब्दोऽप्युच्यत इति पूर्वोक्तरीत्या नैकान्ततो निर्णय इत्याशङ्कायां तेषां गतिं दर्शयिष्यन्नाह अत इत्यादि । ब्राह्मणवाक्यन्तु तत्सवितुर्वरेण्यमित्याह, प्रसूत्या इति प्रथमाष्टकेऽस्ति । सिद्धमाह अतोऽन्वय इत्यादि ।

नन्वदन्तत्वादिकमपि न काल्पनिकमृषिदृष्टत्वादतो न दोष इत्यत आह अथेत्यादि । नन्वित्यादि, पूर्वमेव भर्गशब्दस्य भगवत्परत्वेन निर्णीतत्वादित्यर्थः ।

औदुम्बरीवेष्टनवदिति । ज्योतिष्टोमे सदोमण्डपस्य मध्ये काचिदौदुम्बरीशाखा निखन्यते, तत्र औदुम्बरी सर्वा वेष्टयितव्येति वाससा वेष्टनं स्मर्यते । 'औदुम्बरीं स्पृष्ट्वोद्गाये'दिति श्रुतेः । तत्र किं कार्यमित्यपेक्षायां पूर्वाधिकरणे अष्टकादिस्मृतेः प्रामाण्यस्य साधितत्वादस्या अपि प्रामाण्यात्सर्ववेष्टनं कार्यमिति प्राप्ते प्रत्यक्षश्रुतिविरुद्धा स्मृतिर्नादरणीया, स्मृतिप्रामाण्यस्य श्रुत्यनुमानसापेक्षत्वात् । प्रत्यक्षां श्रुतिमनादृत्य तस्या आदरे हेत्वभावादिति स्मृतिपादे सिद्धान्तितम् । 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमान'मिति सूत्रे तद्वदित्यर्थः ।

सान्तत्वदूषणादीनां काकदन्तविचारतौल्यं बोधयति अथवेत्यादि विभाव्यतामित्यन्तम् । आस्तामिति, समाप्नोतु ।

भर्गशब्दस्य सान्तत्वेऽदन्तत्वं वापि लिङ्गता ।
साधारणा तेन मुक्ताग्रहैरुक्तं विभाव्यताम् ॥ ७४ ॥
एवं सत्यत्र सवितृशब्दो नादित्यवाचकः ।
किन्तु ब्रह्मैव परममभिधत्ते इति स्थितम् ॥ ७५ ॥
सवनात्सवितेत्यादिश्रुतौ योगाश्रयादपि ।
तथैव याज्ञवल्क्येनाप्येतद्विवरणादपि ॥ ७६ ॥
न च तन्मण्डलस्थं मामित्यादीनामसङ्गतिः ।
शङ्क्या न ह्येषु गायत्र्यां सविता सूर्यवाचकः ॥ ७७ ॥
इत्युच्यते, किन्तु तत्र ध्येयं ब्रह्मेति बोध्यते ।
अतो न दोषस्तस्मात्तद्देवता युष्मदीरिता ॥ ७८ ॥
शिवो न किन्तु सविता देवता कण्ठतो यतः ।
तैत्तिरीयमहानारायणोपनिषदि श्रुतः ॥ ७९ ॥

---

एवं तदुक्तमन्वयं दूषयित्वा सवितृशब्दस्यादित्यवाचकत्वं यत्तेनाङ्गीकृतं तद्दूषयति एवं सतीत्यारभ्यापीत्यन्तम् । पूर्वोक्तयुक्तिभिराग्रहवादस्य निरवकाशत्वे सति गायत्र्यां सवितृशब्दोऽपि ब्रह्मवाचक इति निश्चितं, तथा भर्गशब्दस्येव सवितृशब्दस्यापि पूर्वोक्तमैत्रायणीयश्रुतौ योगियाज्ञवल्क्ये च योग एवाश्रितो न रूढिस्ताभ्यामपि हेतुभ्यां न सूर्यवाचकोऽपि तु योगरूढं ब्रह्मैवाभिधत्ते, तस्मादत्रापि सूर्यवाचकत्वाग्रहस्त्याज्य इत्यर्थः ।

ननु सवितृशब्दस्य ब्रह्मवाचकत्वे 'आदित्यमण्डलासीनं' 'आदित्यमण्डलान्तःस्थ'मित्यादिनां सूर्यमण्डलान्तःस्थस्य गायत्र्यधिदैवतत्वबोधकवाक्यानां बाधः प्रसज्यते, स कथं समाधेय इत्यत आह न चेत्यादि न दोष इत्यन्तम् । तथा चात्रादित्याधिकरणकस्य ब्रह्मणो गायत्रीदेवतात्वं प्रकाश्यते न तु जगत्प्रसवितृत्वकृतं सवितृत्वं ततो निवार्यते, अतो यत्त्वयोक्तं पूर्वोक्तवचनसिद्धं गायत्रीदेवतात्वं सवितृशब्दस्य ब्रह्मवाचकतायां न लभ्यते, इति तद्बाधप्रसक्तिरूपो दोष उक्तः स नेत्यर्थः । यदुक्तं तस्य सूर्यपरत्वे 'येन सूर्यस्तपति तेजसेद्ध' इति श्रुतिः सङ्गता भवति न तु ब्रह्मपरत्व इति, तदप्येतेनैव दत्तोत्तरम् । एवं सवितृशब्दस्य ब्रह्मवाचकत्वं साधयित्वा तच्छब्दस्य भर्गशब्दोदितशिववाचकत्वमङ्गीकृत्य तच्छब्दाभिहितं शिवस्वरूपं ब्रह्मदेवतेति यदुक्तं तद्दूषयति तस्मादित्यादि श्रुत इत्यन्तम् । श्रुत इति, सविता देवता-

---

१ एतावत्पर्यन्तं कारिकाः पुण्यपत्तनस्थबृहदाङ्ग्लविद्यालयाध्यापकैः श्रीवल्लभाग्निकरुणैकधनैर्मग्नलालशास्त्रिभिर्गायत्रीभाष्याख्यमुद्रितग्रन्थसङ्गृहीताः, परन्त्वेतैर्नावबोधितं यत्त्वेताः कारिकाः प्रहस्तवादान्तर्गताः श्रीमत्पुरुषोत्तमप्रभुपादैः प्रणीता इति ।

वक्त्रमस्तकहृच्चूडारूपा अग्निपुरोगमाः ।
देवा उक्तास्तेषु मायोपाधिकः प्राङ् निरूपितः ॥ ८० ॥
अग्निं पुरेति मन्त्रे यो भवतोक्तः शिवस्ततः ।
उत्कृष्टः सविता ब्रह्म देवता निरुपाधिकम् ॥ ८१ ॥
जन्माद्यस्येति वाक्येऽपि व्यासैरेतद्विनिश्चितम् ।
श्रीमद्भागवतारम्भे भगवांस्तेन बुध्यताम् ॥ ८२ ॥
किञ्च, मैत्रायणीयानां पूर्वपादार्थरूपणे ।
इति षष्ठीमनादृत्य वरणीयः स तादृशा ॥ ८३ ॥
आत्मत्वेनोच्यते तेन परमात्मैव देवता ।
षष्ठी तु पुंसश्चैतन्यं तिलकानां वनं यथा ॥ ८४ ॥
तथाभेदोपचारेणेत्येवंतात्पर्यबोधनात् ।
विश्वामित्र ऋषिश्छन्दो गायत्री देवता रविः ॥ ८५ ॥

---

ग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयं रुद्रः शिखे'त्यादिवाक्ये श्रुत इत्यर्थः । तथा च प्रत्यक्षश्रुतिविरोधात् काल्पनिकं स्मार्तं चोपेक्ष्यमित्यर्थः ।

ननु तर्हि मास्तु तत्पदं देवतावाचकं सवितृपदमेव शिवरूपमभिधत्तां, इत्यत आह वक्त्रेत्यादि । मुखमस्तकेति वा पठनीयम् । अत्र शिव इत्यन्तमेकं वाक्यम् । तत इत्यारभ्य द्वितीयं भवतोक्त इति । ऊनचत्वारिंशे श्लोके मन्त्रमुक्त्वोक्तः ।

स्वोक्तमुपष्टभ्नाति जन्मेत्यादि ।

सवितृशब्दस्य ब्रह्मपरत्वं विवरणं श्रुत्युक्तलिङ्गेनोपोद्बलयति किञ्चेत्यादिबोधनादित्यन्तम् ।

ननु सवितृशब्दस्य ब्रह्मवाचकत्वे भरद्वाजस्मृतेर्निर्विषयत्वापत्तिस्तथा सति यथा 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चे'ति श्रुतिरपतितयजमाने सावकाशा 'वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि तु दहेदग्नौ यजमाने वृथा मृते' इति पतिताग्निप्रतिपत्तिविधायिकया निरवकाशया स्मृत्या बाध्यते । 'आनर्थक्ये प्रमाणानां विपरीतं बलाबल'मिति बलाबलवैपरीत्यात्तथात्राप्यस्तु, अन्यथास्याः निर्मूलत्वमापद्येतेतिशङ्कायां तस्या अवकाशं दर्शयन्नाह विश्वामित्र इत्यादि ।

---

१. "तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्मनीषिणः ।" इयं पङ्क्तिरपि श्लोकस्यास्य मध्ये वरीवर्ति ।

इत्यस्मरद्भरद्वाजस्तदुक्तं कमठान्प्रति ।
यथा ह्यग्न्यादयो देवा नानाभूताः स्थिता मखे ॥ ८६ ॥
कामिनां फलदानाय वस्तुतो हरिरेव हि ।
एकं सद्बहुधा विप्रा इति श्रुत्या विनिश्चितः ॥ ८७ ॥
तथात्रापि रविः प्रोक्तस्ततो निर्मूलतास्य न ।

यद्वा,

पुरः स्फूर्तिकमादाय रविरेतस्य देवता ॥ ८८ ॥
तदन्तःस्थितमादाय शिवः सोमोऽस्य देवता ।
सर्वान्तरविचारे तु भगवानेव देवता ॥ ८९ ॥
इदं च रविमध्येति श्रुतिस्मृतिविचारणात् ।
स्फुटत्यतो नर्षिवाक्ये विरोधः क्वापि कश्चन ॥ ९० ॥
तेनास्मदुक्त एवार्थ उररीकार्य इत्यतः ।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ ९१ ॥

---

विदुषां त्वस्मिन्नपि वाक्ये रविपदेन ब्रह्मैव स्फुरिष्यति इत्याह यथेत्यादिनेत्यन्तम् । एकं सदिति 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान्' 'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहु'रिति बह्वृचानां मन्त्रः ।

नन्वेवं सवितृपदस्य भगवद्वाचकत्वे कौर्मादिषु 'तदेकाक्षरमव्यक्तं तदादित्यगतं पर'मित्यादिवाक्यं शिवं प्रक्रम्य पठितं, तथा राजवंशानुकीर्तने गायत्र्या हिरण्मयं पुरुषमुपासमानस्य वसुमनसो राज्ञः शिवः सूर्यमण्डलादाविर्भूय साम्बं रूपमदर्शयदित्युक्तं, आदित्यपुराणे च 'गायत्र्याः परमं तत्त्वं शिवः, अन्यथा ज्ञानेन नरको भवती'त्यप्युक्तं, तद्विरुध्येतेत्याकाङ्क्षायां सर्वसामञ्जस्याय प्रकारान्तरेण तं दूषयन्नाह यद्वेत्यादि उररीकार्य इत्यन्तम् । वस्तुतस्तु पूर्वं सर्वेषां शब्दानां भगवद्वाचकस्य लिङ्गादेर्निर्णायकत्वस्य भगवतः सर्वरूपत्वादेश्च महता प्रपञ्चेन स्थापितत्वादियमाशङ्कैव नोदेति, तत्तदधिकारानुसारेण तथा तथा प्रादुर्भूय तत्तत्फलदानस्य 'फलमत उपपत्ते'रितिन्यायसिद्धत्वात् । अथापि ग्रहिलवादी न तूष्णीम्भवति, तदर्थमिदमुच्यते । एतेनैव यत्सुन्दरीतापिन्याः प्रथमखण्डे 'शैवेयं भगवती त्रिपुरे'तिप्रक्रम्य, तदधिष्ठातृत्वेन शिवं च प्रक्रम्य, द्वितीयादिखण्डेषु गायत्रीविवरणे पञ्चमखण्ड उक्तं, 'तस्मादुज्जृम्भते कामः कामं कामी शिवो मतः । कृष्णोऽयं कामदेवोऽयं वरेण्यं भर्ग उच्यत'इत्यादि, तदपि व्याख्यातं ज्ञेयम् । तादृशाधिकारिणः प्रति तस्य सार्थक्यात् । प्रतिवादिना अन्यैश्चेयं तथा नाद्रियत इति नास्माभिर्मूले विचारिता ।

यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ।
परिहाप्यापि वेदान्स्त्रीन्कर्माणि विहितानि च ॥ ९२ ॥
गायत्रीमात्रमाश्रित्य द्विजो भवति निर्भयः ।
गायत्रीहीनवेदास्तु साङ्गा अपि च निष्फलाः ॥ ९३ ॥
इत्यादिस्मृतिवाक्यानामैकमत्यमपि स्थिरम् ।
परं ज्ञानानुसारेण फलमित्यपि बुध्यताम् ॥ ९४ ॥
ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति ।
विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत् ।
इत्यादिवाक्यजातेषु तथोक्तेरित्यलङ्गिरा ॥ ९५ ॥

## इति गायत्र्यर्थनिर्णयः ।

यत्तु 'आग्नेयो वै ब्राह्मणो देवतये'ति, 'अग्निनैव देवेषु ब्रह्माऽभवद् ब्राह्मणेन मनुष्येषु'इतिश्रुतिभ्यामग्निब्राह्मणयोः साजात्यं स्थापयित्वा 'त्वन्देवेषु ब्राह्मणोऽस्म्यहं मनुष्येषु, ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावानी'ति छन्दोगश्रुतिं 'गुरुरग्निर्द्विजातीना'मिति स्मृतिं चोपन्यस्य, अग्न्यन्तर्यामिणः शिवस्याग्निसाध्यकर्मभिर्यजनरूपाराधनं ब्राह्मणकुलस्य प्रतिपादितं, तत्तथैव । परमेष विशेषो बोध्यः । तदाराधनं गुरुत्वोपाधिनैव । 'गुरुरग्निर्द्विजातीना'मिति भवदुपन्यस्तस्मृतेः । न देवत्वोपाधिना । 'अग्नौ तिष्ठति विप्राणा'मितिस्मृतेर्वि-

---

एवं सर्वं निर्णीय, मतान्तरं च दूषयित्वा विचारमुपसंहरिष्यन् सन्ध्याद्यावश्यकत्व-बोधकवाक्यानां सर्वप्रकारेष्वैकमत्यस्थैर्यमाह इत्यत आरभ्य स्थिरमित्यन्तम् । ननु यद्येवं तर्हि व्यर्थोऽयं दूषणाद्याडम्बर इत्यत आह परमित्यादिगिरेत्यन्तम् । तथाच फलभेदान्न वैयर्थ्यमित्यर्थः ।

अत्रेवं बोध्यम्, अपेयोक्तेऽन्वये अदन्तपक्षे तत्पदे लिङ्गव्यत्ययः सुब्लोकपकल्पना वा भर्गपदस्य विभक्तिव्यत्ययो वा व्यवहितान्वयो वा, सान्तपक्षे भर्गःशब्दस्य 'चक्षोः सूर्यो ब्रह्मेत'दितिवद्विकारेऽपि पदैक्यकल्पना चाधिका । अस्मत्पक्षे तु नैकमपीति ।

एवं पञ्चपञ्चाशश्लोकस्यार्थो दूषितः । अतः परं षट्पञ्चाशस्य दूषयितुमुपक्षिपति यत्त्वित्यादि । अत्र प्रथमा श्रुतिर्यजुःसंहितास्था द्वितीया बृहदारण्यकस्था ज्ञेया । ननु यद्यङ्गीकृतं तर्हि कोऽत्र दूषणावकाश इत्यत आह परमित्यादिना । नन्व'ग्नौ तिष्ठति विप्राणां दिवि देवो मनीषिणा'मितिस्मृतौ देवत्वेन भजनस्योक्तत्वात्कथं नेत्युच्यते इत्यत आह अग्ना-विग्यादि । अन्तर्यामित्वस्य प्रागेव दूषितत्वाच्च तथेतिभावः । शिवस्याष्टमूर्तित्वेन अग्न्यभिमा-

ष्णुमुपक्रम्य पठितत्वेन शिवासमर्पणात् ॥ 'अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च । षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृत'मिति ततः पूर्वं दर्शनात् । अस्तु वा देवत्वेन, तथाप्येकजातित्वोपाधिना क्रियमाणस्याराधनस्य कर्मसमृद्ध्यर्थमेव । तत्र 'विरूपाक्षोऽसी'ति प्रस्तुत्य, 'त्वां प्रपद्ये त्वत्प्रसूत इदं कर्म करिष्यामि तन्मे समृध्यतां तन्म उपपद्यता'मित्युपसंहारात् । किञ्चात्र मन्त्रे प्रपदनस्य जनकत्वोपाधिनोक्तत्वात्साजात्यमपि तत्प्रयुक्तमेव सिध्यतीति नान्तर्यामित्वोपाधिनाराधनलेशः । 'विरूपाक्षाय ब्रह्मणः पुत्राय नम'इत्युपसंहारे कथनाच्च ।

कल्पान्तरे फलदातृत्वं तु 'ब्राह्मसंवत्सरशतादेकाहः शैव उच्यत'इति चिरजीवित्वादप्युपपन्नम् ।

ब्राह्मणत्वसाधनदार्ढ्याय तृतीयस्कन्धस्थदितिवचनोपन्यासस्तु व्याजस्तुतित्वे पर्यवस्यति । तत्र हि 'न मे गर्भमिमं ब्रह्मन् भूतानामृषभोऽवधीत् । रुद्रः पतिर्हि भूताना'मिति प्रार्थयित्वा, 'वधं भगवता साक्षात्सुनाभोदारबाहुना । आशासे पुत्रयोर्मह्यं मा क्रुद्धाद् ब्राह्मणात्प्रभो'इति ब्राह्मणाद्रुद्राद्वधाभावो भगवता तद्वधश्चाशास्यत्वेनोक्तः । तत्र रुद्रेण क्रोधात्तद्वधे तेषामनुग्रहो नरकाधिकृतैर्न क्रियते, भगवता हतास्तु संसारादेव मुच्यन्ते । 'ये ये हताश्चक्रधरेण राजन् त्रैलोक्यनाथेन जनार्दनेन । ते ते गता विष्णुगतिं प्रपन्नाः क्रोधो हि देवस्य वरेण तुल्य'इति पाण्डवगीतावाक्यात् । 'अहो बकीयं स्तनकालकूटं जिघांसयापाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम'इतितृतीयस्कन्धवाक्याच्च । एवञ्जातीयकवाक्यान्तरेभ्यश्च । किम्बहुना भगवतः

---

नित्वा 'तस्मादग्निमुखे यत्तु दत्तं स्याद्येन केनचित् । तत्सर्वं रुद्रमुद्दिश्य दत्तं स्यान्नात्र संशय'-इति तदुपन्यस्तवाक्याच्च । देवत्वोपाधिनापि तदाराधनमङ्गीकृत्याह अस्त्वित्यादि । तथाच तदापि कर्माङ्गत्वमेव न तु मुख्यफलोपधायकत्वमपि तेन रूपेणेति भावः । ननु प्रपदनस्य कर्मसमृद्ध्यर्थत्वेऽपि प्रपन्नकृतस्य कर्मणः कुतो न मुख्यफलोपधायकत्वमित्यतो दूषणान्तरमाह किञ्चेत्यादि । नन्वधिकन्तत्रानुप्रविष्टं न तु तद्धानिरित्यतो दूषणान्तरमाह विरूपाक्षायेत्यादि ।

नन्विदमवतारविषयमतो न दोष इत्यत आह कल्पान्तर इत्यादि । अन्तर्यामित्वस्य प्रागेव निरस्तत्वेन एतेषां वाक्यानां तदेकवाक्यत्वाभावेन ब्रह्मकुलदेवतात्वेऽपि अभ्युदयफलदातृत्वमेव, तच्चोक्तरीत्याप्युपपद्यमानं नान्तर्यामित्वसमर्थनायालमित्यर्थः ।

ब्राह्मणत्वसमर्थनाय तृतीयस्कन्धीयवाक्योपन्यासस्तु तस्य भ्रान्तत्वमेवोद्घाटयति इत्याह ब्राह्मणत्वेत्यादि । स्पष्टमेतत् । एवं षट्पञ्चाशो दूषितः । सप्तपञ्चाशे यत्तेनोक्तं 'ब्रह्मा

स्मरणमेव यथाकथञ्चिदपि क्रियमाणं मुक्तये भवतीति स्मर्यते गरुडादिषु'अज्ञानिनः सुरवरेशमधिक्षिपन्तो यं पापिनोऽपि शिशुपालसुयोधनाद्याः। मुक्तिङ्गताः स्मरणमात्रविधूतपापाः कः संशयः परमभक्तिमतां जनाना'मित्यादिवाक्यदर्शनात्। 'आपन्नां संसृतिं घोरां यन्नाम विवशो गृणन्। ततः सद्यो विमुच्येत यद्बिभेति स्वयं भय'मित्यादिश्रीभागवतवाक्याच्च। कलिकालेऽपि शीघ्रं मुमुक्षुभिर्भगवानेव भजनीयः। 'कृते यद् ध्यायतो यज्ञैस्त्रेतायां यजतो मखैः। द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्'इत्येकादशस्कन्धादिवाक्यात्। एवञ्च ब्राह्मणत्वोपाधिनापि भजने मुमुक्षुत्वोपाधौ नान्यः सेव्य इत्येव सिध्यति।

अथ चेत् क्रममुक्तावधिकृतस्तदा सुखेनान्यं भजतु, ओमिति ब्रूमः।

यत्तु कूर्मपुराणीयं 'नृपाणां दैवतं विष्णु'रिति वाक्यं, तत्तु पालकविष्णुपरम्। कार्तवीर्यसुतानां संवादेन तत्रैव तथानिश्चयात्। भगवद्भजनं तु सर्वेषामेव विहितं 'देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा। भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयं'इति सप्तमे प्रह्लादवाक्यात्। 'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति पराङ्गतिम्। किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथे'तिगीतावाक्यात्। वर्णोत्प-

---

कृतयुगे देवस्त्रेतायां भगवान् रविः। द्वापरे दैवतं विष्णुः कलौ देवो महेश्वर'. इति, 'तस्मात्सर्वप्रयत्नेन प्राप्य माहेश्वरं युगम्। विशेषाद्ब्राह्मणो रुद्रमीशानं शरणं व्रजे'दिति कौर्मात्कलौ ब्राह्मणस्य शिवभजनमेवावश्यकमिति तत्रापि काञ्चिद्विशेषं दर्शयति कलिकालेत्यादि। एतेन 'नार्चयन्तीह ये रुद्रं शिवं त्रिदशवन्दितम्। तेषां दानं तपो यज्ञो वृथा जीवितमेव च। इतः पूर्वं कृतं कर्म भवद्भिरखिलं वृथा। लिङ्गार्चनं विना तेन मोहिता देवमायये'त्यादिनां व्यासादिवचनानामपि क्रममुक्त्यधिकारिपरत्वमभ्युदयेप्सुपरत्वं चेति बोधितम्।

ननु कौर्मे 'नृपाणां दैवतं विष्णुस्तथैव च पुरन्दरः। विप्राणामग्निरादित्यो ब्रह्म चैव पिनाकधृगि'तिवाक्याद् ब्राह्मणानां देवता शिवः, तदतिक्रमे च 'यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न पारं प्राप्नोति पापीयान् भवती'ति देवान्तरभजनादपि ब्राह्मणस्य न फलमिति यत्तेनोक्तं तस्य का गतिरित्यत आह यत्त्वित्यादि। कार्तवीर्यसुतानां संवादेनेति। अयं संवादः पूर्वभागे ऊनविंशेऽध्यायेऽस्ति। तत्र कार्तवीर्यपुत्रेषु जयध्वजो ज्येष्ठो विश्वामित्रवचनाद्विष्णुं भजति शूराद्योऽन्ये चत्वारः शिवभक्तास्तेषां परं परस्परं विवादे 'सात्त्विकी राजसी चैव तामसी च स्वयम्भुवः। तिस्रस्तु मूर्तयः प्रोक्ताः सृष्टिस्थित्यन्तहेतवः। सत्त्वात्मा भगवान्विष्णुः स स्थापयति सर्वदा। सृजेद्ब्रह्मा रजोमूर्तिः संहरेत्तामसो हरः' इत्युपक्रमे दर्शनादित्यर्थः। भगवदित्यादि। तथा चैवं श्रीभागतादिवाक्यैर्भगवान्स्तु

त्तिमुपक्रम्य, 'एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरिम् । श्रद्धयात्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभि'रिति । 'य एषां पुरुषं साक्षादात्मप्रभवमीश्वरं । न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यध'इति तृतीय एकादशे च मैत्रेयचमसयोर्वाक्ये अभजनादौ दोषस्मरणाच्च । तस्मान्मुमुक्षूणां द्विजत्वसंसारित्वब्राह्मणत्वदेवत्वमनुष्यत्वकालाद्युपाधिभिरपि भगवानेव सेव्य इति सकलशास्त्रनिर्गलितार्थः ।

अपराधसहिष्णुत्वमपि यथा भगवति तथा नेतरत्रेति दशमस्कन्धे भृगुकृतपरीक्षायां स्फुटमेव । ऐहिकफलदातृत्वं तु शिवे समुचितमित्युपपादितं मया भिन्दिपाले, तच्च भगवद्भक्तेरानुषङ्गिकं, 'अपत्यं द्रविणं दारा हारो हर्म्यं हया गजाः । सुखानि स्वर्गमोक्षौ च न दूरे हरिभक्तित'इति भारतवाक्यात । परं त्वेतत्तदीया नाकाङ्क्षन्ति, 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ? तथापि तत्परा राजन्न हि वाञ्छन्ति किञ्चने'त्यपि श्रीभागवतवाक्यादिभ्यः ।

---

सर्वेषामेव देव इति न पूर्वोक्तब्राह्मणदेवत्वाभाव इति भावः । किञ्च, विवाहोपशमार्थं सप्तर्षीन् प्रति प्रश्ने 'तानब्रुवँस्ते मुनयो वसिष्ठाद्या यथार्हतः । या यस्याभिमता पुंसः सा हि तस्यैव देवता । किन्तु कार्यविशेषेण पूजिताश्चेष्टदा नृणाम् । विशेषात्सर्वदा नायं नियमो ह्यन्यथा नृपा'इति कथयित्वा, 'नृपाणां दैवत'मित्यादयः श्लोकास्तैरुक्ताः, एतदग्रे 'देवानां देवता विष्णुर्दानवानां पिनाकधृ'गित्यादयोऽप्युक्तास्तेन ये देवांशास्ते वैष्णवा ये ब्राह्मणा दानवांशास्ते शैवा इति वामनपुराणोक्तवदेव फलति । किञ्चैतदग्रे तस्मिन्नेवाध्याये रौद्रादिसर्वास्त्राजेयविदेहाख्यदानवस्य वधे जयध्वजेन सुदर्शनास्त्रेण तं द्रष्टुमागतेन विश्वामित्रेण राजानं प्रति 'यतः प्रवृत्तिर्भूतानां यस्मिन्सर्वं यतो जगत् । स विष्णुः सर्वभूतात्मा तमाश्रित्य विमुच्यते । 'योऽक्षरात्परतो नान्यस्त्रिषु लोकेषु विद्यते । आनन्दपरमं व्योम स वै नारायणः स्मृतः । नित्योदितो निर्विकल्पो नित्यानन्दो निरञ्जनः । चतुर्व्यूहधरो विष्णुरव्यूहः प्रोच्यते बुधैः । परमात्मा परं व्योम परं धाम परं पद'मित्यादिना विष्णुमाहात्म्यमुक्तम् । ततो जयध्वजयज्ञे 'विष्णुःसाक्षाद्भागमग्रही'दित्याश्चर्यादिकमुक्तम् । तेन तस्मिन् रुद्रपरमतनुत्वेऽपि तत्र परब्रह्मावेशो भूयान् बोधित इति ज्ञायते । अन्यथा एतस्याः कथायास्तत्रानतिप्रयोजनत्वादुपन्यासो मुधैव स्यात् । एवं सति 'प्रस्वायै देवतायै च्यवते' इति श्रुतिरपि वस्तुतः परमात्मपरैव, पारप्राप्तिलिङ्गात् । पुरःस्फूर्तिकविचारे त्वभीष्टदेवपरा । तदापि मुमुक्षुत्वे देवान्तराच्च फलमित्येव सिध्यतीति किं बहु वदामः ?

सप्तपञ्चाशोक्तं दूषयित्वाऽष्टपञ्चाशोक्तोऽपि पूर्ववदेव, विशेषं दर्शयति अपराधेत्यादि वाक्यादिभ्य इत्यन्तम् । शीघ्रप्रसादत्वं ध्रुवादौ, भावैकगम्यत्वं गोपीजनादौ, निःसाध-

शिवलोकस्य विष्णुलोकोपरिष्ठत्वव्यवस्थापनमपि श्रद्धाविशेषादेव। काशीखण्डे स्वसर्वभारनिक्षेपार्थं स्ववामाङ्गादुत्पादितस्य बुद्धितत्त्वस्वरूपिणो विष्णोः सिद्धत्वेन तल्लोकादुपरितनत्वेऽपि सात्त्विकपुराणान्तरादिप्रतिपादित-लोकोपरितनत्वस्य तत्रत्यसन्दर्भविरोधादेवाशक्यवचनत्वात्। गुणावतार-विचारेऽपि सत्त्वोत्कर्षस्य विष्णावेव भृगुणा साक्षात्कृतत्वेन तल्लोकस्यैवोपरि-तनत्वौचित्यात्। 'सर्ववेदेतिहासानां सारं सारं समुद्धृत'मिति वाक्याच्छ्री-भागवतस्य तथात्वेन तत्र परब्रह्मण एव प्रस्तुतत्वेनास्मिन् सन्दर्भे तत्तद्गुणाव-तारस्यैव परामृष्टत्वात्, तत्रत्यस्य विष्णोः शिवस्य च शिवविष्णवंशरूपत्वा-भावात्। चतुर्थस्कन्धे प्रचेतसः प्रति शिवेन 'स्वकर्मशुद्धः शतजन्मभिः पुमान् विरञ्चितामेति ततः परं हि माम्। अव्याकृतं भागवतोऽथ वैष्णवं ततो यथाहं विबुधाः कलात्यये'इति गतिकथनप्रस्तावे स्वस्याव्याकृतत्वस्य ततः स्ववद्वैष्ण-वानां ततो भगवत्प्राप्तेरुक्तत्वेन तथानिश्चयात्। वस्तुतस्तु लोकोच्चनीचता नोत्क-र्षापकर्षप्रयोजिका, दहरविद्यायां तथानिश्चयात्। एतेनैव वायवीयशिवधर्मा-दित्यपुराणादिकमपि व्याख्यातं बोध्यम्।

यत्तूक्तं भारते बहुषु स्थलेषु यन्नारायणस्य शिवाराधनपरत्वं प्रतिपादितं तत्परब्रह्ममूर्त्यन्तररूपेण तेनापि शिवस्य स्वाराध्यत्वेन स्वस्यापि मूलभूतत्व-

---

नफलदातृत्वं गोकुले, वाञ्छिताधिकदातृत्वं सुदामनि प्रकटितं, तेन न बहु लिख्यते। शिवस्यैहिकामुत्रिकप्राकृतफलदातृत्वं स्वसमाभिर्विभूतिमुख्यत्वगुणसंस्थतत्वादिभिरभ्युपगम्यत एवेति सोंऽश ऊनषष्टिस्थो न प्रतिक्षिप्यते।

यः पुनर्लोकोच्चत्वादिव्यवस्थापनांशस्तत्र काशीखण्डवाक्यैः कृतस्तत्राह शिवलोके-त्यादि। तथा चैतदपि तत्तत्पुराणप्रतिपादितविष्णुस्वरूपस्य तत्तत्पुराणस्वरूपस्य च विचारे शिवलोकोच्चत्वादिव्यवस्थापनमपि यक्षबलिन्यायं प्रतिगर्जतीत्यर्थः। किञ्च शिवधर्मोत्तरे अपरशिवलोकं समाप्य' 'ऊर्ध्वं शिवपुरात् ज्ञेयं स्थानत्रयमनुत्तमम्। नित्यं परमशुद्धं च स्कन्दोमाशङ्करात्मक'मित्युपक्रम्य 'शुद्धस्फटिकसङ्काशं जटामुकुटमण्डितम्। त्र्यक्षं चतु-र्भुजं शान्तमक्षमालाधरं हरम्। वरदाभयहस्तं च त्रिशूलासक्तपाणिनम्। ध्यायमानः शिवं नित्यं शिवसायुज्यमाप्नुया'दिति शिवाहङ्ग्रहोपासकफलकथनेध्येयशिवस्वरूपस्थतापसवेश-लिङ्गादपि परशिवस्य भगवत्परत्वमेव निर्णीयते पाद्मगारुडादिवाक्यस्वारस्यादित्याशयेनाह एतेनैवेत्यादि। देवव्रतरुद्रोपनिषदादयस्त्वथर्वशिरःशिखाविचारादेव दत्तोत्तरा इत्युपरम्यते।

एवमूनषष्टितमोक्तं दूषितम्। तावता पुराणविमर्षः समापितः। अतः परं महाभारतता-त्पर्यं वदिष्यन्सप्तत्रिंशोक्तं दूषयितुमुपक्षिपति यत्तूक्तं भारतेत्यादि।

ख्यापनया सर्वाराध्यत्वख्यापनया च लोकानुग्रहार्थमादिमूर्त्या देवमानुष्यावतारविशेषैश्च नित्यत्वबुद्ध्या तत्तत्फलोद्देशेन च शिवाराधनमनुष्ठीयत इत्येतत्परं सच्छिवस्य विश्वाधिकत्वविश्वाराध्यत्वप्रतिपादने पर्यवस्यतीति वक्तव्यम्। महर्षेर्बहुशास्त्रनिबन्धप्रयासस्य प्रयोजनान्तरादर्शनादिति,

तदिदं स्वप्रज्ञाविलसितमात्रम्। श्रीभागवते भारततात्पर्यकथनेन तथावसायात्। तत्र हि, 'मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः। यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीतानु हरेः कथाया'मिति विदुरेण सर्वथा भगवद्विमुखानां यथाकथञ्चिद्भगवत्कथासु बुद्धिसिद्ध्यर्थं व्यासेन गौणतया भगवद्गुणा एवोच्यन्त इति व्यासोक्तितात्पर्यकथनात्। मार्कण्डेयेऽपि सर्वज्ञैः पक्षिभिर्भारते धर्मादिकथने भगवतः परत्वज्ञानस्यैव हेतुताबोधनाच्च।

किञ्चैतेनापि वेदस्यापि तात्पर्यं भगवत्येवेति सिद्धं, भारतस्य वेदव्याख्यानरूपत्वात्। 'भारतव्यपदेशेन आम्नायार्थश्च दर्शितः। मतिमन्थानमाविध्य येन वेदमहार्णवात्। प्रकाशो जनितो लोके महाभारतचन्द्रमाः। व्यासवाक्यजलौघेन कुतर्कतरुहारिणा। वेदशैलावतीर्णेन नीरजस्का मही कृते'त्यादिश्रीभागवतभारतमार्कण्डेयवाक्येभ्यः।

एवं सति वाराहे प्रागितिहासे रुद्रगीतासु 'रुद्राय यो वरो दत्तो' 'देवका-

---

दूषयति। तदिदमित्यादि। तत् इदं परिदृश्यमानं कपोलकल्पितमप्रमाणमित्यर्थः। तत्र हेतुः स्वप्रज्ञाविलसितमात्रमिति। हेतुगर्भमिदं पदम्। स्वबुद्धिविलासमात्रत्वादित्यर्थः। नन्वेतस्य तथात्वं कथं निश्चीयतामित्यत आह श्रीभागवतेत्यादि। तथा च न शिवस्य विश्वाधिकत्वादिबोधने महर्षेस्तात्पर्यमपि तु भगवति तात्पर्यमतस्त्वदुक्तमप्रामाणिकमित्यर्थः। स्वोक्तमर्थं पुराणान्तरेणाप्युपष्टम्भाति मार्कण्डेयेत्यादि। तच्च पूर्वं मार्कण्डेयपुराणतात्पर्योपन्यास एवोक्तम्। तत्र नारायणस्य चतुर्मूर्तेः स्वप्रतिष्ठवासुदेवस्येच्छया या सात्त्विकी मूर्तिः प्रद्युम्नाख्या सा रक्षार्थमवतरतीत्युक्तम्। धर्मग्लानौ वराहाद्यवतारानुक्त्वा 'वामनादींस्तथा चान्यान्न सङ्ख्यातुमिहोत्सहे। अवतारानजस्येह माथुरः साम्प्रतस्त्वयम्'। इति सा सात्त्विकी मूर्तिरवतारं करोति वै। प्रद्युम्नेति च सा ख्याता रक्षा कर्मण्यवस्थिता। देवत्वे च मनुष्यत्वे तिर्यग्योनौ च संस्थिता। गृह्णाति तत्स्वभावं च वासुदेवेच्छयासकृ'दिति। तेन वासुदेवे निरतिशयपरत्वज्ञापनमेव भारततात्पर्यमिति तैर्बोधितमतोऽस्माभिर्यत् प्रतिपादितं तदेव महर्षेरभिप्रेतं नतु त्वदुक्तमित्यर्थः।

एतेन यदस्माभिर्वैदिकविमर्षे प्रतिपादितं तदप्युपबृंहितमित्याह किञ्चेत्यादि।

तर्हि भगवत्कृतशिवपूजादिकथनस्य किं प्रयोजनं? तत्राह एवंसतीत्यादि कथनाच्चेत्यन्तम्।

यावतारेषु मानुषत्वमुपागतः। त्वामेवाराधयिष्यामि त्वं च मे वरदो भव,' तथा पूर्वं वैराजानेकादशादित्यानुक्त्वा 'मदंशो द्वादशो यस्तु विष्णुर्नाम महीतले। अवतीर्णो भवन्तं तु आराधयति शङ्कर'मिति च; यश्च पाद्मोत्तरखण्डे उमां प्रति शिवेनोक्तः, 'अलब्ध्वा चात्मनः पूजां सम्यगाराधितो हरिः। मया चास्मादपि श्रैष्ठ्यं वाञ्छताहङ्कृतात्मना। ततः साक्षाज्जगन्नाथः प्रसन्नो भक्तवत्सलः। अंशांशेनात्मनैवैतान् पूजयामास केशवः। देवान् पितॄन् द्विजान् हव्यकव्याद्यैः करुणामयः। ततः प्रभृति पूज्यन्ते त्रैलोक्ये सचराचरे। मां चोवाच यथा मत्तः पूज्यः श्रेष्ठो भविष्यसि। त्वामाराध्य तथा शम्भो गृहिष्यामि वरं सदा। द्वापरादौ युगे भूत्वा कलया मानुषादि'ष्विति; तदुभयानुरोधिनी शिवार्चनलीलापि सन्ध्योपासनादिलीलावद् व्यासेनोच्यते, न तु भगवदपेक्षयापि तत्र निर्व्याजोत्कर्षार्था। 'यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभू'दिति तृतीयस्कन्धे गङ्गासम्बन्धेन शिवस्य परमशिवत्वबोधनात्। चतुर्थस्कन्धे प्रचेतसः प्रति शिवेन स्वस्याव्याकृतत्वकथनाच्च।

एवं परशिवस्वरूपे पौराणिकरीत्यापि सिद्धे यद्भारते कृष्णतपश्चर्यायामुक्तं, 'ततोऽन्वपश्यद्गिरिशस्य पार्श्वे स्वात्मानमव्यक्तमनन्तरूपम्। स्तुवन्तमीशं बहुभिर्वचोभिः शङ्खासिचक्रार्पितहस्तमाद्य'मिति, तदपि उक्तरूपं शिवमादाय गुणमूर्तिपरं वाराहोक्तविष्णुपरं वा ज्ञेयम्। वरानुरोधेन तदुत्कर्षख्यापनस्यावश्यकत्वात्। कौर्मादावप्ययमेव न्यायो द्रष्टव्यः। तत्रेश्वरगीतायां शिवेनाध्यायचतुष्टयेन परदेवताऽभेदेन स्वमाहात्म्यमुक्त्वा, पञ्चमे 'एतावदुक्त्वा भगवान् योगिनां परमेश्वरः। ननर्त परमं भावमैश्वरं सम्प्रदर्शयन्निति नृत्यं कृतमिति व्यासेनोक्तं, तदाशयश्च वराहे शिवेनोक्तः 'भैरवेण स्वरूपेण देवकार्ये यदा पुरा। नर्तितं तु मया सोऽयं सम्बन्धः पापकर्मणा'मिति। तथा सप्तमाध्याये 'अन्यद्गुह्यतमं वक्ष्ये' इत्युपक्रम्य, 'अहं ब्रह्ममयः शान्तः शाश्वतो निर्मलोऽव्यय' इतीश्वरगीतायां ब्रह्ममयत्वमेवोक्तं, न तु ब्रह्मत्वम्। तस्मादेष एव निश्चयः।

---

ननु यद्येवं तदा सप्तत्रिंश एकपञ्चाशे च प्रदर्शितस्य 'ततोऽन्वपश्य'दितिकौर्मवाक्यस्य कथमविरोध इत्यत आह एवं परेत्यादि। गुणमूर्तिपरमिति। मार्कण्डेये भारतार्थकथने कृष्णावतारस्य प्रद्युम्नांशत्वकथनात्तस्याद्यं प्रद्युम्नरूपमेवेति तत्परमित्यर्थः। उक्तवाक्यस्य भारतीयत्वेऽयं प्रकारः। कौर्मत्वे द्वितीयमाह वाराहेत्यादि निश्चय इत्यन्तम्। कौर्मतात्प-

अत एव मोक्षधर्मे 'यद्यहं नार्चयेयं तमीश्वरं वरदं शिवम् । आत्मानं नार्चयेत्कोऽपि इति मे भावितं मनः । मया प्रमाणं हि कृतं लोकस्तदनुवर्तते । नहि देयोऽस्ति कश्चिन्मे वरः पाण्डवनन्दन । इति सञ्चिन्त्य मनसा पुराहं विश्वमीश्वरम् । पुत्रार्थमाराधितवानहमात्मानमात्मने'तिभवदुपदर्शितभगवद्वाक्येषु लोकानां स्वस्वाभिमन्तुरर्चनार्थमेव स्वाहङ्काराधिष्ठातुराराधनं मया वरापेक्षया अभावे पुत्रार्थं कृतमित्युक्तम्, अन्यथा तस्य पूज्यत्वं न स्यात् । अत इदं शिवस्य सर्वाराध्यत्वज्ञापनबीजं, न तु भवदुक्तम् ।

---

र्थस्य वाराहे बहुश उक्तेरिति भावः । अत्र 'निश्चय' इत्युक्त्या इदं बोधितम् । यत्तेनाग्रहवादमालम्ब्य वाक्यजातमुदाह्रियते तदेव विचारितं सत्तन्मते प्रतिकूलं भूत्वा वाक्याभासतां स्वस्याविष्करोतीति । तथा हि, यत्तावत् ' सर्वे विष्णुमया देवाः सर्वे विष्णुमया गणाः । न हि विष्णुसमा काचिद्गतिरन्या विधीयते । इत्येनं सततं वेदा गायन्ते नात्र संशयः । स एव भगवान् देवस्तव लिङ्गार्चने रतः । तव प्रणामैकरतः कथं देवो ह्यभूत्प्रभो'इति पितामहेन पृष्टे 'भवान्नारायणश्चैव शक्रः साक्षात्सुरेश्वरः । मुनयश्च सदा लिङ्गं सम्पूज्य विधिपूर्वकम् । स्वं स्वं पदमनुप्राप्तास्तस्मात्सम्पूजयन्ति त' इति लैङ्गे शिववचनम् । 'ब्रह्मणा विष्णुना वापि रुद्रेणान्येन केन वा । लिङ्गाराधनमुत्सृज्य क्रियते स्वपदस्थिति'रिति शिवपुराणीयं च प्रदर्शितम् । तत्रापि वेदे सर्वोत्कृष्टत्वेन वेद्यस्य कथं लिङ्गार्चनमिति प्रश्नाशयस्त्वत्समान एव लिङ्गार्चनं करोति यो योनित्वेन निर्दिष्टो न तु परमस्त्वत्पृष्ट इत्युत्तराशयो लैङ्गस्य ज्ञेयः । अत एव पुराणारम्भेऽध्यायद्वयेन लैङ्गस्येशानकल्पानुसारित्वमनुक्रमणीयं चोक्त्वा तृतीये पुराणार्थं समासेन वदन् सूतः ' अलिङ्गी भगवान् बीजी स एव परमेश्वरः । बीजं योनिश्च निर्बीजं निर्बीजाद्बीजमुच्यत' इति भगवतः परमेश्वरस्यैवाग्रे 'परमात्मा मुनिर्ब्रह्मा शुद्धबुद्धस्वभावतः । विशुद्धो यस्ततो रुद्रः पुराणे शिव उच्यत' इति शिवत्वमाह, न तु शिवस्य भगवत्त्वं परमेश्वरत्वं वा । भगवत्त्वं त्वनौपचारिकं वासुदेव एव सिद्धं वैष्णवे प्रदर्शितमतो मदुक्त एवार्थः फलति । शैवे तु प्रसिद्धमेव गुणमूर्तिपरत्वम् । तदेतदभिसन्धायोक्तं निश्चय इति ।

यच्च कौर्मे 'कः समाराध्यते देवो भवता कर्मभिः शुभैः । ब्रूहि त्वं कर्मभिः पूज्यो योगिना ध्येय एव च'इतिमार्कण्डेयप्रश्ने कथितं सर्वं तथ्यमेव 'भगवता, न संशयः । तथापि देवमीशानं पूजयामि सनातन'मित्यारभ्य 'न वै पश्यन्ति तं देवं मोहिता मम मायया । ततोऽहमात्मनो मूलं ज्ञापयन्पूजयाम्यह'मिति कृष्णावतारस्य भगवतो वाक्यं, तत्रापि मार्कण्डेयोक्तस्य तथ्यत्वकथनेन स्वात्मनोमूलमित्यत्र जीवात्मनो मूलमित्येवार्थो यतस्तस्मिन्नपि पुराणे वस्तुतो भगवत एव परमेश्वरत्वं प्रतिपादितं, शिवस्य तु तदभेदेनेति भिन्दिपाले मयोपपादितमित्याशयेनाह अत एवेत्यादि, न तु भवदुक्तमित्यन्तम् । तथाचैवंविधानि परस्परविरुद्धार्थानि

वस्तुतस्तु नारायणमेवोपक्रम्य तत्क्रोधसम्भवं नारायणात्मकं शिवं कण्ठत उक्त्वा, भगवता 'यद्यह'मित्यादिवाक्यानां कथनान्न चाशङ्का न चोत्तरमिति दिक्। अहङ्काराधिष्ठातृत्वं च 'रुद्रोऽभिमत्या हृदयं' 'सर्वात्मनोऽन्तःकरणं गिरित्रं' 'चन्द्रो मनो यस्य दृगर्क आत्मा ह्यहं' 'शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः। वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधे'ति श्रीभागवते 'अहङ्कृतात्मने'ति पूर्वोक्तवाराहे च स्फुटमेवोक्तम्। अत एवंविधैः शिवाराधनादिलिङ्गार्चनादिवचनसहस्रोपन्यासैरपि भगवतो न निकर्षलेशोऽपीति। यत्र यत्र विष्णुशब्दस्तत्रतत्र स पूर्वोक्तमेवांशमादित्येषु द्वादशं उमांशभूतं वा पालकं वा पुराणान्तरोदितशिवांशं वादाय लोकप्रवृत्त्यर्थं नटवद्वा प्रयुक्तो बोध्यः। अत एव गीतायां 'अहं सर्वस्य प्रभव' इत्यादि, 'आहुस्त्वामृषयः सर्वे'

---

लिखँस्तदेकवाक्यताप्रकारमननुसन्दधानो देवानाम्प्रिय एवेत्यर्थः। अहमात्मानमिति, अहङ्काराधिष्ठातारम्।

अहङ्काराधिष्ठातृत्वं न काल्पनिकमित्याशयेनाह अहमित्यादि।

एतेनैवैकादशे श्लोक उक्तानां श्रीभागवतसौप्तिकद्रोणपर्वपराशरपुराणकाशीखण्डहरिवंशवाक्यानामत्रोक्तानां च लिङ्गार्चनशिवमाहात्म्यादिप्रतिपादकद्रोणपर्वीयव्यासवाक्यशान्तिपर्वीयभीष्मवाक्यानुशासनिकोपमन्युवाक्यादीनां तदुपन्यस्तानां गतिमाह अत एवमित्यादि। तथा च यत्तेनोक्तं वाराहोक्तवरदानकीर्तनस्यापि पाशुपत्यवरदानकीर्तनवदन्यथासिद्धिसम्भवादयुक्तत्वात् तामसजनव्यामोहार्थं विष्णोः शिवाराधनमिति, मूर्खप्रलापस्य सर्वप्रमाणविरुद्धत्वेन निराकरणानर्हत्वान्न पूर्वोक्तविश्वाधिकत्वप्रतिक्षेप इति, तदपि पशुशेषित्वस्थापकज्ञानघनमतदूषणे पाशुपत्यवरयाचनतात्पर्यनिर्धारणादसङ्गतमित्यर्थः। यत्तु गीतादिषु कृष्णस्य सर्वकारणत्वादिवचनानां तन्मूर्तावसम्भवादार्थिकतया क्वचिन्मूलमूर्तौ पर्यवसानसापेक्षाणां प्रदेशान्तरप्रसिद्धसर्वादिमूलभूतशैवमूर्तावेव पर्यवसानमिति भारतमविरोधेन शिवोत्कर्ष एव विश्राम्यतीत्युक्तं, तत्तु पूर्वोक्तगीतानुगीतेश्वरगीतानां तात्पर्यकथनादेव निरस्तमित्याशयेनाह अत एव गीतायामित्यादि। यदप्युक्तं 'भारते क्वचिच्छिवनिकर्षवचनमिव प्रतीयते, तत्सर्वं विष्णुविरिञ्चाद्युद्भूताशिवावतारभेदविषयमेव। तत्र तमोगुणोपाधित्वसंहारकारित्वहरिक्रोधप्रभवत्वविरिञ्चिललाटोद्भवत्वाद्यन्यतमपरशिवव्यावृत्तविशेषणोपादानेन विभूतिरूपत्वनिश्चयादिति। ततो भारतकौर्मवायूक्तिसौरभीष्मपर्वसभापर्वराजधर्मादिवाक्यैः स्थाणुशब्दस्य शिवविभूतिरूपवाचकत्वं स्थापयित्वोक्तं, यत्र तादृशस्यांशविशेषनाम्नोऽप्यग्रहणं, तत्रापि विधातुर्विष्णोर्वा परशिवादुत्कर्षस्यासम्भवादिति, तत्रापि विष्णुनिकर्षवचनेष्वपि सात्त्विकत्वस्थापकत्वशिवाङ्गप्रभवत्वादिकं तत्र भारते शैवेषु पुराणेषु च दृश्यमानं

इत्यादि, 'अवजानन्ति मां मूढा' इत्यादि चोक्तम् । तेन 'मूढानामेवान्यथा बुद्धि'रितिभारतं भगवत्परमेव सर्वम् । अत एव शान्तिपर्वणि 'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनं' इत्युक्तम् ।

यत्त्वीश्वरगीतायां 'ऋते मामेकमव्यक्तं व्योमरूपं महेश्वर'मित्युत्तरार्धं पठितं, तदपि निर्गुणप्रतिपादनोत्तरं पठितत्वान्निर्गुणपरमेव न तु सोपाधिकमहेश्वरपरम् ।

यत्पुनः 'पदं यद्ब्रह्मे'तिद्विचत्वारिंशश्लोकव्याख्याने भारतीयादिपर्वपद्ये 'मूलं कृष्णो ब्रह्म च ब्राह्मणाश्चे'त्यत्र ब्रह्मपदेन मुख्यतया शिवप्राप्तिमुक्त्वा, पुनर्ब्रह्मतर्कस्तवे 'द्वैपायनः स भगवा'नित्यादिश्लोकद्वयव्याख्याने निर्णीतं, विष्णोर्द्विजातीनां च पृथग्ग्रहणाद्वेदतपसोरचेतनयोश्चेतनमध्यपाठाङ्गीकारे प्रायपाठविरोधान्न तद्ग्रहणं युक्तं,किन्तु ततोऽन्यस्यैव कस्यचिद्, वृक्षस्थितौ मूलस्येव राजभावोपगूढयुधिष्ठिरस्थितौ कारणस्य ग्रहणं युक्तं तथाभूतश्च शिव एव। यद्यपि द्रोणपर्वणि शिवस्तोत्रे 'रूपं ज्योतिःशब्द आकाशवायुर्दिव्यः स्पर्शः सलिलं गन्ध उर्वी। कालो धर्मो ब्रह्म च ब्राह्मणाश्च त्वत्सम्भूताः स्थाष्णु चरिष्णु चेद'मिति ब्रह्मपदस्य ब्राह्मणपदसमभिव्याहारेऽपि वेदपरत्वं दृष्टं तथेहापि शक्यं सम्भावयितुं, तथापि तत्र रूपज्योतिरादीनामचेतनानां बाहुल्येन चेतनप्रायपाठाभावादिह तु तद्वैपरीत्यादत्र शिव एव ग्राह्यः ।

---

भगवद्द्वयाद्वृत्तं विशेषणं कुतोऽनेन नानुसन्धीयते विचारकम्मन्येनेति बोध्यम् । तथा स्थाणुस्वरूपमेवमत्र वदन्नेकत्रिंशस्य व्याख्याने परशिवपरतयाभिमतस्य 'यो देवानामिति' मन्त्रार्थस्योपबृंहणत्वेन 'अव्यक्तादभवत्स्थाणुः शिवः परमकारण'मिति लैङ्गं कथं वा लिखितमित्यपि बोध्यम् । यत्पुनः पराशरपुराणे 'वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते रुद्रस्यासौ हरस्यास्य विभूतेरेव केवल'मिति वाक्यमुपन्यस्तं, तत्तु त्रयोदशश्लोकोपन्यस्तसूतसंहितावचने 'तस्मायःपिण्डवीद्गमा रुद्रमूर्तिः परस्य तु । मूर्त्या तुल्यान्यमूर्तिभ्यो लक्षणैर्मुनिसत्तमाः । परन्तत्त्वस्य नामानि प्रत्यासत्त्या मुनीश्वराः। त्रिमूर्तीनान्तु रुद्रस्याप्यभिधानानि सुव्रता'इति रुद्रमूर्तौ परशिवप्रत्यासत्तिबोधनादेव दत्तोत्तरं्यदिह परशिवप्रत्यासन्नो रुद्रः परम पुरुषमूर्तिभूताद्विष्णोस्तथा तदा पराशिवोऽपि मायोपहितो निरुपाधिकाद्वासुदेवादिति अत्र चतुश्चत्वारिंशे तेनोपन्यस्तं वचनद्वयमपि गमकं दर्शयति अत एव शान्तीत्यादि । तथा च तेनाऽपि निर्गुणपरत्वं वाक्ययोस्तत्राङ्गीकृतं, निर्गुणस्य साकारत्वादिकन्तु प्रागेवोपपादितमतो नात्र कोऽपि चोद्यावकाश इत्यर्थः । एवं सप्तत्रिंशस्यार्थो दूषितः ।

न च श्रीकृष्णस्य सर्वविधसहायकर्तृत्वेन युधिष्ठिरराज्यस्थितिहेतुत्वं यथा सुप्रसिद्धं न तथा शिवस्येति 'मूलं कृष्णो'ति श्लोके ब्रह्मपदं कृष्णविशेषणसमर्पकमिति शङ्कनीयं, आरण्यपर्वणि सकलदेवासुराद्यविज्ञातपाशुपतास्त्रदानेन, द्रोणपर्वणि शतरुद्रिये शिवेन युद्धे साहाय्यकरणप्रतिपादनेन, अश्वमेधे द्रोणकर्णमुखैर्गुप्तां महेष्वासैः प्रहारिभिः। कस्तां सेनां महाराज मनसापि प्रधर्षयेत्? ऋते देवान्महेश्वासाद्बहुरूपात्पिनाकिनः। तस्यैव च प्रसादेन निहताः शत्रवस्तथे'ति भीमवचनेन, सौप्तिके शिवनियुक्तभूतकृतशिबिररक्षणकथनेन, आदिपर्वणि पञ्चेन्द्रोपाख्याने पञ्चेन्द्रान्प्रति मानुषेष्ववतीर्यासुरराजन्यान् हत्वा प्रत्यागन्तव्यमिति नियोगेन, तदीयजयोपयोगिसकलकार्यधूर्वहत्वस्य पूर्वोक्तरीत्याविष्करणेन चावतरणमारभ्यान्तं साहाय्यकरणस्य सुप्रसिद्धत्वात्।

श्रीकृष्णकृतसाहाय्यस्यापि द्रोणपर्वणि शतरुद्रियाध्यायेऽश्वत्थामानं प्रति कृष्णार्जुनयोरजेयत्वबोधके व्यासवचने 'योऽसौ नारायणो देवः पूर्वेषामपि पूर्वजः। आदिदेवो जगन्नाथो लोककर्ता स्वयम्प्रभुः। आद्यः सर्वस्य लोकस्य अनादिनिधनोऽच्युतः। व्याकुर्वते यस्य तत्त्वं श्रुतयो मुनयश्च यः। अजोऽजेयः सर्वभूतैर्मनसापि जगत्पतिः। तस्मादिमं जेतुमिच्छन्नज्ञानतमसावृत'इत्येवं माहात्म्यमुक्त्वा, तदंशभूतनारायणेन मैनाके षट्षष्टिसहस्त्रवर्षावधि वारत्रयं तपसि कृते, प्रसन्नाच्छिवाद् 'भक्तं हि मां भजमानं भजस्वे'ति प्रार्थनपूर्वकमतिदुर्लभवरप्रार्थनायां कृतायां 'मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु। अप्रमेयबलात्मा च नारायण भविष्यसी'त्यादिना 'अपि चेत्समरं प्राप्य भविष्यसि ममाधिक'इत्यन्तेन दुर्लभानेकवरदानोक्त्या श्रीकृष्णस्यापि तत एव सामर्थ्यप्राप्तिमूलकत्वबोधनेन तत्कृतसाहाय्यस्यापि शिव एव विश्रान्तेश्च ब्रह्मपदस्य कृष्णविशेषणत्वानौचित्यात्। दृश्यते च, 'युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः। माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्चे'तिवद् 'दुर्योधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः। दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रो मनीषी'तिद्वितीयश्लोकेऽपि चेतनैरेवावयवै रूपकं, तस्मादत्र निरुपपदेन शिव एवोच्यते इति निश्चयः।

तदप्यनवधानविजृम्भितमेव। असङ्ख्याभिः शाखावितितिभिरित्यस्य सप्तत्रिंशत्पद्यस्य विवरणे 'ऋग्वेद उवाचे'त्यादिब्रह्माण्डपुराणीयसन्दर्भोपन्यासेन वेदानां प्रणवस्य च चेतनतायाः स्वयमेव स्फोरणेनात्र तद्विस्मरणात्। न च

तत्र तत्तदभिमानिपरमतो न दोष इति वाच्यं, अत्रापि शाह्वशरीराधिष्ठितस्य तस्यैव शक्यवचनत्वात् । ब्रह्मशब्दस्य तपोवाचकत्वपक्षेऽपि 'यस्य ज्ञानमयं तप'इत्यादिश्रुत्या भगवत्तपसोऽपि तथात्वादन्यतरग्रहणे प्रायपाठस्य बाधात् । निरुपपदेन ब्रह्मपदेन शिवस्यैवौचित्यपरिशेषाभ्यां प्रवेशस्य दुर्घटत्वात् ।

किञ्चात्र राजभावोपगूढयुधिष्ठिरस्थितिहेतुत्वेन मूलत्वं न विवक्षितं, अत्र तद्गमकाभावाद्, अग्रे राज्यनाशस्यापि दर्शनाच्च । किन्तु धर्मोपगूढयुधिष्ठिर-स्थितिहेतुत्वेन तद्विवक्षितं, 'धर्ममय'इति पदादग्रे तदनाशाद्युधिष्ठिरकीर्तनेन धर्मवृद्धयुक्तेश्च । अतः साहाय्यमपि धर्मस्थापनेनैव विवक्षितं, तदेव च भगवत्कृतं राजसूयाश्वमेधभीष्मोपदेशादिषु स्फुटम् । युद्धादौ साहाय्यं तु युद्धस्य राजसूयविपाकत्वादप्रधानत्वेन । तस्य च संहारकसापेक्षत्वात्तद्गौणम् । किन्तु पोषकत्वेन तदुपयुज्यते । तेन पञ्चेन्द्रोपाख्यानाद्यवगततदीयजयोपयोगिसकलकार्यधूर्वहत्वादिकमपि तत एवोपपद्यमानं न मूलत्वसाधनायालं भवति । सौप्तिकोक्तसाहाय्यं तु तवैव लज्जाकरं द्रौपदेयादिनाशात् । वरप्रार्थनादिकं तु पाद्मादि-प्रसिद्धभगवद्दत्तवरनिर्वाहायेत्यसकृदुक्तमेवेति न तेन मूलत्वस्यापि सिद्धिः ।

किञ्च शिवस्य मूलत्वे साक्षाद् ब्रह्मत्वे च विवक्षिते मूलं शिवो ब्रह्मेति वदेत् । निरुपपदस्य ब्रह्मपदस्य शिववाचकत्वाय वदने इतरान् मूलत्वेन न वदेत् । अग्रिमश्लोके'मूलं राजा धृतराष्ट्रो मनीषी'ति तद्विशेषणत्वेन वा पदा-न्तराणि वदेत् ।

किञ्च, श्रीकृष्णस्य पाण्डवसर्वापन्निवारकत्वं शिवप्रसादबलाधीनं भवतोऽभिमतं, तथा च सर्वत आवश्यकः शिव एवेति तमेव वदेन्न कृष्णम् । अत एव तर्कपराहतत्वान्न शिवस्य मूलत्वं विवक्षितमिति निश्चयः, किन्तु कृष्णस्यैव मूलत्वं विवक्षितम् । ब्रह्मपदं च तस्यैव विशेषणं, 'आहुस्त्वामृषयः सर्वे' इत्यादिभि'रनयोरेको बलभद्रो बभूवे'त्यादिभिश्च ब्रह्मत्वेन तदंशत्वेन च द्वेधा कृष्णस्य वक्ष्यमाणत्वाद्, द्रोणपर्वणीयव्यासाश्वत्थामसंवादोपन्यासेन मूल-नारायणतदंशनारायणयोर्भवतापि स्मारितत्वात्कः कृष्णो मूलत्वेन विवक्षित इति भाविसंशयानुत्पादाय पूर्वमेव तद्विशेषणत्वेन ब्रह्मपदनिर्देशात् । न चैवं-सति 'ब्रह्म चे'ति चकारस्यासङ्गतिरिति वाच्यं, तद्विभूतीनां शिवादिदेवा-नामनुक्तत्वेन तत्समुच्चायकत्वात् ।

एवमेव'ब्राह्मणाश्चे'त्यत्र विप्रादिसमुच्चायको ज्ञेयः । उचितं चैतत् । तत्त्ववै-मुख्ये दक्षादीनां मुख्यफलाभावस्य देवानां हविर्ग्रहणे अङ्गादियज्ञव्यङ्गत्वस्य

ब्राह्मणाद्यतुष्टौ नृगादिनां कृकलासादिभावस्य पुराणप्रसिद्धत्वेन तेषामानुकूल्यस्य धर्मस्थापकत्वात्। तस्मादत्र भगवत एव मुख्यतया मूलत्वं, न तु शिवरूपस्येति निश्चयः।

यत्पुनर्ब्रह्मतर्के 'अविमुक्तोपासनास्थानत्वेनातिशुद्धाद्ब्रह्मनारायणललाटाच्छिवस्याभिर्व्यक्तिर्न तु नारायणस्येव ब्रह्मणो नासापुटात्कश्यपान्मनुष्यमात्राद्वा, न वा पुरुषवीर्यानुप्रवेशान्न च योनितः प्रसव'इति,

तदपि निमील्यैव। मार्कण्डेयपुराणे उत्सङ्गान्नीललोहितोत्पत्तेरुक्तत्वात्। 'प्रादुरासीदथाङ्केऽस्य कुमारो नीललोहितः। रुदन्वै विस्वरं सोऽथ द्रवंश्च द्विजसत्तमे'ति वाक्यात्। कूर्मपुराणे एव 'द्वैपायनाच्छुको जज्ञे भगवानेव शङ्कर'इति शिवावतारत्वेनोक्तस्य शुकस्य महाभारतेऽग्निचिकीर्षयारणीं मथतो व्यासस्य घृताचीदर्शनादरण्यां पतिते रेतसि शुक्रे निर्मथ्यमाने 'स शुको जज्ञे महातपा' इत्यनेनोत्पत्तिरुक्ता।

कालिकापुराणे च सगरौर्वसंवादे पौष्पस्य राज्ञः पुत्रश्चन्द्रशेखरनामा शंकरांशः पौष्पस्य राज्ञो ब्रह्मणा फले दत्ते शिवाज्ञया तस्य तिसृभिः पत्नीभिर्भक्षिते तत आर्तवे गर्भाधाने कृत एकस्यां चन्द्रलेखायुतं शिर इतरस्यां मध्यभागोऽन्यस्यां नाभ्यधो भागोऽजनि, तत एकीकृते बालकश्चन्द्रशेखराख्यो बभूव। तदिदमध्यायचतुष्टयेनोक्तम्। 'यथा पौष्पसुतो जातो भर्गः स चन्द्रशेखरः। तारावती ककुत्स्थस्य गृहे गौरी यथाभवत्। तत्सर्वं कथयामास नारदश्चन्द्रशेखर'इत्यादियुगपद्योनित्रयात्प्रसूतिरिति तद्दर्शनात्।

यदुक्तं सप्तदशादिश्लोकव्याख्याने रामकृष्णावतारयोः शोकमोहभीत्यादिपारवश्यस्य तत्र तत्र प्रपञ्चितत्वात् तत्रापि तदुद्घाटितं स्यादिति,

तत्राप्येष विशेषः। भगवति तु 'निर्दोषश्चेत्कथं विष्णुर्मनुष्येषु प्रजायते? चिन्ताश्रमव्रणाज्ञानदुःखयुग्दृश्यते कथम्? एवं मे संशयो ब्रह्मन् हृदि शल्य इवार्पित' इति नारदप्रश्ने 'स्त्रीपुम्मलानुषङ्गात्मा देहो नास्य विजायते। किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुम्। प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा। तथाप्यसुरमोहार्थं परेषां च क्वचित् क्वचित्। दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः। क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे। दौर्लभ्याचैव मोक्षस्य दर्श-

---

अतः परमष्टत्रिंशं विहाय भारतप्रसङ्गादेकचत्वारिंशोक्तं ब्रह्मतर्कोक्तं च दूषयति यत्पुनरित्यादि।

येत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृति'मिति ब्रह्माण्डपुराणे ब्रह्मणा मनुष्यभावेऽपि दोषाः परिहृताः ।

शिवस्य तु, ब्रह्मकपालसम्पर्कदुःखं, उमया त्यागः, वृकासुरभस्माङ्गदादिभ्यो मृत्युभयं,सतीशोकविरहदुःखे सतीशवस्य स्कन्धेनोद्वहनं, कामादिषु क्रोधो, बाणयुद्धादौ मोहश्च देवभावेऽपि, काशीखण्डश्रीभागवतवामनपुराणकालिकापुराणस्कान्दकेदारखण्डादौ प्रतिपादितः कचित् कश्चित् परिहृतः कश्चिन्नेति किं दुःप्रलापकारि वाच्यमितिदिक् ।

तथा रामायणेऽपि । यानि त्वादित्यहृदये 'ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नम' इत्यादिविशेषणानि, तानि त्वभिमानिन्यनन्वितानि, 'अत्ता चराचरग्रहणा'दित्यधिकरणोक्तपरमात्मपराणि सन्ति; रौद्रपदेन भ्रान्तानामेवान्यथाबुद्धिं जनयन्ति न तु विदाम् ।

यत्तूत्तररामायणे श्रीलक्ष्मणेन विष्णुसम्बन्धादश्वमेधे श्लाघिते तच्छ्लाघ्यत्वमङ्गीकृत्य भगवते लोपाख्यानकथनपूर्वकं शिवप्रीतिकरत्वं प्रतिपादितं, वसिष्ठादिभिश्चानुमोदितं, तदपि वाराहाद्युदितशैवोपपन्नतरम् । कौर्मादित्यवाक्येष्वपि तथा । वासिष्ठरामायणस्य प्रामाण्यं तु वाल्मीकिसंवादादेव शिष्टैरुपेयते । अस्तु वा यथा तथा, परं पूर्वोक्तं नान्यं नातिचरति ।

यत्त्वारण्यकाण्डे 'कृताभिषेकः स रराज रामः सीताद्वितीयः सह लक्ष्मणेन । कृताभिषेकस्त्वगराजपुत्र्या रुद्रः स विष्णुर्भगवानिवेश'इत्यादिकविना उपमाव्याजेन शिवोत्कर्ष उक्त इत्युक्तं, तेन सिध्यतूत्कर्षः परं तावता रामायणे तत्परत्वस्य कथं सिद्धिः? अत एतन्मज्जतः फेनावलम्बनं प्रतिगर्जति । तेन बालकाण्डे शिवनारायणयोः समरसन्नाहे 'अधिकं मेनिरे विष्णु'मित्यपि युक्तमेवेति दिक् ।

---

एवं भारतार्थं निश्चित्यैतमेव प्रकारं रामायणेऽतिदिशन्ग्रन्थिशोक्तं दूषयति तथा रामायण इत्यादि । 'चरितं रघुनाथस्य शतकोटिप्रविस्तर'मिति वाक्यात्सर्वं रामचरित्रप्रतिपादकमेव श्रीरामस्य परमपुरुषत्वं श्रीरामतापनीये प्रतिपादितं पुराणेषु पाद्मादिषूपबृंहितमगस्त्यसंहितायां च, तथा च तन्माहात्म्यप्रतिपादकस्य कतिपयवचनोपाख्यानादिषु किञ्चिच्छिवमाहात्म्यं दृष्ट्वा सर्वस्य तत्परत्वं वदतोऽतिवैयात्यमित्यर्थः । उक्तदार्ढ्याय तत्प्रदर्शितवाक्यानामाशयमाह यानीत्यादि । अर्थस्तु स्फुट एव ।

एवं धर्मशास्त्रेष्वपि मनुना शास्त्रोपक्रमे 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः । ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुद'इत्यादिना यस्य तमोनाशकस्यात्मनोऽण्डमध्ये सर्वलोकपितामहत्वमुक्त्वाग्रे स्वगुरुत्वमुक्तं, समाप्तावपि 'एवं स भगवान्देवो लोकानां हितकाम्यया । धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान्'इति शास्त्रं तस्मिन्नेव स्वगुरुत्वं चोपसंहृत्य शिष्याणां तत्परत्वाय तन्महिमानं स्वरूपं च स्मारयितुं 'सर्वमात्मनि सम्पश्येत् सदसच्च समाहितः । सर्वं ह्यात्मनि सम्पश्यन्नाधर्मे कुरुते मनः । आत्मा हि देवताः सर्वाः सर्वमात्मन्यवस्थित'मित्यादिना सर्वदेवतात्मकत्वमुक्त्वा, 'प्रशासितारं सर्वेषामणीयांसमणोरपि । रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं पर'मित्यन्तर्यामित्वं, 'एनमेके वदन्त्यग्निं मनुमेके प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतमिति नानामन्त्रप्रतिपाद्यत्वं च 'इन्द्रं मित्रं वरुणमग्निमाहु'रितिमन्त्रोक्तदिशा प्रतिपाद्य, 'एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः । जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रव'दित्यादिभिः, 'भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् । आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थित'इत्युक्तरूपैर्वा मूर्तिभिः संसारकत्वं चोक्त्वा, 'य एवं सर्वभूतेषु पश्यत्यात्मानमात्मना । स सर्वसमतामेत्य ब्रह्माप्येति परं पद'मिति तस्य सर्वात्मकत्वज्ञाने फलमाह । तेनोपक्रमोपसंहारयोरेकरूपत्वेन भगवत्येव पर्यवस्यति । अतो वृथैवार्थक्लेशेन शिवपरतयानयनम् ।

याज्ञवल्क्यस्तु धारणाध्याये ब्रह्मादिसदाशिवान्तधारणानन्तरं 'ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे । युक्तचित्तस्तदात्मानं योजयेत्परमेश्वरे, इति परमेश्वर आत्मयोजनं वक्ति, न शिवे । परमेश्वरस्तु गीताविचारे 'सत्यमध्ये स्थितोऽच्युत'इत्यनेन पूर्वव्यवस्थापित एवेति पूजाप्रकरणे 'विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः । तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दना'दित्यूचे । तेन न तत्रापि चोद्यावकाशः ।

---

अतः परमूनचत्वारिंशोक्तदूषणं हृदिकृत्वात्र मन्वाद्यर्थमाह एवं धर्मेत्यादि । अर्थक्लेशेनेति । मूर्तिपञ्चककरणकसर्वभूतव्याप्तेः शैवलिङ्गत्वमापाद्य तैत्तिरीयश्रुतिं 'स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोत'मिति प्रदर्श्य, सद्योजातादिपूर्वोक्तमूर्तिपञ्चकप्रतिपादनस्य तत्राङ्गीकरणरूपेणेत्यर्थः । इदञ्चास्माभिर्महानारायणोपनिषद्विचारे प्रागेव दूषितमिति नात्र पुनर्दूष्यते ।

योगियाज्ञवल्क्यार्थस्तु स्फुट एव पूर्वं प्रतिपादित इति स्मारयति याज्ञेत्यादि ।

आश्वलायनादिभिस्तु स्वश्रद्धाविशेषणोक्तमपि तस्य परमत्वं भगवन्महिमरूपत्वादुपपन्नमेवेत्यलं विस्तरेण ।

पतञ्जलिस्तु प्रणवस्य वाचकत्वं वदंस्तद्वाच्यस्येश्वरत्वमाह, तच्चानन्दामृतरूपं प्रणवं षोडशान्त'इत्यादौ निरुपाधिब्रह्मण्येव पर्यवस्यति न सोपाधिके ।

नैयायिकाद्यास्तु शिष्टापरिगृहीता एव ।

ब्रह्मसूत्रतात्पर्यं तु पूर्वमेव दर्शितम् ।

अतः सर्वशास्त्रेषु अन्धहस्तिन्यायेन स एव प्रतिपाद्यतेऽतो न कोऽपि चोद्यावकाशः ।

एतावान् परं विशेषः । 'अक्षपादप्रणीते च काणादे साङ्ख्ययोगयोः । त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः।जैमिनीये च वैयासे न विरोधोऽस्ति कश्चने'तिपराशरोपपुराणवाक्याद्वेदाविरुद्धांश एव दर्शनान्तरस्य प्रामाण्यम् ।

---

तदुपन्यस्तानामाश्वलायनबौधायनवाक्यानां तात्पर्यमाह आश्वलेत्यादि अलमिति । तत्र विष्णोर्गुणमूर्तेरेव प्रवेशान्न पुनस्तद्विचार्यत इत्यर्थः ।

यत्तेन पतञ्जलितात्पर्यं शिव इति प्रतिपादितं तत्तु पूर्वोक्ततापनीयश्रुतिस्मारणेनैव दूषयति पतञ्जलिरित्यादि । तथा च पतञ्जलेस्त्वयमाशयः कौमुदीकारादिभिः स्वश्रद्धावशादुच्यते न तावता तथा श्रुतिविरुद्धमङ्गीकर्तुं शक्यं, अतो न किञ्चिदेतदित्यर्थः । वायुसंहितावाक्यप्रत्यभिज्ञानेन शिवपरत्वाङ्गीकारे तु तदपि सोपाधिके पर्यवस्यताम् । न तावता पूर्वोपदर्शितश्रुतिस्मृतिप्रतिपन्नं निरुपाधिकस्य भगवतः परत्वं प्रतिषेद्धुमलम्भवतीति भावः ।

एवमेकोनचत्वारिंशार्थो दूषितः । ब्रह्मसूत्राणां भगवत्परत्वस्य प्रागेव प्रतिपादनादपेयोक्तस्य दूषितत्वाच्चत्वारिंशार्थं हेलया दूषयति ब्रह्मेत्यादि । एकचत्वारिंशे निरुपपदस्य ब्रह्मपदस्याथर्वशिरःशिखालैङ्गभारतवाक्यैर्यत् शिववाचकत्वं यदुक्तं तदपि प्रागेव निरस्तम् । तेनैव ओन्तत्सत्पदानामपि तथात्वमेवेति न तदर्थं पुनर्विचारः । तथा द्विचत्वारिंशोक्तमीशानपदस्य निरवग्रहतत्परत्वञ्च । त्रिचत्वारिंशे तु विश्वाधिकपदस्य सकललोकाधिकत्वप्रकाशकत्वमुक्तं, तत्तु सावग्रहमस्माभिरपि स्वीकृतमिति न तस्योपक्षेपः । चतुश्चत्वारिंशे तु वायुसंहितादित्यकूर्मलिङ्गस्कन्दपुराणपराशरस्मृतिवासिष्ठरामायणवाक्यान्युपन्यस्यापरिच्छिन्नैश्वर्यं शिवस्य प्रतिपादितं, तदपि पूर्वोक्ततापनीयश्रुतिसिद्धान्निर्णयादेव सावग्रहत्वे पर्यवस्यतीति न पुनस्तदुपक्षेपः । पञ्चचत्वारिंशे तु शिवप्रतिपादकश्रुतिपुराणबाहुल्यं प्रतिपादितं, तदपि श्रुतिपुराणविचार एव प्रत्युत्तरितम् । यत्तु षट्चत्वारिंशे 'अग्निमीळे पुरोहित'मित्यादिषु पूर्वकाण्डस्थेषु स्तुत्यर्थकपददर्शनेन रुद्राध्यायादीनां च नमस्कारतत्फलप्रार्थनालिङ्गाभ्यां स्तुतिपरत्वावसायादुत्तरकाण्डस्थेषु 'ते देवा ऊर्ध्वबाहवः स्तुवन्ती'त्यादिभिरथर्वशिरसः स्तुति-

परत्वावसायात् जगत्कारणत्वप्रतिपादकानां कारणन्तु ध्येयमित्यादीनां जगत्सर्गप्रलयप्रकरणमध्यपातित्वाभावेनोपासनविधिशेषत्वेनान्यपरत्वावसायाच्च न तेषां वास्तवपरभावप्रतिपादनपरत्वं किन्तु पुरुषसूक्तादीनामेव तथात्वं, पुरुषसूक्ते पुरुषस्य नारायणस्य सर्वकारणत्वसर्वेश्वरत्वादिप्रतिपादने केनापि लिङ्गेन वाक्येन स्तुतिपरत्वाप्रतीतेः । अनुवादद्योतकहवैशब्दाद्यभावेनानुवादरूपत्वस्याप्यप्रतीतेः । प्रत्युत छान्दोग्ये 'तदेतदृचानूक्तं' 'तावानस्य महिमे'तिपूरुषसूक्तमन्त्रस्य स्वोपदिष्टार्थसाक्षित्वेन पाठतोऽस्य नारायणमहिमप्रतिपादकताया एव निर्धारणाच्च । एवं काठकेऽपि 'सर्वे वेदा यत्पदमामनन्ती'तिमन्त्रेण सर्ववेदवेद्यकथनं प्रतिज्ञाय 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति प्रतिपादितम् । तथा तैत्तिरीयेऽपि ब्रह्मवेदनान्मुक्तिं प्रतिज्ञाय, 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति मुमुक्षुभिर्वेद्यं ब्रह्मानन्तशब्दवाच्यं नारायणरूपमेव प्रतिपादितम् । तथा सुबालोपनिषदादिषु च जगत्सृष्टिप्रलयकारणत्वं प्रतिपादनमनन्यपरमवधार्यत इति वैष्णवमतमुपक्षिप्य तद्दूषणार्थमद्वैतवादे सगुणनिर्गुणश्रुत्योरुपासनार्थतया स्तुतिद्वारतया निष्प्रपञ्चब्रह्मप्रतिपत्त्युपायतया वा सर्वथाऽन्यशेषमेव सर्वेश्वरत्वसर्वकारणत्वादिश्रवणमिति नाद्वैतवादिनं प्रत्यैश्वर्यविषयेऽनन्यपरकतिपयश्रुतिवचनसिद्धवत्करणेन बलाबलविभागः सम्भवतीति तावत्स्पष्टं सगुणब्रह्मवादमवलम्ब्य प्रत्यवतिष्ठमानस्तु मन्त्रौपनिषदाद्युदाहरणेन प्रतिबोधनीय इत्यादिना मन्त्रोपनिषदः परशिवस्यैव तत्त्वनिर्णयार्थं प्रवृत्तिमुक्त्वा 'युञ्जानः प्रथमं मन' इत्यादीनां योनिरूपकमन्त्राणां पूर्वोक्तरीतिकपरशिवसाक्षात्कारसाधनापदेशार्थत्वेनावान्तरतात्पर्येण प्रवृत्तत्वान्न तत्रैवोपनिषदः कार्त्स्न्येन पर्यवसानं शङ्कितुं शक्यते । तदा ह्यन्यत्राऽपि ब्रह्मनिरूपणप्राधान्येन प्रवृत्तेषु मध्ये निदिध्यासनादिविध्युपलम्भात्तेषामपि ब्रह्मणि तात्पर्यं न सिध्येदिति प्रतिवादिनमुक्त्वा, यस्मिन्मन्त्रादौ प्रार्थनादिलिङ्गं तस्यैव तल्लिङ्गिशेषत्वमिति स्थापयित्वा तयैव दिशाथर्वशिरःशिखादिगतिं प्रदर्श्य, सौबालमहोपनिषदादिषूपासनाविधिदर्शनात् शिखातौल्यं, पुरुषसूक्तस्य शिवपरत्वाभिमानेन वैष्णवयुक्तीनामनुकूलत्वमङ्गीकृत्य उपाकृतं दक्षिणतोऽवस्थाप्य ब्रह्म 'सहस्रशीर्षा पुरुष' इति पुरुषेण 'नारायणेन परा च ानुशंसतीति'पुरुषमेधप्रगीतमन्त्रसाध्यस्तुतिवाचिनानुशंसनशब्देन पुरुषसूक्तस्य कार्त्स्न्येन स्तुतौ विनियोजनाद् विष्णुपुराणे 'तुष्टाव प्रणतो भूत्वा स भूताधारमच्युत'मित्युपक्रम्य पुरुषसूक्तप्रक्रियया स्तुतिप्रकारोपवर्णनात्, छान्दोग्ये तदेतदृचानूक्तमित्यनूपसर्गेण पुरुषसूक्तमन्त्रस्य तदुक्तार्थानुवादस्यैव द्योतनाच्च स्तुतिरूपत्वमनुवादरूपत्वमवर्जनीयम् । काठकस्य तु अनन्यपरत्वमङ्गीकृत्य 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति मन्त्र इव 'तद्विष्णोः परमं पद'मितिपदशब्दस्य स्थानविशेषपरत्वायोगेन विष्णुपदस्य पञ्चम्यन्तत्वे षष्ठ्यन्तत्वे वा पदशब्दोदितस्य ब्रह्मणो विष्णवतिरेकस्यैव स्वरसतः प्रतीते'र्विष्णोः पद'मित्यत्र ' राहोः शिर ' इतिवदभेदषष्ठीपक्षेऽपि 'सर्वे देवाः संविशन्तीति विष्णुर्विष्णुः सर्वप्रवेशना'दितिशिखालैङ्गश्रुतिस्मृतिभ्यां विष्णुशब्दस्य विष्णवै-

कान्त्यासिद्धेः विष्ण्वैकान्त्येऽपि प्राग्दर्शितन्यायैर्मन्त्रोपनिषत्स्थब्रह्मपरहरशब्दस्येव तस्यानन्यथासिद्ध्यभावेन तदनुरोधिवृत्त्यन्तरसहिष्णुत्वाच्च न प्रत्यवस्थानावकाशः । तैत्तिरीयेऽप्यनन्तरपदस्य नपुंसकत्वान्न विष्णुवाचकत्वं 'अनन्तो नागराड् विष्णु'रिति कोशे पुँल्लिङ्गस्य विष्णुवाचकत्वाद् 'द्वितीयान्तस्य निहितपदस्य सन्निहितत्वाद् ब्रह्मवचनस्य कर्मसमर्पकस्य सत्त्वेन सत्यादिवाक्यस्य बुभुत्सितलक्षणप्रदर्शनपरस्य भङ्गायोगात् । तस्मात् पूर्वोक्तरीत्या शिवपराणामेव श्रुतीनां प्राबल्यमित्युक्तं, तत्तु पूर्वोक्तमेव मन्त्रोपनिषदादीनां भगवत्परत्वस्य व्यवस्थापितत्वादिहत्ययुक्तीनां च शिथिलत्वान्न तत्रोपक्षिप्तम् । स्मारणार्थमिह ता युक्तीर्वदामः । तथाहि । मन्त्रोपनिषादि 'किं कारणं ब्रह्मे'त्यादिसंशयनिरासस्य 'उद्गीतमेतत्परमं तु ब्रह्मे'त्यन्तग्रन्थेनैवासिद्ध्या कारणस्वरूपानिर्णयहरादिपदानपेक्षणेन, अपेक्षणेऽपि निरूपधिब्रह्मण्येव तेषां मुख्यवृत्त्या सोपाधिके तेषां श्रुत्याभासत्वेन निरुपाधिकपक्षेऽपि तस्य तापनीयोक्तदिशा मध्यमकक्षत्वेन 'सर्वाननशिरोग्रीव' इतिमन्त्रोपनिषद्यपि रूपोपन्यासात्त्रिलोचनादिविशिष्टरूपासिद्ध्या, 'या ते रुद्र शिवातनू रुद्र यत्ते दक्षिणामुख'मित्यादिमन्त्राणां शिवपरत्वप्रतीतावपि तदनुरोधेन सर्वस्या उपनिषदस्तत्र तस्य पर्यवसानस्यात्रत्यस्यापि त्वद्युक्त्यैव निरासाच्चैतद्दृष्टान्तेन पूर्वोक्तरीत्या चाथर्वशिरःशिखयोरपि त्वदुक्तपरशिवपरत्वासिद्ध्यास्मदुक्तनिरुपाधिकशिवपरत्वेऽपि भगवत्परत्वस्याप्रतिक्षेपेणात्राऽपि सौबालादीनां शिखादितौल्यप्रदर्शनात्तद्रीत्याऽपि शिखाद्याधिक्यासिद्ध्या त्रयोदशश्लोकदूषणे प्रदर्शिताच्छिष्टाकोपोदितन्यायात्प्रमेयविचारेण च प्राबल्याभावात् । पुरुषसूक्ते शिवपरत्वाभिमानदूषणस्य तदभिमानोत्पत्तिप्रकारस्य च प्रागेव दर्शितत्वेनेह पुरुषमेधीयानुशंसनविधेरपि तदुपर्येव वत्रायितत्वाद्वैष्णववाक्योक्तरीत्या स्तावकत्वस्य 'त्रय्याश्चोपनिषद्भिश्च साङ्ख्ययोगैश्च सात्त्वतैः । उपगीयमानमाहात्म्यं हरिं सामान्यतात्मजम् । स्वसृष्टमपि ह्यापीय शयानं सह शक्तिभिः । तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् । यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः । प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविन' इत्यादिवाक्यैर्वेदमात्रेऽपि सिद्ध्या वास्तवपरत्वप्रतिपादनस्य केनाप्यसिद्धेस्त्वदुक्तरीतौ सर्वविप्लवापातात् । अस्मद्रीत्या स्तावकत्वस्यादोषावहत्वात् । छान्दोग्यवाक्येऽपि तदेतदृचानूक्तमित्यनेन पुरुषसूक्तोक्तमेतदृचानूक्तमित्यस्यैवार्थस्य लाभात्, त्वद्रीतौ तु एतदृचोक्तमितिविपरीतपाठापातात्, पुरुषसूक्तेऽनुवादकत्वस्य सम्भावयितुमप्यशक्यत्वात् । काठकेऽपि पञ्चम्यन्तपक्षस्य त्रयोदशश्लोकदूषणावसर एव दूषितत्वाद् भेदषष्ठ्यन्तपक्षे पदशब्दोदितस्य ब्रह्मणो विष्ण्वतिरेकप्रतीतावपि निर्विशेषकैवल्यस्यापि प्रागेवास्तत्वेन स्थानपरत्वायोगस्याभ्युपगमैकशरणत्वादभेदषष्ठीपक्षेऽपि योगरूढेरेव प्रबलत्वेन योगाङ्गीकारस्य त्वयैवेशानादिशब्दस्थलेऽन्याय्यत्वसाधनात् । अन्यथासिद्धेः प्रागेव निरस्तत्वेन वृत्त्यन्तरकल्पने सहिष्णुत्वस्य भावाच्च काठके भगवत्परत्वस्यापि निष्प्रत्यूहत्वात् । तैत्तिरीयेऽपि भार्गव्यां विद्यायामिव ब्रह्मवित्प्रपाठके ब्रह्मप्रश्नाभावेन व्याख्येये ब्रह्मवित्पदे द्वितीयान्ततया प्रविष्टस्य ब्रह्मपदस्य व्याख्यानरूपे सत्या-

अयमेव न्याय आगमेष्वपि दृष्टव्यः, तत्राप्येवं वाक्यदर्शनात् । यथोक्तं कौर्मे गौतमशप्तान्मुनीन्प्रक्रम्य, 'न वेदबाह्ये पुरुषे पुण्यलेशोऽस्ति शङ्कर । सङ्गच्छति महादेवे धर्मो वेदाद्विनिर्बभौ । तथापि भक्तवात्सल्याद्रक्षितव्या महेश्वर । अस्माभिः सर्व एवैते गन्तारो नरकानपि । तस्माद्वै वेदबाह्यानां रक्षणार्थाय पापिनाम् । विमोहनानि शास्त्राणि करिष्यावो वृषध्वज । एवं सम्बोधितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः । कापालं लाङ्गलं वामं भैरवं पूर्वपश्चिमम् । (कापालं लागुडं शाक्तं इति क्वचित्पाठः ।) पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः । सृष्ट्वा तानूचतुर्देवौ कुर्वाणाः शास्त्रचोदितम् । पतन्ति नरके घोरे बहुकल्पान् पुनः पुनः । जायन्ते मानुषे लोके क्षीणपुण्यचयास्ततः । ईश्वराराधनबलाद्गच्छध्वं सुकृतां गतिम् । एवमीश्वरविष्णुभ्यां चोदितास्ते महर्षयः । चक्रुस्तेऽन्यानि शास्त्राणि तत्र तत्र रताः पुनः । शिष्यानध्यापयामासुर्दर्शयित्वा फलानि तु । मोहयन्त इमं लोकमवतीर्य महीतले । चकार शङ्करो भिक्षां हितायैषां द्विजन्मनाम् । कपालमालाभरणः प्रेतभस्मावगुण्ठितः । विमोहयन् लोकमिमं जटामण्डलमण्डितः' इति कथनात् । उपरि भागे च, 'बुद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रविदो जनाः । कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः । यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः । न तस्य तद्भवेच्छ्राद्धं प्रेत्य चेह फलप्रद'मिति ।

वाराहेऽपि रुद्रगीतासु 'यद्वेदबाह्यं कर्म स्यात् शास्त्रमुद्दिश्य पठ्यते । तद्रौद्रमिति विख्यातं कनिष्ठं गदितं नृणाम् । यद्गीतरजसां कर्म केवलं तामसं तु यत् । तद्दुर्गतिप्रदं नृणामिह लोके परत्र च । सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् । कृते नारायणः शुद्धः सूक्ष्मरूपी विभाव्यते । त्रेतायां यज्ञरूपेण पञ्चरात्रैस्तु द्वापरे । कलौ मत्कृतमार्गेण बहुरूपेण तामसैः । इज्यते द्वेषबुद्ध्या स परमात्मा जनार्दन'इत्युक्त्वा, ब्रह्मविष्णुमहेश्वराणामभेदं चोक्त्वा, ततः 'कथं च सृष्टिर्भविता नरकेषु च को वसे'दिति देवविज्ञापनोत्तरं 'युगानि त्रीणि बहवो

---

दिवाक्ये तस्य द्वितीयान्ततायामपि लक्षणबुभुत्सापूर्वेरदण्डवारितत्वेन च प्रथमान्तग्रहे बीजाभावात् । प्रथमान्तत्वेऽपि पुंलिङ्गाग्रहस्य ब्रह्मवाचकानन्दपदस्य पुंस्त्ववद्भगवद्वाचकानन्तपदस्य नपुंसकत्वेऽपि वेदे तदर्थाप्रतिरोधाद्वैष्णवमतस्यैव प्राबल्यात् निराकाराद्वैतवादस्यापि प्रागेव दूषितत्वेन तन्मत ऐश्वर्यबोधकवाक्यानामन्यशेषत्वदूषणस्यार्थादेव सिद्धेश्चेति शैथिल्यप्रदर्शनायोक्तम् ।

प्रकृतमनुसरामः । सप्तचत्वारिंशे यत्तेन पञ्चरात्रस्य वेदभ्रष्टाधिकारकत्वं पाशुपताधिक्यं चोक्तं, तद्दूषयितुं दर्शनन्याय आगमेष्वतिदिशति अयमित्यादि ।

मामुपेष्यन्ति मानवाः । अन्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः । एष वोऽहं सृजाम्याशु यो जनं मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु । एवमुक्त्वा तदा तेन देवेन परमेष्ठिना । आत्मा तु गोपितः सद्यः प्रकाशोऽहङ्कृतस्तदा । तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तमाः । शास्त्रेष्वभिरतो लोको बाहुल्येनाभवद्'इत्याद्युक्त्वा, 'ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च । तपःसिद्धान्तसञ्ज्ञाभिर्मया शास्त्रं तु दर्शितम् । पाशोऽयं पशुभावस्तु स यदा पतितो भवेत् । तदा पाशुपतं शास्त्रं ज्ञायते वेदसञ्ज्ञितं'इति चोक्त्वा, अग्रिमाध्याये ऋषीणां तत्करणे हेतुप्रश्ने कोर्मवद् गौतमशापमेवोपक्षिप्य, शप्तानामर्थे 'वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् । निःश्वासाख्यां ततस्तस्यां नीलाभा द्रव्यशौण्डिलाः । अल्पापराधाच्छ्रुत्वैव गता वेदालिकाभवन् । मयैव मोहितास्ते हि भविष्यं जानता द्विजाः । लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः । निःश्वाससंहितायां हि लक्षमात्रं प्रमाणतः । सैव पाशुपती दीक्षा योगः पशुपतेस्तथा । एतस्माद्वेदमार्गाद्धि यदन्यदिह जायते । तत्क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् । ये रुद्रमुपजीवन्ति कलौ वेदालिका नराः । उच्छुष्मरुद्रास्ते ज्ञेया नाहं तेषु व्यवस्थित'इत्यादि ।

पाद्मोत्तरखण्डेऽपि दैत्यानामजेयत्वे देवैर्विज्ञापिते भगवता शिवं प्रत्युक्तं, 'त्वं च रुद्र महाबाहो मोहनार्थं सुरद्विषाम् । पाषण्डाचरणं धर्मं कुरुष्व सुरसत्तम । तामसानि पुराणानि कथयस्व च तान्प्रति । मोहनानि च शास्त्राणि कुरुष्व त्वं महामते । मद्यभक्ताश्च ये विप्रा भविष्यन्ति महर्षयः । त्वच्छक्त्या तान्समाविश्य कथयस्व च तामसान् । काणादं गौतमं शक्तिमुपमन्युं च जैमिनिम् । कपिलं चैव दुर्वासं मृकण्डं च बृहस्पतिम् । भार्गवं जामदग्न्यं च दशैतांस्तामसानृषी'नित्याद्युक्त्वा, अग्र उच्यते 'कपालभस्मचर्मास्थिचिह्नान्यमरपूजित । त्वमेव धृत्वा तांल्लोकान् मोहयस्व जगत्त्रये । तथा पाशुपतं शास्त्रं त्वमेव कुरु सत्तम । कङ्कालशैवपाखण्डमहाशैवादिभेदतः । अवलक्ष्य मतं सम्यग्वेदबाह्यं द्विजाधमाः । भस्मास्थिधारिणः सर्वे भविष्यन्ति न संशयः । त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसा'इत्यादि ।

पराशरोपपुराणेऽपि ' धर्माधर्मादिविज्ञाने त्वागमाः पुरुषोदिताः । पाञ्चरात्रादयस्सर्वे न प्रमाणमिति स्थिति'रिति ।

सूतसंहितायां च, 'वामपाशुपतादीनामश्रौतानां परिग्रहः । पाञ्चरात्राश्रयश्चापि ज्ञानानुत्पत्तिकारण'मिति ।

एवं सर्वत्र विमोहनवेदविरुद्धपुरुषोदिताश्रौतादिविशेषणदर्शनाच्छ्रुतिविरुद्धा एवागमाः बौद्धादिवदप्रमाणभूताः । वेदाविरुद्धानां तु पाशुपतादीनामपि प्रामाण्यं भारते मोक्षधर्मे व्यवस्थापितं, 'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभि'रिति । तत्र वेदाविरोधो द्वेधा विवक्षितः, साधनतः प्रमेयतश्च । तत्र साधनतस्तु स्फुट एव विरुद्धाचरणाभावाद्गम्यते । प्रमेयतस्तु मोक्षधर्मे नरनारायणीयाद्बोध्यः । तत्र हि 'साङ्ख्यं योगः पाञ्चरात्रं वेदारण्यकमेव च । ज्ञानान्येतानि विप्रर्षे लोकेऽत्र प्रचरन्ति हि । किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने । प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रम'-मिति जनमेजयेन पृष्टे वैशम्पायनो व्यासपूर्वजन्मकथनपूर्वकमेवमाह, 'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै । साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते । हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः । अपान्तरतमश्चैव वेदाचार्यः स उच्यते । प्राचीनगर्भं तमृषिं प्रवदन्तीह केशवम् । उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः स्मृतः । ऊचिवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः । पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।' इति प्रवर्तककथनेन प्रवृत्तिमुक्त्वा निष्ठामाह, ' सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागतं तथा ज्ञानं निष्ठा नारायणः प्रभुः । न चैनमेवं जानन्ति तमोभूता विशाम्पते । तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः । निष्ठां नारायणमृषिं नान्योऽस्तीति वचो मम । निःसंशयेषु सर्वेषु नित्यं स वसते हरिः । स संशयान् हेतुबलान्नाध्यावसति माधवः । पञ्चरात्रविदो ये तु यथाक्रमपरा नृप । एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै । साङ्ख्यं च योगश्च सनातने द्वे वेदाश्च सर्वे निखिलेन राजन् । सर्वैः समस्तै ऋषिभिर्निरुक्तो नारायणो विश्वमिदं पुराण'-मिति । तस्मादेतेषां भगवत्परत्वे प्रमेयाविरोध इति तदा प्रामाण्यमिति निश्चयः।

एवं च ब्रह्ममीमांसायां 'पत्युरसामञ्जस्यात्' 'अन्तवत्त्वमसर्वज्ञता वा' 'उत्पत्त्यसम्भवाद् ' इत्यादिना यद्दूषणं तदनीदृशस्यैवेति निश्चेयम् । तथैव साङ्ख्ययोगयोरपि भेदाद्यंश एवेति च ।

---

विरुद्धानामप्रामाण्यमविरुद्धानां च प्रामाण्यं वाक्यैर्निश्चित्य विरोधाविरोधस्वरूपज्ञानाय प्रकारं दर्शयति तत्र वेदाविरोध इत्यादि । विरुद्धाचरणाभावादिति । एतेन शङ्खचक्रधारणस्य यथा वेदाविरोधस्तथा वादान्तरेऽस्माभिर्व्युत्पादितमस्तीति सूचितम् । पाशुपताधिकरणे यत्तेनोक्तं तद्व्युदसितुं प्रमेयाविरोधस्वरूपबोधनाय तत्र प्रमाणान्याह प्रमेयत इत्यादि निश्चय इत्यन्तम् ।

तेनागमो यः कौर्मे उक्तः 'अथांशो' सात्त्वतो नाम विष्णुभक्तः प्रतापवान् । महात्मा दाननिरतो धनुर्वेदविदां वरः । स नारदस्य वचनाद्वासुदेवार्चने रतः। शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् । तस्य नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम् । प्रवर्तते महाशास्त्रं कुण्डादीनां हितावह'मिति । यच्च साम्बपुराणे 'पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् । वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवानि'ति । तथा पराशरोपपपुराणे, 'पाञ्चरात्रे च कापाले पाषण्डेष्वितरेषु च । दीक्षिताश्च भविष्यन्ति मनुष्याः पापकर्मणे'ति । एवमन्यत्रापि ये उच्यन्ते ते पूर्वोक्तेभ्यो भिन्ना एव गौतमशशाद्यर्थे कृता इति ज्ञेयम् । अत एव मोक्षधर्मे नरनारायणीये वैशम्पायनेनैकान्तिधर्मे उक्ते जनमेजयेन च तस्य सर्वाधिकत्वे ज्ञाते , 'ततः केनैष धर्मः कथित'इति प्रश्ने कृते 'समुपोढेष्वनीकेषु कुरु पाण्डवयोर्मृधे । अर्जुने विमनस्के च गीतं भगवता स्वयम् । अगतिश्च गतिश्चैव पूर्वं ते कथितं मये'त्यादिना महता प्रबन्धेन प्रतिकल्पीयांस्तत्तत्प्रवर्तकाचार्यान् पुनः कलिनान्तर्धाने भगवति तस्य स्थितिं, ततः 'धर्मं च मत्तो गृह्णीष्व सात्त्वतं नाम नामत'इति ब्रह्माणं प्रति भगवदुक्तं नाम चोक्त्वा, 'नारदेन च सम्प्राप्तः सरहस्यः ससङ्ग्रहः । एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप । एकव्यूहविभागो वा क्वचिद् द्विव्यूहसञ्ज्ञितः । त्रिव्यूहश्चापि सङ्ख्यातश्चतुर्व्यूहश्च कथ्यते'इत्यादिना तत्स्वरूपमुक्त्वा, अयं व्यासेन धर्मराजाय सर्वर्षिसन्निधावुक्त इति चोक्त्वा, 'सात्त्विकानामेव तस्मिन् श्रद्धा नेतरेषा'मिति चोक्त्वा 'एकं साङ्ख्यं च योगं च वेदारण्यकमेव च । परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते । एवमेकान्तिनां धर्मो नारायणपरात्मक'इति वेदाविरुद्धत्वमुक्त्वा, 'एवं ते कथितो धर्मः सात्त्वतो यमुवाच ह । कुरुष्वैनं यथा तुभ्यमाख्यातः पार्थिवोत्तमे'त्याद्युक्तम् । प्रथमस्कन्धे च, 'तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः । तन्त्रं सात्त्वतमाचष्ट नैष्कर्म्यं कर्मणां यत' इति । तेन य एवं जागरूकेषु भगवत्प्रोक्तपञ्चरात्रप्रामाण्यबोधकवाक्येषु नाममात्रमादाय वेदभ्रष्टाधिकारकत्वं वदन्ति पाशुपताधिक्यं च, तैः स्वीयातिलोकोत्तरपाण्डित्यबलेन भारतोक्ताचार्येषु वेदविभ्रष्टत्वमारोपणीयम् । एतेनैवाविरुद्धपाशुपतस्यापि वैदिकानुकूलत्वं परस्पराङ्गकथनश्लोके पाशुपतानुक्तेः क्रममुक्तिहेतुत्वं च व्याख्यातमिति दिक् ।

---

प्रमाणैः स्वोक्तं दृढीकृत्य तमुपहसन्नाह तेनेत्यादि ।

भवतु वैष्णवतन्त्रप्रामाण्यं तावता पाशुपतादुत्कर्षः कथं सिद्ध इत्यत आह एतेनैवेत्यादि ।

ये च तन्त्राणां स्त्रीशूद्राधिकारत्वमुक्त्वा, तर्हि मिश्रपूजायां को वाधिकारीत्याशङ्क्य, पतितब्राह्मणादयस्तावन्मिश्राधिकारिणः, तान् प्रति तन्त्रप्रवृत्तिबोधकप्रमाणैस्तन्त्रोपात्तवैदिकमन्त्रस्य सफलत्वादितिनिबन्धाद्यनुसारेणाहुः;

तदपि स्वप्रज्ञाविलासमात्रम्। एकादशस्कन्धे 'क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो। यस्मात्त्वां ये यथार्चन्ति सात्त्वताः सात्त्वतर्षभ। एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम्। नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः। निःसृतं ते मुखाम्भोजाद्यदाह भगवानजः। पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः। एतद्वै सर्ववर्णानामाश्रमाणां च सम्मतम्। श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद। एतत्कमलपत्राक्ष कर्मबन्धविमोचनम्। भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वरे'त्युद्धवप्रश्ने, सर्ववर्णाश्रमसम्मतत्वकथनेन सङ्कोचासहिष्णुत्वाद्, 'वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः। त्रयाणामीप्सितेनैव विधिना मां समर्चये'दिति तदुत्तरे ईप्सितपदात्तदुक्ताधिकारिणामङ्गीकारसूचनेन निःश्रेयसार्थतावगमादुपसंहारे च 'भक्तियोगं स लभते एवं यः पूजयेत मा'मिति भक्तिरूपफलावगमाच्च तादृशाधिकारिलाभाभावात्। तत्रैव जनकजायन्तेयसंवादे द्वापरमुपक्रम्य 'यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृपे'तिकथनाच्च। भगवदुक्ततन्त्रप्रतिपादितधर्माणामेकान्तिधर्मत्वमेवात्र विवक्षितमिति दिक्।

यत्तु 'अशुभक्षयकर्तारं परमुक्तिप्रदायकम्। यदि योन्याः प्रमुञ्चामि तं प्रपद्ये महेश्वर'मितिगर्भोपनिषच्छ्रुतेः, 'अजात इत्येव कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्य'मिति 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं हि देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य इति मन्त्रोपनिषच्छ्रुतेः, 'सद्योजातं प्रपद्यामि' इति महोपनिषच्छ्रुतेश्च शिवप्रपत्तेः 'जप्येनामृतत्वं ब्रूहीति स होवाच याज्ञवल्क्यः शतरुद्रियेणे'ति जाबालश्रुतेः, शिवनामकीर्तनस्य 'यावच्छशाङ्कशकलामले'त्यादिभारतवाक्येभ्यः शिवप्रसन्नत्वस्य यस्यानवद्याचरितेत्यादिश्रीभागवतवाक्याच्छिवार्चनस्यान्तरङ्गमोक्षोपायत्वमवसीयते इत्युक्तं,

---

भट्टोजिदीक्षितमतं ये चेत्यादिनोपक्षिप्य दूषयति तदपीत्यादि। एवं सप्तचत्वारिंशोक्तो दूषितः।

अतः परं षष्टितमस्यार्थं दूषयितुमुपक्षिपति यत्तु अशुभेत्यादि। यावच्छशाङ्केति 'यावच्छशाङ्कशकलामलबद्धमौलिर्न प्रीयते पशुपतिर्भगवान्महेशः। तावज्जरामरणरोगशताभिघातैर्देहानिवहानि समुद्वहानि। 'दिवसकरशशाङ्कवह्निनेत्रं त्रिभुवनसारमपारमाद्यमीशम्। अजरममरमप्रमाद्य रुद्रं जगति पुमानिह को लभेत शान्तिम्?' इत्यादिवाक्येभ्य इत्यर्थः। यस्यानवद्येति। 'यस्यानवद्याचरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः। यत्पादपद्मं

तत्र मोक्षोपायत्वमनुजानीमः, अन्तरङ्गत्वं तु न मृष्यामहे। गर्भोपनिषदादिश्रुतिष्वन्तरङ्गतागमकस्यादर्शनात्। न च द्वारानुक्तिरेव गमिकेति वाच्यं, श्रुत्यन्तरविरोधात्। जाबालश्रुतौ 'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे'इत्यविमुक्तोपासकादीनां शिवेन संसारतारकमहावाक्योपदेशश्रावणात्। रामोत्तरतापनीये जाबालोक्तप्रक्रिययैव बृहस्पतिं प्रत्युक्त्वा, भारद्वाजेन किं तारकमिति पृष्टे भारद्वाजं प्रति याज्ञवल्क्येन तारकस्य राममन्त्रस्योद्धृतत्वेन ततः प्रणवस्य श्रीरामचन्द्रपरतया व्याख्यानेन, ततोऽत्रिं प्रति रामषडक्षरस्याप्याख्यानपूर्वकं तारकत्वश्रावणेन चोपदेशवाक्यनिश्चायनात्प्राससहस्रनाम्नि चैतदुपबृंहणान्महोपनिषदि च रुद्रं प्रस्तुत्य, 'स नो देवः शुभया स्मृत्या संयुनक्त्वी'तिशुभस्मृतिसंयोगश्रावणान्नारायणोपनिषदि 'रुद्रं स सारथिं कृत्वा मनःप्रग्रहवान् पुमान्। प्रयाति परमं पारं विष्णवाख्यं पदमव्यय'मितिसारथित्वेन मनःप्रग्रहनिग्राहकत्वश्रावणाच्च रुद्रप्रपत्तिप्रीत्यादेर्मनोनिग्रहभगवत्स्वरूपज्ञानसाक्षात्कारान्यतमपरताया एव निश्चयात्। जाबालोक्तरुद्रनाम्नां नृसिंहपूर्वतापनीयोक्तदिशा अमुख्यत्वस्य प्रागेवोपपादितत्वात्। 'ईश्वराज्ज्ञानमन्विच्छे'दिति ज्ञानजनन एवोपक्षयाच्छिवनामकीर्तनादीनां मोक्षान्तरङ्गत्वस्य सर्वथैवाशक्यसन्धानत्वात्। उक्तश्रुत्युक्तस्मृतिपदस्यापि ब्रह्मतत्त्वानुस्मृतिपरत्वेन सायणीये

---

महतां मनोऽलिभिर्निषेवितं ब्रह्मरसामृतार्थिभिः। दूष्यांशं दर्शयन्नाह अन्तरङ्गेत्यादि। शिवप्रपत्तितन्नामकीर्तनतत्प्रीतीनां तथात्वमित्यर्थः।

नन्वत्र हि जन्तोः प्राणेषूत्क्रममाणेषु 'रुद्रस्तारकं ब्रह्म व्याचष्ट'इतिजाबालश्रुत्या अविमुक्तोपासकानां शिवात्संसारतारकप्रणवरूपमहावाक्यार्थज्ञानलाभप्रतिपादनात् 'नो स देवः शुभया स्मृत्या संयुनक्त्विति'महोपनिषदि श्रावणाद्, 'आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात्। ईश्वराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दना'दितिस्मृत्याऽपि शिवाराधनस्य मोचकज्ञानसम्पादकत्वेन कथनान्मोक्षस्य ज्ञानैकसाध्यत्वाच्च तद्द्वाराङ्गीकारेऽपि श्रुत्यन्तरविरोध इतिशङ्कायां, महावाक्यार्थस्वरूपं श्रुत्या बोधयन्नन्तरङ्गत्वं दूषयति जाबालेत्यादि। तथाच वाक्यार्थस्वरूपविचारे भगवज्ज्ञानादेव मोक्ष इति न शिवप्रपत्तेरन्तरङ्गत्वं किन्तु 'सर्वमिच्छेद्गणाधिपा'दितिविनायकाराधनस्यारोग्यादिश्लोकत्रयपरिगणितसकलफलेषु परम्परोपयोगवत्कस्मिंश्चिदधिकारे उपान्त्यपर्वणि प्रवेश इत्यर्थः। तदुक्तनामकीर्तनस्यान्तरङ्गत्वं निराकरोति जाबालोक्तेति। उक्तश्रुत्युक्तेति। महोनिषच्छ्रुत्युक्तेरित्यर्थः। नच मोक्षस्य ज्ञानैकसाध्यत्वाद्भगवत्प्रपत्त्यादेरपि मोक्षान्तरङ्गोपायत्वं न वक्तुं शक्यमितिवाच्यं, 'तमेव विदित्वातिमृत्युमेतीति'श्रुतेर्ज्ञानमार्गपरत्वेनादोषात्। अन्यथा 'ध्यायति रसति भजति सोऽमृतोभवती'त्यादिश्रुतिबाधा-

व्याख्यातत्वात् 'स्मृतिप्रतिलम्भे सर्वग्रन्थीनां प्रविमोक्ष'इति छान्दोग्यानुसारेण मोचकसाक्षात्कारवाचित्वेऽपि 'मोक्षमिच्छेज्जनार्दना'दितिस्मृतेर्भगवत एव मोचकत्वात्, तत्साक्षात्कारपरत्वस्यैवौचित्यात्, शिवोपदेशजन्यज्ञानस्यापि विस्मृतकण्ठमणिप्रतिबोधकवाक्यजन्यज्ञानवत्प्रत्यभिज्ञानरूपत्वेन तत्र लक्षणोपपत्तेश्च । भगवत्प्रपत्त्यादिनैव साक्षान्मोक्षः, स एव च मोक्षदाता ।

कठवल्लीषु च 'यः सेतुरीजानानामक्षरं ब्रह्म सत्परम् । अभयन्तितीर्षतां पारं नाचिकेत शकेमसी'ति मुक्तप्राप्यं परं ब्रह्म प्रस्तुत्य, 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति, तदग्रे च 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रिति श्रावणात्तद्भाष्ये विष्णोर्व्यापनशीलस्य ब्रह्मणः परमात्मनो वासुदेवाख्यस्य परमं प्रकृष्टं पदं स्थानं स तत्त्वमित्येतत्पदमाप्नोतीति,'यस्मान्नास्ति पुरुषाच्चिद्‌घनात्परं किञ्चिदपि वस्त्वन्तर'मित्याद्युक्त्वा परा प्रकृष्टा गतिः, 'यद्गत्वा न निवर्तन्ते'इति स्मृतेरितिशङ्कराचार्यैरपि षष्ठ्यन्तवासुदेवपदेन गीतावाक्येन च व्याख्यानात्तत्सायुज्यादिरेव मुक्तिरिति निश्चयः ।

एतेनैव विष्णोरित्यस्य पञ्चम्यन्तत्वमपि शिष्टानादृतमेवेति बोध्यम् ।

---

पत्तेः । नच मोक्षस्याविद्यानिवृत्तिद्वारकत्वात्तस्याश्च ज्ञानैकसाध्यत्वात्तत्रापि ज्ञानं द्वारत्वेन कल्पनीयमिति वाच्यं, तदापि व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावादन्तरङ्गत्वस्याबाधात् । नच तौल्यमितिवाच्यं, शिवकृतोपदेशस्वरूपविचारेणैव तस्य निरस्तत्वात् । वस्तुतस्तु मुख्यज्ञानस्य 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वा'मितिश्रुतेर्वरणैकलभ्यत्वेन वरणस्य भक्त्यैकलभ्यत्वेन भक्तिहीनस्य शुष्कज्ञानस्य पूर्वकक्षाविश्रान्तत्वादक्षरसायुज्यमेव ततो न तु ततः परस्यापि सायुज्यम् । 'आत्मलाभान्न परं विद्यते तरति शोकमात्मवि'दित्यादावपि परमात्मैव परामृष्यते । विस्मृतकण्ठचामीकरन्यायेन स्वात्मलाभरूपो मोक्षस्तु 'येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परम्पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रय'इत्यादिवाक्यैरेव निरस्तः । ब्रह्मवादे तु न स्वात्मनो ब्रह्मत्वेन ज्ञानं, किन्तु ब्रह्मण एव स्वात्मत्वेन, तत्तु न केवलवाक्यमात्रसाध्यं किंन्तु तद्रीतिकवरणादेवेति तत्र तन्न्यायेनाप्यदोषः । तदेतदुक्तं भगवत्प्रपत्त्यादिनैव मोक्षः, स एव च मोक्षदातेति । एतेन विष्ण्वाराधने कुतः साक्षान्मोक्षसाधनत्वमित्यादिना साद्यस्कसवनीयन्यायेन शिवाराधनादधस्तनपर्वणि निवेशो यस्तेनोक्तः सोऽपास्तः ।

स्वोक्तमुपष्टभ्नाति कठवल्लीत्यादि निश्चय इत्यन्तम् ।
केचित्त्वित्यादिनोक्तं दूषयति एतेनेत्यादि ।

नन्वानुमानिकाधिकरणे एतेषां मन्त्राणां 'ये यं प्रेते विचिकित्सा मनुष्य' इत्यादिजीवप्रश्नोत्तरमध्यपातितया जीवात्मभूतब्रह्मविषयत्वेन शङ्करभाष्ये व्यवस्थापनाद्, 'विष्णोः परमं पदं'मित्यस्य वैकुण्ठादिरूपवैष्णवस्थानपरत्वं न साधीय इति चेत्,

न। जीवात्मभूतब्रह्मविषयत्वेऽपि विष्णुपदस्य तैरेव शिवपदमपहाय वासुदेवपदेन व्याख्यानाद्, 'यद्गत्वा न निवर्तन्त'इति गीतावाक्योपन्यासाच्च। जीवात्मभूतब्रह्मणो वासुदेवरूपत्वस्यैव तदभिप्रेतत्वेन भवदभिमतरूपतायास्तेषामप्यसम्मतत्वात्। परमात्मनो रूपस्य 'रूपोपन्यासादि'सूत्रेष्वङ्गीकारेणौपाधिकानौपाधिकांश एव परं विवादेन परमपदे वैकुण्ठादिरूपत्वस्याप्रतिक्षेप्यत्वात्, अस्माकं तु विरुद्धधर्माश्रयत्वमेव श्रुत्यभिमतमिति कथमपि दोषसंसर्गाभावात्। अत एव योगतत्त्वोपनिषदि 'शुद्धस्फटिकसङ्काशं किञ्चित्सूर्यमरीचिवत्। लभते योगयुक्तात्मा पुरुषोत्तमतत्पर'इति। आपस्तम्बसूत्रेऽपि 'द्विजानामपवर्ग'इत्यपवर्गफलकत्वं ब्रह्ममेधस्योपक्रम्य 'वेष्टितुं पुरुषोत्तमः स्मृत'इत्युक्तम्। पुरुषोत्तमशब्दश्च योगरूढोऽनुपपत्तिं विना न योगेनान्यथा नेतुं शक्यः। 'स एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष'इति छान्दोग्येऽपवर्गप्राप्योऽपि योगरूढो भगवानेव। तद्भाष्ये 'कृतनिर्वचनो ह्ययं गीता'स्विति शङ्कराचार्यैरेव व्याख्यानादित्युपपादितमधस्तात्।

एवञ्च, तत्तत्परविद्याप्रकरणश्रुतोपास्यपरब्रह्मपरमात्मशिवाक्षरशम्भ्वादिशब्दैः सकलपरविद्योपास्यं वस्त्वनूद्य नारायणानुवाके तस्य नारायणत्वविधानात् तत्तत्परविद्योपास्यं परब्रह्मादिशब्दोदितं वस्तु नारायण इति निश्चीयते। 'परविद्याश्च मुक्त्यर्था'इति नारायण एव मुक्तिप्रद इति यद्रामानुजादिभिरुक्तं, तद्युक्तमेवोक्तम्।

नन्वेवं सति 'यदा तम' इतिमन्त्रे यदेति सौबालवाक्यसिद्धकालविशेषप्राप्ततमोऽनुवादस्य शक्यवचनत्वात् सौबालादीनामपि शिवपरत्वं कुतो न सिध्येत्?

---

ननु कठवल्लीत्यादिनोक्तं नन्वानुमानिकेत्यादिनानूद्य दूषयति न जीवेत्यादि। अनुमानाधिकरणं च समन्वयाध्यायचतुर्थपादे द्रष्टव्यम्। पुरुषोत्तमपदस्य यौगिकत्वं यत्तेनोक्तमधिगत्येत्यादिरूढ्यसम्भवाच्चेत्यन्तं तद्दूषयति पुरुषोत्तम इत्यादि स्तादित्यन्तेन।

लिङ्गभूयस्त्वाधिकरणे यद्रामानुजाचार्यैरुक्तं तदप्युपपन्नमेवेत्याह एवञ्चेत्यादि।

एतद्दूषणग्रन्थं नन्वित्यादिनाऽनूद्य दूषयति न सिध्येदित्यादि दिगित्यनेन। पूर्वोक्तं स्मरणीयमिति बोधितम्। तेन ब्रूम इत्यारभ्य नास्ति सर्वसमागतिरित्यन्तं दूषितं ज्ञेयम्।

न सिध्येत्। यत्रायं मन्त्रस्तत्र श्वेताश्वतरोपनिषदि भवदभिमतत्रिलोचननीलकण्ठचन्द्रशेखरसाम्बत्वलक्षणस्वरूपाश्रावणात्। नाममात्रस्यैव भवादृशभ्रमजनकस्य तत्र सत्त्वात्। वस्तुतस्तेषां परब्रह्मपरत्वस्यैवौचित्यात्तस्य सर्वाकारत्वेनादोषादिति दिक्। तस्मान्नान्तरीयकसाधनं भगवदाराधनादिकमेव, भगवत एव मोक्षनियामकत्वात्।

ननु 'ओङ्कारं रथमारुह्य विष्णुं कृत्वा तु सारथिम्। ब्रह्मलोकपदान्वेषी रुद्राराधनतत्पर' इत्यमृतबिन्दूपनिषन्मन्त्रे विष्णो प्रेरकत्वश्रावणाद् 'ओङ्कारस्य प्रसादेन विष्णोश्चैव प्रसादतः। रुद्राराधनवाञ्छा स्यात्तदाराधनतत्परः। ज्ञानमानन्दमद्वैतं परं ब्रह्माधिगच्छती'तिसूतसंहितोपबृंहणादिभ्यश्च शिवरिराधयिषासम्पादकत्वमपि प्रतीयते विष्णवाराधनस्येति चेत्,

मैवम्। नाममात्रेण भ्रान्तेः। श्रुतौ त्रयाणामुक्त्या गुणिनां मात्रादेवतानामेवावगमात्तत्र परस्य विष्णोरभावात्। अग्रे 'तावद्रथेन गन्तव्यं यावद्रथपथि स्थितिः। स्थित्वा रथपथस्थानं रथमुत्सृज्य गच्छती'ति रथत्यागकथनात् तत्परित्यागस्यापि प्राप्तेश्च। सूतसंहितायामपि 'ब्रह्मविष्णुमहेशानैरुपास्यं गुणमूर्तिभि'रिति गुणमूर्तीनामेवोक्तत्वेन, तदुक्तविष्णुप्रसादेन रुद्राराधने तत्परस्य 'ईश्वराज्ज्ञानमन्विच्छे'दितिवाक्याज्ज्ञानमेव भवतीति, 'परं ब्रह्माधिगच्छती'त्यत्राधिगच्छतेर्ज्ञानार्थताया एवौचित्याच्च। एतेनैव कौर्मादेरपि व्याख्यातप्रायत्वाच्च। सगुणब्रह्मवादेऽपि सत्त्वस्यैवोत्कर्षान्नान्तरीयकसाधनत्वं विष्णूपासनस्यैव ज्ञेयम्।

सौरादिपुराणानां तु तामसकल्पानुसारित्वात्तेषु कल्पेषु परममुक्त्यभावस्य कौर्ममात्स्ययोः प्रतिपादितत्वेन तेष्वतितामसभावनिवृत्तेरेव मुक्तितयाभिप्रेतत्वेनाविरोधात्। एतदेव बीजं शैवादिपुराणेषु शिवलोकोच्चत्वमहाभोगत्वादिवर्णने ज्ञेयम्। अत एव सूतसंहितायां तत्कल्पीयविष्णौ 'गुणेन तमसाच्छन्नो

---

यत्तु श्रुतार्थश्रवणाद्वृत्तिरित्यादिना गीतोक्तशरणगमनादिकं व्याकुलीकृतं तत्तु गीतार्थविचारे प्रागेव दूषितमस्माभिः।

ओङ्कारस्य प्रसादेनेत्यादिना यत्तेनोक्तं नन्वित्यादिना तदनूद्य दूषयति मैवमिति। 'त्वामनाश्रित्य विश्वात्मन्न योगी मामुपेष्यती'ति विष्णुम्प्रति शिववाक्यस्यापि तत्कल्पीयविष्णुपरत्वान्नाममात्रेणैव भ्रमजनकत्वमित्याह एतेनेति। सगुणब्रह्मवादे विश्वाधिकं शिवसायुज्यस्य परमुक्तित्वं यत्तेनोक्तं तद्दूषयति सगुणेत्यादि।

'क्रमेण लभ्यतेऽन्येषां मुक्तिराराधनाद् द्विजाः। आराधनान्महेशस्य तस्मिञ्जन्मनि मुच्यते'इतिसौरपुराणीयवाक्यस्य तात्पर्यमाह सौरेत्यादि। 'दिनकृत्कोटिसङ्काशं स्थानमाद्यमुमापते'रित्यादिशैववाक्यतात्पर्यमाह एतदेवेति। स्वोक्तमुपष्टम्भाति, अत एवे-

विष्णुः सत्त्वगुणं बुधाः । अधिष्ठाय भवेत्सर्वजगतः पालकः प्रभु'रिति तमोमिश्रस्यैव सत्त्वाधिष्ठातृत्वमुक्तम् । तृतीयस्कन्धे च कालमुपक्रम्य 'गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् । वर्तन्तेऽनुयुगं येषां वश एतच्चराचर'मिति त्रयाणामपि तद्भीतत्वमुक्तम् । आगमे च 'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः एते पञ्च महाप्रेताः पादमूले व्यवस्थिता'इति महाप्रेतत्वमुक्तम् । न तावता वस्तुनोऽन्यथाभावः । तन्नामकानां तेषां भिन्नत्वात् । अतः श्रुत्यादितात्पर्यं वस्तुस्वरूपं चानालोच्य, उक्तजातीयवचनगोचरनामादिमात्रेण यदन्यथाप्रतिपादनमप्ययदीक्षितैः कृतं, तद्वाजपेयेन दीक्षिष्यमाणैः सौत्रामणिं वा चिकीर्षमाणैस्तच्छुष्केष्टिकरणदशायामेव कृतमिति सुधीभिरवधेयम् ।

तस्माच्छ्रुतिस्मृतिपुराणादिभिर्निरुपाधिकमहामाहात्म्यस्य भगवत्येव प्रतिपादनात् सर्वाकारस्यापि परब्रह्मणस्तदेव मुख्यं स्वरूपं, इतराणि तु तरतमभावापन्नानि विभूतिरूपाणि, तेषु शिवो मुख्यविभूतिरूप इत्येव सकलशास्त्रीयनिश्चयः ।

एतावता ग्रन्थेन 'ईशोऽपि यस्य खलु महिमे'तिपूर्वप्रतिज्ञातं निश्चये विभूतिरूपत्वमीशस्य विचारितम् ।

॥ इति भ्रान्तशैवनिराकरणम् ॥

---

त्यादि । यत्तु 'ब्रह्माणं नीलकण्ठं च याश्चान्याः सर्वदेवताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फल'मितिमोक्षधर्मवाक्याद् 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपी'तिगीतावाक्याच्च प्रतीयमानं भगवद्भजनाधिक्यमसहमानेन मोक्षधर्मवाक्यस्य ज्ञानिनां देवान्तराभजन एव तात्पर्यं न भगवद्भजनाधिक्ये, तथा गीतावाक्यस्येति तेनोक्तं, तत्तूपक्रमविरोधाद्गीतातात्पर्यस्य पूर्वमुक्तत्वाच्चासङ्गतमित्यत उपेक्षितम् । यदप्येकषष्ठितमेन वैष्णवान् गालयित्वा विष्णुभजनस्य शिवभजनतौल्यमपि नास्तीति प्रलपितं, तत्तु पूर्वोक्तवाक्येषु विचारितेष्वाधिक्यायैव फलति, न तु निकर्षायेति वृथावादत्वादुपेक्षितमिति सर्वमभिसन्धायाह अत इत्यादि । तथा चापेयं पीत्वा तदुक्तमित्यत उपेक्षितमित्यर्थः ।

सिद्धमाह तस्मादित्यादि ।

नोक्तं पुराणविषये यदिहाप्रसङ्गाद्वादान्तरे तदुदितं खलु भिन्दिपाले ।
तद्वीक्ष्य संशयमलं मनसो निरस्य श्रीकृष्णमादिपुरुषं विबुधा भजध्वम् ॥ १ ॥

श्रीमदाचार्यकृपया पीताम्बरतनूजनुः ।
द्वितीयं व्यवृणोद्वादं स्वकृतौ पुरुषोत्तमः ।

# अथ मूलरूपनिर्धारः ।

अतः परं तादृशमहिमवतः परब्रह्मणः कृष्णत्वादिकं विचार्यते ।

ननु मूलरूपस्य सर्वाकारत्वाल्लीलावताराणां च नानाविधत्वात्तत्तत्ताप-नीयेषु कृष्णरामनृकेसरिणां परत्वप्रतिपादनेन तौल्यात् कथमेकस्य श्रीकृष्ण-स्यैवादिमूर्तित्वं ? न च गोपालतापनीयेऽवताराणां मध्ये 'श्रेष्ठोऽवतारः को भविते'तिप्रश्ने भगवता कृष्णावतारस्योक्तत्वात् तथेति वाच्यं, तावता श्रेष्ठ-तामात्रस्य सिद्धेः । न च 'कृष्णस्तु भगवान्स्वय'मितिवाक्यात्तथेति वाच्यं, 'ताविमौ वै भगवतो हरेरंशाविहागता'वित्यादिवाक्यदर्शनात्तस्य स्तावकत्वे-नाप्युपपत्तेः । वृष्णिसुतवसोर्वरानुरोधेन तत्पुत्रभावेन प्राकट्ये आदिमूर्ति-त्वस्याशक्यवचनत्वादिति चेत्,

उच्यते । तृतीयस्कन्धे 'कृष्णद्युमणिनिम्लोच' इत्यत्रावतारदशाया-मपि द्युमणित्वेन निजधामस्थताव्यवस्थापनात् । 'स्वशान्तरूपेष्वितरैः स्वरू-पैरभ्यर्द्यमानेष्वनुकम्पितात्मा । परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भग-वान् यथाग्नि'रिति विदुरं प्रति उद्धववाक्येऽग्निदृष्टान्तेन व्यापकस्य तत्र विद्य-मानस्य सर्वांशयुक्तस्यैवाविर्भावबोधनात्तत्तत्कार्ये तत्तदंशप्रकटीकरणाच्च 'ताविमा'वित्यादिवाक्यानामुपपत्त्या 'कृष्णस्तु भगवान् स्वय'मित्यस्य स्ताव-कत्वायोगात् । गीतायां 'परं ब्रह्म परं धामे'त्यादिना सर्वर्षिसम्मतिपूर्वकं पर-ब्रह्मत्वस्य निश्चायनात् । नवमस्कन्धे 'अष्टमस्तु तयोरासीत्स्वयमेव हरिः किले'-तिकथनाद्दशमस्कन्धे च 'जयति जननिवासो देवकीजन्मवाद'इत्यत्र पुत्रत्वे-

---

## अथ मूलरूपनिरूपणम् ।

स्वरुचा तिरस्कृतपयोदरुचिं यमुनातटे विहितवेणुरवम् ।
व्रजनायकं रुचिररासकरं सततं विभावय मदीय मनः ॥ १ ॥

द्वितीये वादे शिवस्य मुख्यविभूतित्वस्थापनेन सर्वेषां तारतम्येन विभूतिरूपत्वं स्थापयित्वा मूलरूपं निर्णेतुं विचारान्तरं प्रतिजानीते अतः परमित्यादि ।

आदिमूर्तित्वं हेतुत्रयेण साधयति उच्यत इत्यादिना । महदंशयुक्त इति, अत्र महत्पदस्य नार्थं, 'परममहत्परिमाण'मित्यादाविव बोध्यम् । अत्र तात्पर्यनिर्धारो न यथा तथा किन्त्वभिज्ञवाक्यैरिति बोधयितुं 'नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो-मद्वयुनं लोकं ग्राहयन्निह तिष्ठत्वि'तिशुकानुदितभगवद्वाक्ये स्तुतेन भगवच्छिष्येण 'स्वयमे-

नाविर्भावस्य वादमात्रत्वबोधनाच्च तस्यादिमूर्तित्वाबाधकत्वात् । अत एव 'न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् । पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च य'इत्यादिना शुकोक्तं व्यापकत्वं दामोदरजृम्भामृत्स्नाभक्षणलीलादौ प्रकटितं सङ्गच्छते ।

अत एव ब्रह्मवैवर्ते प्रकृतिखण्डे एकोनपञ्चाशत्तमाध्याये हरगौरीसंवादे 'यन्मायया मोहिताश्च ब्रह्मविष्णुशिवादयः । वैष्णवास्ते महालक्ष्मीं परां राधां वदन्ति ते । यदर्धाङ्गा महालक्ष्मीः प्रिया नारायणस्य च । प्राणाधिष्ठातृदेवीं च प्रेम्णा प्राणाधिकां वराम् । शश्वत्प्रेममयीं शक्तिं निर्गुणां निर्गुणस्य च । नारायणश्च शम्भुश्च संहृत्य स्वगणान् बहून् । शुद्धसत्त्वस्वरूपी च कृष्णे लीनश्च निर्गुणे । गोपा गोप्यश्च गावश्च तथान्ये च नराधिप । सर्वे लीनाः प्रकृत्यां च प्रकृतिः प्रकृतीश्वरे । महद्विष्णौ विलीनाश्च ते सर्वे क्षुद्रविष्णवः । महाविष्णुः प्रकृत्यां च सा चैव परमात्मनि । प्रकृतिर्योगनिद्रा च श्रीकृष्णे नेत्रपद्मयोः । अधिष्ठानं चकारैवं मायया चेश्वरेच्छया । प्रकृतेर्वासरं यावन्मितं कालं प्रकीर्तितम् । तावद्वृन्दावने निद्रा कृष्णस्य परमात्मनः । पुनः प्रजागरे तस्य पुनः सृष्टिर्भवेत् पुनः । एवं सर्वे प्राकृताश्च श्रीकृष्णं निर्गुणं विना' इत्युक्तम् ।

गोपालतापनीयेऽपि प्रथममेव 'कृष्णः कस्मा'दितिप्रश्नमुपक्षिप्य, 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति नाम निरुच्य, निराकारताव्यावृत्त्यर्थं तादृशे नमनातिरिक्तं कर्तुमशक्य-

---

वात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे' तिगीतावाक्याद्भगवत्स्वरूपं भगवतैव ज्ञायत इति भगवतैव ज्ञापितेन श्रीमदुद्धवेन यदुक्तं तदेव परमं निश्चायकं, तत्र पूर्ववाक्ये स्वलोकस्थतैव निर्धारिता, द्वितीये चांशयुक्तत्वकथनेन तानादाय लोकशास्त्रसिद्धावतारत्वमपि साधितम् । भगवांश्च मूलरूपातिरिक्तेन येन रूपेण यत्कार्यं करोति तेन तदेव करोतीत्युपास्यरूपविषयकप्रतीकोपासनावाक्यैः सिद्धम् । तेनाग्निवद्व्यापकोऽपि भगवांस्तदंशयुक्तत्वाद्भूभारव्ययाय सङ्कर्षणांशयोगात्तमादायात्र मैत्रेयेणांशत्वमुच्यत इति 'भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहा'-वित्युत्तरार्धकार्यनिर्देशार्जुनसाम्यनिर्देशाभ्यामवसीयते । एवमेतद्वाक्योपपत्तौ अनुपपत्त्यभावे वृथास्तावकत्वस्याप्रामाणिकत्वाद् गीतादशमस्कन्धवाक्याभ्यां च मूलरूपत्वं निश्चीयत इत्यर्थः । इदमेव प्रमेयधर्मादपि साधयति अत एवेत्यादि ।

पुराणान्तरसम्मत्यापि दृढयति । ब्रह्मवैवर्त इत्यादि ।

श्रुत्या दृढयति गोपालेत्यादि । कृषिरित्यादि । भूधातुस्सत्तायाम् । सत्ता चात्मैवेति प्रागेवोक्तम् । निर्वृतिरानन्दः । ऐक्यमभेदः । तथाचात्मलक्षणसत्ताभिन्न आनन्दः परं फला-

मिति सिद्धान्तज्ञापनार्थं च, 'सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे'इति मन्त्रेण रूपलीलावेदान्तवेद्यत्वविद्यादातृत्वान्तर्यामित्वकथनपूर्वकमादावेव नत्वा,तस्य स्वरूपस्य शुद्धत्वं बोधयितुं 'मुनयो ह वै ब्राह्मणमूचुः कः परमो देवः कुतो मृत्युर्बिभेति कस्य विज्ञानेनाखिलं विज्ञातं भवति केनेदं संसरति'इति मुनीनां वेदार्थवेत्तॄणां परस्य मुख्यं स्वरूपं जिज्ञासूनां वक्ष्यमाणहैरण्यशब्दवाच्यं ब्रह्मज्ञं ब्रह्माणं प्रति परदेवताविषयकं प्रथमं, तत्रापि ब्रह्मदृष्ट्या आवेशादिना वा तत्कथने रूपान्तरेऽपि परत्वप्रतिपत्तिर्भवति, परन्तत्रौपचारिकं परत्वमिति निर्व्याजं परत्वं यत्र तज्ज्ञातुं 'भीषास्माद्वातः पवते'इति तैत्तिरीयाद्युक्तनिखिलनियामकत्वलक्षणकस्वरूपविषयकं द्वितीयं, तदपि सोपाधिकं चेति निष्कृष्टं ज्ञातुं 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति छान्दोग्योक्तलक्षणकाद्वैततत्स्वरूपविषयकं तृतीयं, यदि सोपाधिकं कथं तर्ह्यद्वैतं ? यदि मिथ्योपाधिः कथं तर्हि संसार इति संसारनिवर्तकाद्वैतस्वरूपज्ञानार्थं संसारकविषयकं तुरीयमित्येवं वस्तुयाथात्म्यज्ञानाय चतुरः प्रश्नानुपक्षिप्य, 'तदुवाच ब्राह्मणः श्रीकृष्णो वै परमं दैवतं गोविन्दान्मृत्युर्बिभेति । गोपीजनवल्लभज्ञानेनैतदखिलं ज्ञातं भवति स्वाहेत्यनेनेदं संसरती'त्युत्तरिते, तेषां भेदवादसन्देहात् 'कः कृष्णो गोविन्दः कोऽसाविति गोपीजनवल्लभः कः का स्वाहे'तिपुनः प्रश्ने तेषामज्ञानमवगत्य, तच्च पापादिति तानुवाच ब्राह्मणः 'पापकर्षणो गोभूमिवेदविदितो वेदिता गोपीजनाविद्याकलाप्रेरक'इति । पापं

---

त्मकं 'ब्रह्मविदाप्नोति पर'मितिवाक्योक्तमक्षरादप्युत्तमं ब्रह्म कृष्ण इत्यर्थः। इदमुपबृंहितं ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डत्रयोदशाध्यायगर्गोक्तौ'कृष्णवर्णः कलौ श्रीमांस्तेजसां राशिरेव च । परिपूर्णतमं ब्रह्म तेन कृष्ण इति स्मृतः । ब्रह्मणो वाचकः कोऽयमृकारोऽनन्तवाचकः । शिवस्य वाचकः षश्च नकारो धर्म एव च । अकारो विष्णोर्वचनः श्वेतद्वीपनिवासिनः । नरनारायणार्थस्य विसर्गो वाचकः स्मृतः । सर्वेषां तेजसां राशिः सर्वमूर्तिस्वरूपकः । सर्वाधारः सर्वबीजस्तेन कृष्ण इति स्मृतः । कर्मनिर्मूलवचनः कृषिर्नो दास्यवाचकः । अकारः प्राप्तिवचनस्तेन कृष्ण इति स्मृतः । कृषिर्निर्वाणवचनो णकारो मोक्षवाचकः । अकारो दातृवचनस्तेन कृष्ण इति स्मृतः । कृषिर्निश्चेष्टवचनो नकारो भक्तिवाचकः।अकारो दातृवचनस्तेन कृष्ण इति स्मृतः।अत्र सन्दर्भे प्रथमश्लोके उक्तं श्रुत्यर्थं हृदि निधाय परिपूर्णतमं ब्रह्मेत्युक्तं 'ब्रह्मणो वाचक'इत्यादिकायां निरुक्तौ पूर्वश्लोकोक्तं तेजोराशित्वं विवृतं ज्ञेयम्।**सच्चिदानन्दरूपाये**ति,एतेन पूर्ववाक्येऽपि कृष्णशब्देऽपि चिदंशस्तत्समनियतोऽवगन्तव्य इति बोधितम्। **गोभूमिवेदविदित** इतिविग्रहस्तु गां सौरभेयीं गां भूमिं गां वाचं वेदं वा विन्दतीति गोविन्दः। 'पाघ्राध्माधेट्दृशःस'इत्यत्र'गवि विन्देःसञ्ज्ञाया'मिति वार्तिकेन शप्रत्ययः।

कर्षतीति कृष्णः । गोपदं च भूवाचकं वेदाख्यवाग्वाचकं चाभिप्रेत्य तदुभयविदितो लोकवेदप्रसिद्धः पुरुषोत्तमो गोविन्दः, 'गोप्यो गाव ऋच'इतिकृष्णोपनिषच्छ्रुतेर्गोपीजनात्मिका या आसमन्ताद्विद्या तत्कलायाः कौशलस्य स्वाश्रितकृतार्थीकरणरूपस्य प्रेरको गोपीजनवल्लभ इति नामानि निरुच्य तन्माया चेति स्वाहापदवाच्यां संसारिकां मायां चोक्त्वा, तस्या मिथ्यात्वस्य द्वैतस्य च वारणाय इति 'सकलं परं ब्रह्मे'त्यद्वैतमुक्त्वा एतादृशाद्वैतस्वरूपध्यानकीर्तनभजनैर्मुक्तिर्माह 'एतद्यो ध्यायति रसति भजति सोऽमृतो भवती'ति । एवं प्रथमखण्डेन पूर्वोक्तभेदादिसन्देहनिवृत्तावपि ध्येयस्वरूपसन्देहानिवृत्त्या साधनस्वरूपसम्यग्ज्ञानाभावेन च 'ते होचुः किं तद्रूपं किं रसनं कथं वा हो तद्भजनं सर्वं विविदिषतामाख्याही'ति पुनः प्रश्ने, 'तदुहोवाच हैरण्यो गोपवेशमभ्रामं तरुणं कल्पद्रुमाश्रितं तदिह श्लोका भवन्ति, सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम् । गोपगोपाङ्गनावीतं सुरद्रुमतलाश्रयम् । दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यगम् कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम् । चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृते'रितीति स्वरूपमुक्त्वा, 'तस्य पुन'रित्यादिना रसनं भक्तिरस्य भजनं तस्य च स्वरूपमुवाच, ततः 'कृष्णं सन्त'मति मन्त्रद्वयेनानेकधा यजनाद्युक्त्वा, अन्यच्च तत्प्रश्नानुसारेण साधनान्तरादिकमुक्त्वा, उपसंहारे 'इति होवाच हैरण्य इति मुनिब्रह्मसंवादं समाप्य, 'अमुं पञ्चपदमावर्तयेद्यः स यात्यनायासतः केवलं तत् । अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन् पूर्वमर्षा'दितिमन्त्रेण कीर्तयितॄणामनायासेन तत्प्राप्तिं तस्य विरुद्धधर्माश्रयत्वं वागादिदेवागम्यत्वं चोक्त्वा, तस्मात्कृष्ण एव परो देव इति पूर्वसंवादोक्तान्मन्त्रोक्ताच्च हेतुजातात्सावधारणं कृष्णस्य परदेवत्वमुपसंहारेऽपि निगमयामास 'तं ध्यायेत्तं रसेत्तं भजे'दित्योन्तत्सदि'तिध्यानादिकं विधाय, निरूपाधिकस्यैव तादृग्बोधनायान्ते ब्रह्मनिर्देशं चाह ।

एवमुत्तरतापनीयेऽपि । भगवतोऽवतीर्णस्यैव परत्वं तत्स्वरूपस्य निरूपा-

---

ज्ञानमपि लाभ इति केचित् । वस्तुतस्तु श्रुतौ भूमिवेदयोर्ग्रहणादुभयमेवात्र गोशब्देऽभिप्रेतमिति प्रतिभाति । तथाच विन्दतीति विदः, पचाद्यच् । गवि भूमौ वेदवाचि च विन्दो लब्ध्वा ज्ञाता यस्येति लोकवेदप्रसिद्धो गोविन्द इत्यर्थः । पूर्वमर्शादिति । ऋष गतौ, वागादिदेवेभ्यः प्रागेव अर्षद् गतवादित्यर्थः ।

एवं पूर्वतापनीयार्थकथनमुखेन मूलरूपतां निश्चित्य एवंरूपत्वमक्षरे निजधामनि स्थितस्यैव भविष्यति न भूमौ प्रकटस्येतिशङ्कानिरासायोत्तरतापनीयस्याप्यर्थमाह एवमित्यादि ।

धिभक्त्येकगम्यत्वं च बोधयितुं कामोपाधिना भगवन्तं सङ्गतानां व्रजस्त्रीणां पूर्वं तत्स्वरूपाज्ञानाद् ब्राह्मणभैक्षदानस्य श्रेयःसाधनत्वं मन्वानानां पात्रभूतब्राह्मण-जिज्ञासया भगवता सह संवादं 'एकदा व्रजस्त्रियः सकामाः शर्वरीमुषित्वा सर्वेश्वरं गोपालं कृष्णं हि ता ऊचिरे'इत्यादिनोपक्षिप्य 'भगवता दुर्वासस'इति यमुनापरपारवासिनि दुर्वाससि पात्रे निर्दिष्टे यमुनोत्तरणमन्तरेण तस्य दुर्लभत्वात्तदुत्तरणोपायजिज्ञासया पुनः प्रश्ने 'भगवता कृष्णो ब्रह्मचारीत्युक्त्वा मार्गं वो दास्यति, अगाधा गाधा भवति यं मां स्मृत्वा'इत्यादिना स्वस्मरणमहिमन्युपदिष्टे, तद्वाक्येनैव 'तीर्त्वे'त्यादिना भगवद्वाक्यसत्यत्वेन तरणं भैक्षदानं चोक्त्वा; ततो भैक्षतुष्टेन मुनिना प्रतिगमनायाज्ञायां दत्तायां भगवद्वाक्यविस्मरणेन पुनरपि परपारयानस्य दुःशकत्वविचारे यमुनोत्तरणोपायत्वेन 'दुर्वाससमुपवासिनं मां स्मृत्वा मार्गं वो दास्यती'ति मुनिना भगवदुक्तविश्वासार्थं तत्प्रतीतिविरुद्धे स्वस्योपवासित्वे कथिते तासां स्वस्वामिनो ब्रह्मचारित्वे मुनेरुपवासित्वे च सन्दिहानानां विचार्य तूष्णीम्भावे मुनिना 'शब्दवानाकाश'इत्यादिभिः पञ्चखण्डैर्ज्ञानिनो भगवदंशांशस्य स्वस्याभोक्तृत्वं कैमुतिकन्यायप्रदर्शनाय प्रतिपाद्य, ततः 'अयं हि कृष्णो योऽयं पृष्ट'इत्यादिना 'योऽसौ सर्वेषु वेदेषु तिष्ठति, योऽसौ सर्वैर्वेदैर्गीयते, योऽसौ सर्वेषु भूतेष्वाविश्य तिष्ठति, भूतानि विदधाति, स वो हि स्वामी भवती'त्यन्तेन खण्डत्रयेण भगवतः साक्षित्वं, अभोक्तृत्वं, ज्ञानात्मकत्वं, निष्कामत्वं, कूटस्थत्वं, सर्वान्तर्यामित्वं सर्ववेदगेयत्वं, सर्वभूतविधातृत्वं च व्रजस्त्रीसङ्गतस्यैव प्रतिपादितम्। ततो नवमखण्डे 'सा होवाच गान्धर्वी'त्यादिना 'कथमस्मासु जातः? कथं त्वया ज्ञातः? कथं प्रकृतिपरो भूम्यामवतीर्ण'इत्यादिप्रश्नेषु कृतेषु, दशमखण्डे 'दुर्वासा नारायणस्यैवैको हि वै नारायणो देव'इत्यादिना तदेकत्वप्रतिपादनपूर्वकं तस्याब्जयोनेश्च संवादमुपक्षिप्य, भगवता तस्मै वरे दत्ते, 'स होवाचाब्जयोनिरवताराणां मध्ये श्रेष्ठोऽवतारः को भविता? येन लोकास्तुष्टा देवास्तुष्टा भवन्ति यं स्मृत्वा मुक्ता अस्मात्संसाराद्भवन्ति कथं वास्यावतारस्य ब्रह्मता भवती'ति प्रश्नमनूवाद। तत एकादशादिखण्डेषु 'स होवाच तं हि वै नारायणो देव'इत्यादिना भगवदुपवर्णितसप्तपुर्युत्कृष्टमथुरासमीपवनोपवनस्थमूर्तियजनेन मृत्युतरणमुक्तिदुःखतरणान्यनूद्य, पञ्चदशे 'प्रथमां मथुरां रम्या'मित्यादिभिः प्रणवप्रतिपाद्यत्वेन परत्वेन गोपालाहङ्ग्रहोपासकानां मोक्षब्रह्मभावब्रह्मज्ञानानि फलान्युक्त्वा, 'गोपान् जीवान् वै आसृष्टिपर्यन्तमालाति स गोपालो भवतीति स्वीकृ-

तजीवानुग्राहकतया गोपालशब्दनिर्वचनेनावतारश्रेष्ठत्वमुक्त्वा, 'कथमस्यावतारस्य ब्रह्मते'त्यस्योत्तरमाह। ओन्तत्सत्परं ब्रह्म कृष्णात्मको नित्यानन्दैकरूपः सोऽहमोन्तद् गोपाल एव परं सत्यमबाधित'मिति। तथा च स्वस्य कृष्णात्मकत्वमुक्त्वा, नित्यानन्दैकरूपपदेन 'कृषिर्भूवाचकः शब्द'इतिमन्त्रार्थस्मारणात् 'सोऽह'मित्यादिना गोपालरूपस्यैव परसत्याबाधितत्वकथनाच्च मायामुद्राख्यात्हमेव प्रकटोऽवतारत्वं तु चतुर्व्यूहसाहित्यात्तत्कार्यादुच्यते इति सन्दर्भेणानेन बोधितम्। तेनादिमूर्तित्वमप्रत्यूहमेव।

इदमेव चाग्रे'चतुर्भिर्देवैः कथमेको देवो भवती'त्यादिप्रश्नेन, पूर्वं ह्येकमेवाद्वितीय'मित्याद्युत्तरेण योऽसौ जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्यातीतो गोपाल' इति मन्त्रवर्णैस्ततो मुनिना नारदाच्छ्रुतत्वकथनपूर्वकं गान्धर्वीप्रेषणेन विद्याससमासिद्योतनाच्च दृढीक्रियते। तस्मादत्र नावतारमात्रत्वशङ्काया अवकाशः।

अत एव कृष्णोपनिषदि 'यो नन्दः परमानन्दो यशोदा मुक्तिगेहिनी' इत्यादिना परिकरोऽप्यनन्य एवोक्तः। अवतारश्च भगवत्येवान्तर्भूतस्तत्तत्कार्यार्थं तदा तदा तत्र तत्र प्रकटीभवतीति पुराणाद्युक्तानां चरित्राणामभिनिवेशस्तत्तत्परिकरसार्थक्यं चेति न काचिदनुपपत्तिः।

यत्तु तत्तत्तापनीयेषु कृष्णरामनृसिंहस्वरूपेषु परत्वप्रतिपादनेन तौल्यमुक्तं, तत्तथैव।

परमेष विशेषः। रामतापनीये 'चिन्मयेऽस्मिन्महाविष्णौ जाते दाशरथौ हरौ। रघोः कुले'इत्यनेनावतारमुपक्रम्य रामपदस्य कानिचिन्निर्वचनान्युक्त्वा, 'ततोऽथ तत्त्वतः। रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि। इति रामपदे-

---

जाग्रत्स्वप्नसुषुप्तमतीत्य तुरीयातीतो गोपाल इति अत्र जाग्रदादिपदैस्तद्देवतारूपविश्वतैजसप्राज्ञतुरीया अक्षरान्ता उच्यन्ते, तदतीतत्वेन क्षराक्षरात्परत्वं बोध्यते।

मूलरूपमुपनिषदन्तरेणापि गमयति अत एवेत्यादि। अवतारूपस्य भिन्नत्वेऽङ्गीकृते रूपद्वयप्रतीतिरापततीति तन्निवृत्त्युपायमाह अवतारश्चेत्यादि।

कानिचिदिति, 'रघोः कुलेऽखिलं राति राजते च महीं स्थितः। स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः। राक्षसा मरणं येन यान्ति स्वोद्रकतोऽथवा। रामनाम भुवि ख्यातमभिरामेण वा पुनः। राक्षसान्मर्त्यरूपेण राहुर्मनसिजं यथा। प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृताम्। धर्ममार्गं चरित्रेण ज्ञानमार्गं च नामतः। तथा ध्यानेन वैराग्यमैश्वर्यं यस्य पूजनात्। तथा रामस्य रामाख्या भुवि स्यादथ तत्त्वतः।' एतैर्मन्त्रैरुक्तानीत्यर्थः।

नासौ परं ब्रह्माभिधीयते'इति मुख्यां निरुक्तिमुक्त्वा पठ्यते, 'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना' इत्यादि, अतस्तत्र तेन रूपेण परत्वं नाभिप्रेतमपि तु मूलरूपेणैव । अन्यथा काल्पनिकत्वं न वदेद् उपासनार्थतां च, तथा च यस्तावन्मुख्यभक्तावनधिकारी तस्योपासार्थं तथोच्यते, न तु कृष्णस्वरूपवदिति । न च निष्कलाशरीरिपदाभ्यां निराकारत्वं परस्य शङ्क्यं, तयोर्विशेषनिषेधपरत्वात् । सामान्यानिषेधस्यादावेव दत्तोत्तरत्वात् । न च कल्पनापदान्मायिकत्वं शङ्क्यं, मायापदाभावात् । किन्तु 'बहु स्या'मितिवदत्रापीच्छयैव तथाभावात् । 'ब्रह्मणो रूपकल्पने'ति ब्रह्मणो हेतुभूताद्रूपकल्पनेत्यर्थात् ।

अत एवागस्त्यसंहितायां द्वितीयाध्याये 'स्त्रीपुन्नपुंसकाकाररहितः पुरुषोत्तमः । सर्वेश्वरः सर्वरूपः सर्वदेवमयो हरिः । सत्यज्ञानमयोऽनन्तानादिरानन्द उच्यते' इति स्वरूपमुक्त्वा, तृतीयेऽध्याये 'सर्वेश्वरः सर्वमयः सर्वभूतहिते रतः । सर्वेषामुपकाराय साकारोऽभून्निराकृति'रिति तदाकारगोपनमुच्यते । लौकिकाकाररहितः पुरुषोत्तमः पूर्वोक्तः लौकिकाकारोऽभूदिति ।

नापि हनुमदुपनिषदि आवरणेषु वासुदेवस्य गणनाद् भ्रमितव्यं, 'वृष्णीनां वासुदेवोऽस्मी'ति विभूतिमध्यगणितस्य तत्र सत्त्वात् । अवतारप्रायपाठेन तथानिश्चयात् ।

एवमेव नृसिंहतापनीयेऽपि बोध्यम् । तत्रापि मूलरूपेणैव परत्वस्य विवक्षितत्वात् । अत एवावतीर्य तावन्तमेव कार्यं कृत्वा तिरोभवति, न कृष्णावतार इवानन्तलीला वितनुते । रामावतारेऽपि मर्यादामेव भूयोऽनुरुणद्धि, न तु तामुपमृद्य पूतनामोक्षशकटभङ्गदावाग्निपानगोवर्धनोद्धारणादिवल्लीला विधत्ते । तेन तौल्येऽप्यवतारकार्ये विशेषदर्शनात्परमं माहात्म्यं श्रीकृष्णस्वरूप एव प्रकटीकरोतीति तथोच्यते । तेन कोऽपि शङ्कालेशः ।

ननु छान्दोग्ये 'तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणशंसितमसी'ति देवकीपुत्रस्य शिष्यत्वादिश्रावणात्परमपुरुषत्वं न साधीय इति चेत्,

न, तदर्थानवबोधात् । सान्दीपनेर्विद्याग्रहणवदबाधकत्वात् । अत एव 'प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ । नान्यसिद्धामलं ज्ञानं गूहमानौ

---

उपासनार्थतामिति उपासककार्यार्थताम् । विनियोजकब्रह्मण इति, विनियोजक-

नरेर्हितै'रित्यादिवाक्यानि । एवञ्च लीलयोपपत्तावपि तात्पर्यविचारेणान्योऽप्यर्थ उच्यते । तथाहि, अत्र हि स्वदीर्घजीवनफलकं पुरुषयज्ञोपासनं मरणावभृथं पूर्वमुक्तं, तदवगत्याग्रे मुक्तिप्रेप्सुर्घोरः कृष्णाय देवकीपुत्राय गुरवे स्वोपासनं उक्त्वा, वक्ष्यमाणं परोक्षवादेनोवाच, परोक्षप्रियत्वाद्भगवतः । सः घोरः अपिपास एव बभूव पूर्वोक्तविद्यावभृथज्ञानादेतस्या विद्यायाः, एतद्विद्योपासनेनान्याभ्योऽपीदृशीभ्यो विद्याभ्यो वितृष्ण एव जातः । अतःपरं स घोराऽन्तवेलायां एतद्वक्ष्यमाणं मन्त्रत्रयं प्रतिपद्येत । वक्ष्यमाणद्वयप्रकाद्यमन्त्रार्थरूप'स्त्वमसी'त्यन्तस्समये प्रत्यक्षीभूतं त्वामेवानुसन्दध्यादिति । इदं चात्र मध्यमपुरुषप्रयोगादग्रिमचोर्ब्रह्मज्योतिःप्रकाशकत्वेन तत्प्राप्त्यर्थं साक्षात्प्रभुं प्रति प्रार्थनावाक्यमिति गम्यते ।

यत्तु कृष्णस्य शिष्यत्वं अन्तवेलायां कृष्णस्य विद्यान्तरात्तृड्विच्छेदकत्वं प्रतिपद्येतेत्यस्य विधित्वं च कैश्चिद्व्याख्यातं,

तन्न । शिष्यत्वगमकानुपलम्भात् । गुरुत्वब्रह्मत्वयोस्तापनीयश्रीभागवतादिसिद्धत्वेन तृडभावस्याप्यर्थसिद्धत्वात् । घोरनाम्नैव तस्य तृषोऽभिज्ञानात्तद्वैतृष्ण्येन विशिष्टगुरुसम्बन्धेन च विद्योत्कर्षस्यापि सिद्धेः । आदित्यान्तर्गतत्वस्य गायत्र्यर्थविचारे व्यवस्थापनादत्र चग्भ्यामपि तस्यैव परामर्शात्तद्व्याख्येयेषु यजुर्मन्त्रेष्वपि तस्यैवार्थभूतत्वात्तेषु मध्यमपुरुषेण तद्विनियोजकब्राह्मणेऽपि लिङः प्रार्थनार्थत्वस्यैवौचित्याद्विनियोगस्य रात्रिसत्रन्यायेनार्थवादादपि सिद्धेर्विध्याग्रहबीजाभावाच्चेति दिक् ।

ननु भवत्वेवं, तथापि कृष्णस्वरूपस्य मायिकत्वमेवोचितं, 'गोपरूपो हरिः साक्षान्मायाविग्रहधारण'इति कृष्णोपनिषच्छ्रुतेः । तृतीयस्कन्धे उद्धववाक्ये 'यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीत'मितिकथनात् । प्रथमस्कन्धे सूतवाक्ये 'यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः । भूभारः क्षपितो येन जहौ तच्च कलेवर'मितिकथनात्, प्रभासीयलीलया तथावगमाद्, गीतायां च 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम'इत्यर्जुनेन भगवता एव स्वस्वरूपवेत्तृत्वकथनाद्भगवता च तत्रैव 'बहूनि मे व्यतीतानि जन्मानी'ति सन्दर्भे 'प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायये'तिकथनाच्चेति चेत्,

---

त्वेनाभिमते ब्रह्मणि । रात्रिसत्रन्यायेनेति, यथा तत्र प्रति तिष्ठन्ति है व य एतारात्रीरुपयन्तीति फलकथनमात्रकल्पितेन विधिना तत्करणं तादृशफलमेप्सोरङ्गीक्रियते तथाऽत्रापि फलश्रुत्यापि

न। अनवबोधात्। अत्र हि 'अपरं भवतो जन्म परं जन्म विवस्वत' इत्यर्जुनशङ्कायां विवस्वद्गुरुभूतं स्वावतारमभिसन्धाय तद् बोधयितुं बहूनि जन्मान्युपक्रम्य, तेषां विभूतिरूपाणां सम्भवप्रकारोऽनेनोच्यते, न तु स्वस्येति। 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि स'न्निति पूर्वार्धादवगम्यते। यदि तथाभिप्रेयात् 'प्रकृतिं स्वामधिष्ठाये'ति स्वस्वभावाधिष्ठानात्मकपारमेश्वरप्रकारामोघं न ब्रूयात्। न च प्रकृतिरत्र माया, 'आत्ममाये'त्यस्य वैयर्थ्यात्। आत्ममाया च सामर्थ्यं, तेन विरुद्धधर्माश्रयत्वबोधाय तथासम्भव उच्यते, न तु मायिकत्वबोधाय। अत एव 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः। परं भावमजानन्तो ममाव्ययमनुत्तम'मित्यत्राबुद्धीनां ज्ञानप्रकारमुक्त्वा, 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः। मूढोऽयं नाभिजानाति लोको मामजमव्यय'मिति तेषामज्ञाने योगमायासमावृतत्वं हेतुमुक्त्वा, 'मामजमव्यय'मिति स्वरूपमुक्तम्। 'योगमायासमावृत'इत्यस्य भगवद्विशेषणत्वपक्षेऽपि तस्या आवरकत्वेनैव कथनान्नाकारसमर्पकत्वम्। लोकाज्ञानस्यैव प्रकृतत्वात्तद्धेतुकथनादेवाकाङ्क्षापूरणात्। अथाकारसमर्पकत्व एव चेदाग्रहः क्रियते, तदाप्यप्राकृताकारे ब्रह्मणि प्राकृतपुरुषाकारप्रतीतेस्तद्विषयभूत आकारो लोकबुद्धावुत्पाद्यते इति न स्वरूपस्य तथात्वं, शुक्तिरजतवत्। इदं यथा तथा ख्यातिवादे विवेचयिष्यामः। अत एव जन्मप्रकरणे 'इत्युक्त्वासीद्धरिस्तूष्णीं भगवानात्ममायया। पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशु'रिति पूर्वरूपस्यैव प्राकृतशिशुभवनमुक्तम्। पूर्वरूपस्य तु 'देवकीजन्मवाद'इत्यादिवाक्येभ्यो जन्माभाव एव। अतो भूभारक्षपणस्य प्राकृतकार्यत्वात् तदेव रूपं प्रथमस्कन्धीये 'यथा मत्स्यादिरूपाणी'तिसूतवाक्येऽपि परामृश्यते, नटदृष्टान्तेन तथानिश्चयात्। नटो हि सामा-

---

नियोगः सेत्स्यतीत्यर्थः। अधिष्ठायेति। अत्यक्त्वेत्यर्थः। विरुद्धधर्माश्रयत्वबोधायेति। अजत्वसम्भवयोर्विरुद्धयोर्भगवत्सामर्थ्येनाविरोधबोधायेति भावः। लोकबुद्धाविति। आवरणविक्षेपशक्तिमत्या मायाया वस्तुयाथात्म्याच्छादनं अन्यत्र स्थितस्यान्यत्र प्रत्यायनं च स्वभावः प्रतिवादिभिरपि प्रतिपन्नः, परं तन्मतेऽनिर्वचनीयं रजतशुक्तौ उत्पाद्यते तच्च विशेषज्ञाने सत्यज्ञानात्मकत्वान्नश्यति। अस्मन्मते तु चिरकालस्थायित्वेन प्रतिपन्नस्य मायया रजताकारज्ञानस्य संस्कारात्मनामनतिशयानस्यैव मायया बहिः प्रत्यायनं विशेषदर्शने पुनः संस्कारात्मना स्थानस्थितिः। तदेतदुक्तं लोकबुद्धाविति। अस्मिन्नपि पक्षे गमकमाह अत एवेति। एतेन प्रभुचरणकृतव्याख्यानं प्रथमपक्षानुसारीतिबोधितम्। प्राकृतकार्यत्वादिति। प्राकृत-

जिकव्यामोहार्थं बाह्यवेशादिभिः स्वस्वरूपमेव मत्स्यादिरूपेण प्रदर्शयति, नतु तदर्थं शरीरान्तरं गृह्णाति जहाति वा पूर्वम् । तथा भगवानपि मातृप्रार्थनया कंसादिभयनिवृत्त्यर्थं च यद्रूपान्तरं वेशवद्गृहीतवाँस्तदेव जहौ, तत्रापि यथा सिसृक्षया स्वात्मस्वरूपस्य जगतो बहिर्भावः, सञ्जिहीर्षया चान्तर्भावस्तथा तादृक्कार्यार्थाविर्बुभूषया तादृग्देहबहिर्भावस्तत्समाप्तौ च तिरोबुभूषयावरणाग्नि-द्वारा तिरोभाव इति प्रभासीयलीलापि सङ्गता भवति । इदमेवोक्तमेकादशे 'लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलाम् । योगधारणयाग्नेय्या दग्ध्वा धामा-विशत्स्वक'मिति । तेन 'तमद्भुतं बालकमम्बुजेक्षण'मित्याद्युक्तस्य मूलरूप-स्याबाधान्नात्र दोषसंसर्गः ।

अत एव 'राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य । सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिनोपरतः स आस्ते'इत्यनेन तनुभरणादिचेष्टानां नटवन्मायानुकरणत्वमुक्त्वा, कथं मायानु-करणमित्यपेक्षायामुत्तरार्धे एतस्य त्यक्तस्य सृष्ट्यादिकं आत्ममायया 'बभूव प्राकृतः शिशु'रित्यादिनोक्तमनूद्य, षष्ठगुणकथनपूर्वकं स्वमहिम्ना स्थितिमाहा-त्म्यमहिनोपरतः स आस्ते इति । ततो 'मर्त्येन यो गुरुसुतं यमलोकनीतं त्वं चानयच्छरणदः परमास्त्रदग्धम् । जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेह'मित्यनेन दृष्टान्तपूर्वकं पूर्वोक्तशरीरस्थापनसामर्थ्यं च दृढीकृत्य 'तथाप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् । नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन्नित्यनेन कार्यार्थश-रीरप्रयोजनाभावं चोक्त्वा, अग्रे भगवदालयव्यतिरिक्तद्वारिकाप्लावनमुक्त्वा,

---

शरीराद्वृतसङ्कर्षणव्यूहकार्यत्वात् । रजतवत्तस्य पूर्वस्थित्यादिकमाह तत्रापीत्यादि । तत्रापि नटवदनुकृतावपि । उक्तमर्थं प्रभासीयप्रकरणवाक्यैरुपष्टम्नाति। इदमेवेत्यादि । देहस्य मायि-कत्वमत्र लोकाभिरामपदेनोक्तं ध्यानधारणयोरपि तस्या एवाविर्भावो न तु मूलरूपस्य 'यमेवैष' 'भक्त्याहमेकये'त्यादिश्रुतिस्मृ'तिभिः । तेनेति । लोकगोचरस्यैवावरणाग्निना तिरोभावेन नात्र दोषसंसर्ग इति न मूलरूपे मायिकत्वसंसर्गः । उक्तार्थवैशद्याय वाक्यान्तराणामप्यर्थमाह अत एवेत्यादि। स्वस्थगतिमिति स्वमहिस्थस्य गतिम् । तदपि तत्रोक्तं 'सौदामिन्या यथाकाशं यान्त्या हित्वाभ्रमण्डलम् । गतिर्न ज्ञायते मर्त्यैस्तथा कृष्णस्य दैवतै'रिति । एवमेव तदानीं तद्-रूपस्य मायिकत्वं ब्रह्माण्डपुराणवाक्यैरप्पयदीक्षितेन ब्रह्मतर्कस्तवटीकायां दर्शितम् । 'निर्दोष-श्चेत्कथं विष्णुर्मनुष्येषु प्रजायते ? चिन्ताश्रमत्रणाज्ञानदुःखयुग् दृश्यते कथं ? एवं मे संशयो ब्रह्मन्हृदि शल्य इवार्पितः । अनिर्धार्योऽपरैर्मर्त्यैः सूक्तिशक्त्या तमुद्धरे'त्यादिप्रश्नैर्नारदादिभिः

'नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः । स्मृत्याशेषाशुभहरः सर्वमङ्गलमङ्गल' इत्यनेन भगवदालये मूलरूपेण सन्निधानं शुक आह । तेन'अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा । तथा प्राकृतदेहत्वं देहत्यागादिकं तथा । असुराणां विमोहार्थं दोषा विष्णोर्न हि क्वचिद्'इति ब्रह्माण्डवाक्यादसुरान् व्यामोहयितुं मर्त्यलीलौपयिकं रूपं मायाबलदर्शनाय यद् गृहीतमासीन्नटवत्तस्यैव नटवत्परित्यागोऽस्यां लीलायामनया विधयोच्यते, अतो न रूपस्य मायिकत्वगन्धोऽपि ।

एवञ्चात्र चतुर्णां व्यूहानामिव जगत इवास्यापि रूपस्य भगवति सत्त्वात्तत्कार्यार्थं तानिव तदिवासुरव्यामोहनार्थेनदपि तान्प्रदर्शयति, भक्तान् प्रति तु 'भक्त्या मामभिजानाती'त्यादिवाक्याद्वास्तवमेव स्वरूपं प्रदर्शयतीति ते ते स्वस्वानुभवाद्यनुसारेण वदन्ति । 'तद्धैतान् भूत्वावती'त्यादिश्रुतेश्च तदनुरूपेणैव तेषु फलतीति मायिकत्वं मन्वानेषु मायारूपेण फलतीति तेऽन्धन्तम एव निःसम्बोधमनानन्दमेव प्रविशन्तीति दिक् ।

एतेन 'गोपरूपो हरिः साक्षान्मायाविग्रहधारण'इतिश्रुतिरपि व्याख्याता ज्ञेया । अत्रापि प्रथमपादे साक्षात्पदेन हरेर्मुख्यमनारोपितं रूपमुक्त्वा, द्वितीयेन मायाशरीरधारणकथनात् । विग्रहपदस्य कलहवाचित्वे तु विरुद्धधर्माश्रयत्वमेव बोध्यते । मायाकृतो योऽयं विरोधो गुणक्रियादीनां तद्धारक इत्यर्थादतो नात्र कोऽपि चोद्यावकाशः ।

ननु यदीदं मूलरूपमेव तर्हि स्वात्मारामत्वादिविरुद्धाः सङ्गादयः केन प्रतीयन्ते ? स्वाज्ञानदोषेणेति ब्रूमः । तदुक्तं प्रथमस्कन्धे 'तमिमं मन्यते लोको ह्यसङ्गमपि सङ्गिनम् । आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुध'इति । ननु भवत्वेवं तथापि लोकालोकपरस्थाने द्विजपुत्रानयनाय सहार्जुनेन गमनकथोत्तरं 'ददर्श तद्भोगसुखासनं हरिं महानुभावं पुरुषोत्तमोत्तम'मित्युक्त्वाग्रे 'ववन्द आत्मानमजं तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः । तावाह भूमा परमे-

---

शङ्कितः'स्त्रीपुम्मलानुषङ्गात्मा देहो नास्य विजायते । किन्तु निर्देशचैतन्यसुखनित्यां स्वकां तनुम् प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा । तथाप्यसुरमोहार्थं परेषां च क्वचित्क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे । दौर्लभ्याच्चैव मोक्षस्य दर्शयेत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृति'मित्यादिवचनजातं प्रदर्श्य, परिहरणीयमिति । एतदपश्यन्तो बहिर्मुखा वदन्ति पुरुषोत्तमक्षेत्रे मौसलावशिष्टं रूपमस्तीति । त एतैर्वाक्यैरेव प्रतिबोधनीयाः । किंबहुना प्रभासीयलीलोपयुक्ता यादवादिदेहा अपि मायिका एव! तदपि तत्र भगवतैवोक्तं दारुकं प्रति,

ष्ठिनां पतिर्बद्धाञ्जली सस्मितमूर्जया गिरे'ति वन्दनाज्ञाप्यत्वादिकथनात्कथं मूलरूपतेति चेत्,

उच्यते । पूर्वोद्धववाक्ये महदंशयुक्तपदादंशयुक्तस्य भगवतः प्रादुर्भावो न तु केवलस्यैव, ते च तत्तत्कार्ये स्वरूपात्पृथक्क्रियन्ते, एवं सति यथा भूभारक्षपणादौ संकर्षणव्यूहस्य पूर्वोपपादितप्राकृतदेहावृतस्य पृथग्भावस्तथात्रानिरुद्धांशस्याविर्भावस्तेन च स्वांशिनमनादिकार्यमिति ज्ञेयम्। एवं च 'ताविमौ वै भगवतो हरेरंशाविहागतौ । तयोरेको बलभद्रो बभूवे'त्यादीनि वाक्यानि हरिवंशविष्णुपुराणस्थानि च । कृष्णत्वेन प्रादुर्भवितुमागच्छतो नारायणस्य मेरुकन्दरायां स्वजीर्णतनुन्यासकथनं हरिवंशपाद्मभूखण्डीयं भृगुशापनिमित्तं निरयतुल्यमानुषत्वेनावतारणकथनं तत्तच्चरित्रबोधकानि च वाक्यानि यथाश्रुतमेव सङ्गतानि भवन्ति । अन्यथा त्वेकस्मिन् लक्षणैवापतेत् । तथा च यथाजातेष्ट्यधिकरणे वैश्वानरद्वादशकपाले सर्वांशसत्त्वेऽपि यदष्टाकपालो भवति गायत्रियं वैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जात एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती'ति तस्मिन् विद्यमानैस्तत्तदंशैर्नियततत्फलसिद्धिर्न त्वंशान्तरेणांशिना सम्पाद्यते, तद्वदिहापीति न काचिदनुपपत्तिः ।

एवमेतेनैव शिवपूजाब्राह्मणनमनादिकमपि व्याख्यातं ज्ञेयम् । नारदपरीक्षायां 'ब्रह्मन् धर्मस्य वक्ताहं कर्ता तदनुमोदिता । तच्छिक्षयन् लोकमिममास्थितः पुत्र मा खिदे'ति 'न मे पार्थास्ति कर्त्तव्यं' 'यदि ह्यहं न वर्तेयं जातु कर्मणी'त्यादिगीतावाक्याच्च । अत एव कुरुक्षेत्रयात्रायां 'अहो वयं जन्मभृत' इत्यादिना ब्राह्मणस्तुतौ मुनीनां भ्रमस्ततो विमृश्य 'जनसङ्ग्रह'इत्यूचुरित्यपि तद्वाक्यं सङ्गच्छते । अन्यथाभानं तु भगवन्माययैवेति निश्चयः । अत एव तत्रैव ब्राह्मणान् प्रति श्रीवासुदेवकृतप्रश्नोत्तरं, 'नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया । कृष्णं मत्वार्भकं यन्नः पृच्छति श्रेय आत्मनः। सन्निकर्षो हि मर्त्यानामनादरणकारणम् । गाङ्गं हित्वा यथान्याम्भस्तत्रत्यो याति शुद्धये'इत्यादिनारदवाक्यम् । एतेनैव 'निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभि'रित्याद्युद्धवं प्रति भगवद्वाक्यमपि व्याख्यातं ज्ञेयम्, भक्तोत्कर्षाय तथाकरणात् कथनाचेति सुधीभिर्निपुणतया विभावनीयमिति शुभम् ।

कुतर्कदशनावलीविकटवादियादोगण-
श्रितश्रुतिमहार्णवे स्मृतिगुणावलम्बान्मुदा ॥
निमज्य भगवत्कृपातिबलधारकानुग्रहात्
कृते मनन उद्धृतो मणिरयं मया वाङ्मयः ॥ १ ॥
एष पुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे ॥
समर्पितस्तेन दासे मयि तुष्यन्तु ते सदा ॥ २ ॥
ये वैदिकम्मन्यतयात्यनल्पैस्तुदन्ति साधून् कटुकूटजल्पैः ।
स एष तेषु प्रहृतः प्रहस्तस्तादृक् खलो येन भवेद्विहस्तः ॥ ३ ॥
एतं निधाय निकटे प्रणतिं विधाय शिष्टेष्विदं सविनयं विनिवेदयामि ।
हेलोपहासविधयाप्यवलोक्य किञ्चित् कालं बुधाः करुणयैव कृतार्थनीयः ॥ ४ ॥
श्रीवल्लभाचार्यमतानुवर्ती तद्दासदासः पुरुषोत्तमाख्यः ।
क्षिप्तं खलैर्वर्त्मनि वैष्णवानां पङ्कं हरन् वर्त्म समं चकार ॥ ५ ॥
इति श्रीमद्वल्लभनन्दनचरणैकतानस्य पीताम्बरसूनोः पुरुषोत्तमस्य
कृतावचतारवादावल्यामाद्यो वादः प्रहस्तनामा सम्पूर्णः ।
श्रीः ॥ श्रीः ॥ श्रीः ॥ श्रीकृष्णः शरणं नः ॥

---

'त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः । मन्मायारचनामेतां विज्ञायोपशमं व्रजे'ति । तदेतद-भिसन्धायाह तेनेत्यादि गन्धोऽपीत्यन्तम् । स्फुटमग्रिमम् ।
इतिश्रीवल्लभाचार्यचरणाब्जरजोधनः ।
तृतीयवादं स्वकृतौ व्यवृणोत्पुरुषोत्तमः ॥ १ ॥
श्रीविठ्ठलेशपदपद्मपरागलेशप्राप्ताभिषेकविलसत्सदसद्विवेकः ।
श्रीबालकृष्णकृपया रचिते प्रहस्ते बालावबोधनकृतेऽरचयच्च टीकाम् ॥ २ ॥
अध्ययनबोधशीलनसन्तुष्टः प्रश्रयन्वितः ।
कृतवानेतां प्रहस्तटीकां विठ्ठलरायप्रमोदाय ॥

**इतिश्रीवल्लभनन्दनचरणैकतानपीताम्बरतनुजपुरुषोत्तमकृता प्रहस्तवृत्तिः सम्पूर्णा.**



॥ श्रीकृष्णाय नमः ॥

दशदिगन्तविजयिश्रीमत्पुरुषोत्तमप्रभुपादैः प्रणीतः

# पण्डितकरभिन्दिपालवादः ।

विविधेषु विविधफलदः शिवादिरूपैः सदा स्वयं त्वगुणः ।
भक्तेषु निर्गुणत्वं कुर्वन् हरिरुत्तमो जयति ॥ १ ॥

ननु कुत एतदवगम्यते ? सर्ववेदेतिहाससारभूतात् सकलप्रमाणाविरुद्धात् श्रीभागवतान्महापुराणादिति ब्रूमः । कथम् ? उच्यते । दशमस्कन्धे 'देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् । प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरि'मित्यादिना भजनीयप्रभुस्वभावविरुद्धाया भजद्गतेः कारणे राज्ञा पृष्टे शुकेन 'शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः । वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा । ततो विकारा अभवन् षोडशामीषु कश्चन । उपधावन् विभूतीनां सर्वासामश्नुते फलम् । हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः । स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवे'दित्यादिना आपाततो विरोधः स्वभावस्य, वस्तुतस्तु स्वभावसदृश्येव गतिरिति समाहितम् । तत्र विकारोपधावने सर्वविभूतिफलकथनाद्भगवद्भजने च निर्गुणभवनकथनादुक्तं सिध्यति । शिवादीनां भगवद्रूपता च 'त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणं' 'स्थित्यादये हरिविरञ्चिहरेतिसञ्ज्ञा' इत्यादिवाक्याद् 'येऽप्यन्यदेवता भक्ता' इतिगीतावाक्याच्च स्फुटति ।

भवत्वेवं, तथापि न प्रमाणान्तराविरोधः । श्रीभागवते शिवस्य शश्वच्छक्तियुक्तत्वं त्रिलिङ्गत्वेन गुणसंवृतत्वं त्रिधाहङ्काराधिष्ठातृत्वं च यः स्वभाव उक्तस्तस्य पुराणान्तरेष्वपि स्फुटत्वात् । तत्र प्रथमं सूतसंहितायाम् 'उमार्धविग्रहः श्रीमान् सोमार्धकृतशेखरः । ब्रह्मविष्णुमहेशानैरुपास्यः परमेश्वर' इत्यादिभिः परमशिवस्योमासहायत्वं साम्बत्वबोधकवाक्यैः स्फुटति । न च तेषु परमशिवो नोक्तः, किन्त्वीशानादिव्यूहान्तर्गत एव कश्चिदुच्यत इति वाच्यम्, महेशानोपास्यत्वलिङ्गविरोधात् । अष्टमाध्याये च नैमिषेयैः 'कः कालानवच्छिन्न' इति पृष्टे 'ब्रह्मणोऽन्ते मुनिश्रेष्ठा मायायां लीयते जगत् । तथा विष्णुश्च रुद्रश्च प्रकृतौ प्रलयं गता'वित्यादिना 'माया च प्रलये काले

परस्मिन् परमेश्वरे । सत्यबोधसुखानन्दब्रह्मरुद्रादिसञ्ज्ञितम् । अभेदेन स्थितं याति हेतुस्तत्र सुदुर्गम' इत्यन्तेन सर्वलयमुक्त्वा 'अन्यथाभानहेतुत्वादीर्यमाणेति कीर्तिता । आत्मतत्त्वतिरस्काराक्तम इत्युच्यते बुधैः । विद्यानाश्यत्वतोऽविद्या मोहस्तत्कारणं यत' इत्यादिना तमोऽसत्कारणाव्यक्तादिशब्दवाच्यतां प्रतिपाद्य, 'एषा माहेश्वरी शक्तिर्न स्वतन्त्रा परात्मव'दित्यन्तेन मायास्वरूपकथनपूर्वकं कालस्य कल्पितत्वमुक्त्वा 'कालो माया च तत्कार्यं शिवेनैवावृतं सदा । शिवः कालानवच्छिन्न' इति सन्दर्भान्ते यावत्सृष्टिकालं मायासाहित्यकथनाद्, 'अम्बिकासहितो देवो नीलकण्ठस्त्रिलोचन' इत्युपासनायामप्यम्बिकासाहित्यकथनाच्च, कालानवच्छिन्नस्य तस्य शक्तिसहितस्यैव परमशिवत्वस्फुटीभावात् । नवमाध्याये च 'ऋतं सत्यं परं ब्रह्म पुरुषं साम्बमीश्वर'मित्यतोऽपि । एवमेव ज्ञानयोगखण्डमुक्तिखण्डयोरपि ।

न च सृष्ट्युत्तरमायालयादम्बिकायाश्च तद्भिन्नत्वान्मायात्यागे परमशिवस्य शक्तियोगेऽपि न सगुणत्वमिति वाच्यं, यज्ञवैभवखण्डीयत्रयोदशाध्यायविरोधात् । तत्र हि 'चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमाः । अनुप्रविष्टा या संविन्निर्विकल्पा स्वयं प्रभा । सदाकारा परानन्दा संसारोच्छेदकारिणी । सा शिवा परमा देवी शिवाभिन्ना शिवङ्करी'त्येतैः परमशिवस्य या मायातिरिक्ता शक्तिस्तस्याः प्रपञ्चसृष्टिप्राक्कालवर्तिमायाकृतशक्त्याकारप्रविष्टसंविद्रूपं स्वरूपमुक्तम् । तदध्यायव्याख्यानारम्भे च माधवाचार्यैः संविद्रूपायाः परशक्तेः परशिवादन्यत्वशङ्कया प्रसक्तं मिथ्यात्वं निरूपयितुमुपक्रमत इत्युक्त्वा 'मायैवास्य परा शक्ति'रिति भ्रमं व्युदसितुं तस्याः शक्तेः स्वरूपं दर्शयतीत्यारभ्यास्याः शिवस्य च परमार्थतः पूर्वोक्तचिद्रूपत्वाद्भेदो नास्तीत्यर्थः । तथा च शिवशक्त्योर्भेदावभास एव मिथ्या, नतु प्रपञ्चवत्स्वरूपमपीत्यन्तेन परमशिवत्वदशायां तदविनाभावः प्रदर्शितः । अग्रे च 'जगत्कारणमापन्नः शिवया मुनिपुङ्गवाः । सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थक' इत्यादिभिः, 'न शिवेन विना शक्तिर्न शक्तिरहितः शिवः । उमाशङ्करयोरैक्यं यः पश्यति स पश्यती'त्यन्तैः सर्वावस्थासु तदधीनत्वमन्यथाऽशक्तत्वमविनाभावश्च मूल एवोक्तः ।

शक्त्याकारश्च मूले मायाया उक्तः । माया तु पूर्वमष्टमाध्याये तमोऽज्ञानादिरूपैवोक्ता । अत्र च शक्त्याकारव्याख्याने 'प्राणिकर्मे'त्यादिनाभिमुखो भवतीत्यन्तेन प्राणिकर्मपरिपाकवशादीषद्विकल्पने चिद्रूपस्य किञ्चित्स्वप्रतिष्ठता-

परित्यागेन मायाभिमुख्ये शक्त्याकारोऽङ्गीकृतः । एवं सति संविद्रूपाया अपि शक्तेर्मायिकाकारानुप्रविष्टत्वेन गुणाविनाभावात् परमशिवस्य च तदाकारक-संविच्छक्त्यविनाभावात्तयैक्यात्तया विना असमर्थत्वाच्च शश्वच्छक्तियुक्तत्वं गुणसंवृतत्वं च दृढीभवति । स्वप्रतिष्ठतायामनभिमुख्ये मायालये च तदाकारा-भावेनानुप्रवेशाभावेन च परमशिवस्वरूपाभाव इत्यपि । ईशानतत्पुरुषाघोर-वामदेवसद्योजातादीनां त्वितो हीनत्वं स्फुटमेवाग्रिमाध्याये प्रतिपादितम् । 'सर्वाण्येतानि विप्रेन्द्राः शिव एव न संशय' इत्यनेन सदाशिवादीनां च शिव-त्वेन विधानाद्, अतस्तेऽपि तथा ।

किञ्च सौन्दर्यलहर्यां शङ्कराचार्यैरपि ' शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपी'त्येवोक्तम् । अतः परमशिवत्वेऽपि न सगुणत्वहानिरिति दिक् ।

किञ्च प्रथमखण्डाष्टमाध्याये ' रुद्रो विप्रास्तमोगुणम् । अधिष्ठाय भवे-द्धन्तुं जगतः सत्यवादिन ' इत्यनेन रुद्रमूर्तेः संहारकत्वमुक्त्वा, ब्रह्मविष्णुमू-र्तिषु शिवात्मकत्वेऽपि साक्षात् शिवज्ञानानुत्पादकत्वमुक्त्वा, 'रुद्रस्य मूर्तिमा-राध्य प्रसादात् क्रमवर्जिताः । उत्पन्नेनैव जानन्ति शिवं सर्वत्र संस्थितम् । रुद्रमूर्तिषु सर्वासु शिवोऽतीव प्रकाशते । अन्यासु तारतम्येन शिवः साक्षा-त्प्रकाशते । आदर्शे निर्मले यद्वद् भृशं भाति मुखं द्विजाः । तथातीव महादेवो भाति सर्वासु मूर्तिषु' इत्यन्तैर्वाक्यै रुद्रमूर्तेर्मुख्यत्वमुक्तम् । तेन तस्याः शिव-प्रियत्वमायाति । सा च संहर्तृत्वादतितामसाहङ्कारिणीत्यहङ्काराधिष्ठातृत्वम-त्यन्तमुपासकार्थमुरीकरोतीति सिध्यति । तेन क्वचिदेव मुक्तिं प्रयच्छति, विशेषतो धनं भोगादि च प्रयच्छति । दृष्टशास्त्रयोश्चैतदनुरोधि । अन्यथा शैवा धनादिभाजो न स्युः, साहङ्काराश्च न स्युः । तेभ्यो भोगाद्यदाने ' भुक्ति-मुक्तिप्रदायक'मित्याद्युक्तिश्चात्र विरुध्येत । अतोऽत्र श्रीभागवतोक्तप्रकारक-मेव रूपं शिवस्य प्रतिपाद्यत इति न विरोधः ।

ननु कूर्मपुराणे निर्गुणब्रह्मात्मकत्वं शिवस्योक्तमिति तद्विरोधः कथं परिहार्य इति चेद्,

उच्यते । तत्तात्पर्यं विविच्य परिहार्यः । कथम् ? इत्थम् । उपक्रमोप-संहाराभ्यां हि ग्रन्थतात्पर्यनिर्णयो भवति, न तु यथाकथञ्चित् । पुराणादिषु च समासभेदेन प्रतिपाद्योऽर्थो द्विधोच्यते । तत्र यत्समासेनोक्तं तदेव विस्तारेऽपि

भवति । अन्यथैकवाक्यता हन्येत । एवंसति योऽत्र संक्षेपः प्रथमाध्याये, तस्यैव व्यासः प्रश्नोपाख्यानादिभिः सम्पूर्णे कूर्मपुराणेऽस्तीतिनिश्चयः ।

तत्र प्रथमेऽध्याये सूतः कौर्मस्य ब्राह्मादिचतुःसंहितायुक्तत्वं स्वरूपलक्षणमुक्त्वा ब्राह्मीं च संहितां 'षट्साहस्री'त्युक्त्वा तदर्थमाह, 'यत्र धर्मार्थकामानां मोक्षस्य च मुनीश्वराः । माहात्म्यमखिलं ब्रह्म ज्ञायते परमेश्वर' इति । एवं सत्यत्र चतुर्वर्गमाहात्म्यं परिकरो ब्रह्माभिन्नः परमेश्वरो मुख्योऽर्थ इति सिध्यति । ततः स क इत्याकाङ्क्षायां कूर्मस्य नारदादिभिः संवादमुपक्षिप्य, समुद्राल्लक्ष्म्युत्पत्त्यनन्तरं 'कैषे'ति प्रश्ने 'इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी । माया मम प्रियानन्ता ययेदं मोहितं जग'दित्यादिना सृष्ट्यादौ करणत्वं च तस्या उक्त्वा, 'अस्यास्त्वंशानधिष्ठाय शक्तिमन्तोऽभवन् सुराः । ब्रह्मेशानादयः सर्वे सर्वशक्तिरियं मम । सैषा सर्वजगत्सूतिः प्रकृतिस्त्रिगुणात्मिका । प्रागेव मत्तः संजाता श्रीः पद्मे कल्पवासिनी'त्यनेन तस्याः प्रथमकार्यरूपत्वमुक्त्वा ततो 'ब्रूहि त्वं पुण्डरीकाक्ष यद्धि कालत्रयेऽपि चे'ति द्वितीये प्रश्ने तैरधिकजिज्ञासया कृत इन्द्रद्युम्नसंवादमुपक्षिप्य तत्पूर्वजन्मोक्त्वा 'ब्रह्माणं च महादेवं देवानन्यान्स्वशक्तिभिः । मच्छक्तौ संस्थितान् बुद्ध्वा मामेव शरणं गत' इति चोक्त्वा ततो द्वितीयजन्मनि ब्राह्मणत्वे 'सर्वेषामेव भूतानां देवानामप्यगोचरम् । वक्तव्यं यद्गुह्यतमं दास्ये ज्ञानं तवानघ । लब्ध्वा तन्मामकं ज्ञानं मामेवान्ते प्रवेक्ष्यसी'ति स्वज्ञानोत्तरं स्वस्मिन् प्रवेशं भाविनमुक्त्वा ततः पूर्वं कार्यार्थमान्तरालिकं स्वस्मिन् प्रवेशं श्वेतद्वीपे स्थितिं चोक्त्वा ततो द्विजजन्मनि जाते 'ज्ञात्वा मां वासुदेवाख्यं यत्र द्वे निहितेऽक्षरे । विद्याविद्ये गूढरूपं यद्ब्रह्म परमं विदुः' इति ज्ञानं तस्यानूद्य ततो महाभूताश्रयपरमेश्वरमहादेवाराधनेन क्रियमाणेन भगवत्परमकलारूपलक्ष्म्याः साक्षात्कारे ततस्तया 'न मे नारायणाद्भेदो विद्यते हि विचारतः । तन्मयाहं परं ब्रह्म स विष्णुः परमेश्वर' इत्यनेन कथितं नारायणस्य परमेश्वरत्वं लक्ष्म्यास्तदात्मकत्वं मोक्षार्थमीशानस्याराधनं श्रुत्वा ईश्वरः कथं ज्ञातुं शक्य इति लक्ष्मीं प्रति तत्प्रश्ने साक्षान्नारायणो ज्ञानं ते दास्यतीत्युक्त्वा तत्तिरोधाने ततो नारायणाराधने क्रियमाणे प्रादुर्भूय प्रसन्नो नारायणस्तं स्पृष्टवान्, तावतैव ब्रह्मज्ञाने जाते इन्द्रद्युम्न आह 'अतः परं योगेन किं प्रयोजनम्'? ततो भगवता लोकसङ्ग्रहाभिप्रायेण सर्वहितायोक्तं 'विज्ञाय तत्परं तत्त्वं विभूतिं कार्यकारणम् । प्रवृत्तिं वापि मे ज्ञात्वा मोक्षार्थीश्वरमर्चयेत्' इति । ततोऽग्रे स्वत्र्यक्षाक्षरभेदेन भावनात्रयं,

तत्राशक्तस्याद्यभावना चोक्ता । ततो मोक्षार्थं विश्वेशाराधनमुक्त्वा तस्मै परतत्त्वं यदक्षरं तदपि 'परात्परतरं तत्त्वं परं ब्रह्मैकमव्ययम् । नित्यानन्दं परं ज्योतिरक्षरं तमसः पर'मित्यनेनोक्त्वा, तस्यैश्वर्यं, विभूतिकार्यं जगत्, कारणं शुद्धमक्षरं, स्वमन्तर्यामिणं सृष्टिस्थित्यन्तकर्तृत्वरूपां स्वप्रवृत्तिं चोक्त्वा शाश्वतमर्चयेत्याह । ततो वर्णाश्रमादींस्तस्मादुक्त्वान्तर्हितोऽभूत् । ततः स एकात्मदर्शकं योगमाराधनेन प्राप्य मानसोत्तरे गत्वा ब्रह्माणं दृष्ट्वा ततस्तत्र स्थितः 'अपश्यदैश्वरं तेजः शान्तं सर्वत्रगं शिवम् । स्वात्मानमक्षरं व्योम यद्विष्णोः परमं पदम् । आनन्दमचलं ब्रह्म स्थानं तत्पारमैश्वरम् । सर्वभूतात्मभूतस्थपरमैश्वर्यमास्थितः । प्राप्तवानात्मनो भावं यत्तन्मोक्षाख्यमव्ययम् । तस्मात्सर्वप्रयत्नेन वर्णाश्रमविधौ स्थितः । समाश्रित्यान्तिमं भावं मायां लक्ष्मीं तरेद् बुध' इति कूर्मोक्तिमुखेन सूतः शास्त्रं सङ्क्षेपतः समापितवान् ।

पुनर्नारदादिप्रश्नमुपक्षिप्य द्वितीयाध्यायमारभ्य विस्तारेण कूर्मोक्त्यादिभिः सर्वं पुराणमुक्तवानिति सङ्ग्रहः ।

एवं सति यत्कालत्रयेऽपि तद्वदेत्यस्योत्तरत्वेनाक्षरं सिध्यति । यत्तमसः परत्वेनोक्तं, यच्चार्चनीयतया शाश्वतत्वेनोक्तं तदपि तदेव । अव्ययत्वादन्त्यभावनाप्राप्यत्वाच्च । तच्च विष्णोः परमं पदं, तदेव पारमेश्वरं स्थानम् । परमेश्वरश्च विष्णुरेवेति पूर्वं लक्ष्म्यैवोक्तम् । अतः स एव परमः ।

त्र्यक्षभावना च माध्यमिकी, न तु परमा । स्वभावनाया अशक्ताधिकारत्वं तु सात्त्विकत्वात्सौकर्याय सत्त्वस्य स्वच्छत्वेन सम्यग्बुद्धिप्रकाशकत्वात्, न तु हीनत्वाय । तथासति पूर्वं परमेश्वरत्वं विष्णोर्नोच्येत । तदर्चकेषु मायायाः प्रभुत्वं च नोच्येत ।

न च 'आराधयेशान'मिति वाक्य ईशानः शिव एवेति शक्यवचनम् । तदुत्तरं पुनरिन्द्रद्युम्नप्रश्ने 'शाश्वतो निष्कलोऽच्युतः कथं ज्ञातुं शक्यत' इत्युक्तिविरोधात् । लक्ष्म्युक्तौ साक्षान्नारायणो ज्ञानं दास्यतीत्यस्य नारायणदर्शनोत्तरमिन्द्रद्युम्नकृतयज्ञेशाच्युतगोविन्देत्यादिकायां स्तुतौ निर्गुणनिष्कलादिपदानां तमुद्दिश्य शिवत्वपरमेष्ठित्वविधानादिकस्य च विरोधापातात् । अतो निरुपधित्वं विष्णोरेव । तत्स्थानस्यैव च मायातारकत्वमिति निश्चयः ।

एतस्यैव विस्तारोऽग्रे पुराणे । तेन नवमाध्याये ब्रह्मणे शिवस्य परमपुरुषत्वं परब्रह्मत्वं च यद्विष्णुनोक्तं तत्स्वात्मकस्यैव, न तु स्वतोऽन्यस्योत्कृष्टस्य । अत एवाग्रे 'एतावदुक्त्वा भगवान् विष्णुस्तूष्णीं बभूव ह । ज्ञात्वा तत्परमं

तत्त्वं स्वमात्मानं सुरेश्वर' इत्युक्तम् । ततः प्रादुर्भूते शिवे 'क एष पुरुषो नीलः शूलपाणिस्त्रिलोचन' इति नीलवर्णत्वमुक्तम् । ब्रह्मणा प्रश्ने तमुत्तरयता विष्णुना च 'अस्यैव चापरां मूर्तिं विश्वयोनिं सनातनीम् । वासुदेवाभिधानां मामवेहि प्रपितामहे'ति स्वस्य पूर्वोक्तपरमेश्वराभिन्ननीलशिवव्यूहत्वमुक्तम् । यदि भवदभिमतरूपता प्रतिपाद्या स्यान्नैल्यं नोच्येत, विष्णोरंशता चोच्येत । एवंसति तामसकल्पत्वात्तदनुसारिणां हिताय शिवरूपप्रदर्शनं कार्यते । यथा 'कलौ माहेश्वरा लोका' इत्यतो गयायां लिङ्गरूपेण गदाधरदर्शनम् । तच्चोपपन्नं सर्वरूपत्वाद्भगवतः । तामसकल्पलक्षणं त्वग्रे वक्ष्यते । अतोऽत्र न विवादलेशः ।

एवमेव वायूक्तब्रह्माण्डोपपुराणेऽपि ज्ञेयम् । तथा हि, तत्र हि 'प्रपद्ये देवमीशान' मिति नमस्कृत्य स्वरूपगुणादिकं वदन् सूतः 'ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टय'मिति चत्वार्येव वक्ति न तु यशःश्रियौ । भगवांस्तु 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा'दितिषड्गुणः । किञ्चाग्रे 'पुराणं सम्प्रवक्ष्यामि यदुक्तं मातरिश्वने'ति प्रतिज्ञाय 'महेश्वरः परोऽव्यक्तश्चतुर्मूर्तिश्चतुर्मुखः । अचिन्त्यश्चाप्रमेयश्च स्वयम्भूर्हेतुरीश्वरः । अव्यक्तं कारणं यत्तदिदं सदसदात्मक'मिति सर्वात्मकत्वमुक्त्वा, 'महदादिविशेषान्तं सृजतीति विनिश्चय' इति कार्यं वक्ति, न तु प्रकृतिपुरुषजनकत्वमपि । तेनेदमपि न परत्वनिर्णायकम् ।

यत्तु 'नारायणः सर्वमिदं विश्वं व्याप्य प्रवर्तते । तस्यापि जगतः स्रष्टुः स्रष्टा देवो महेश्वरः । अतोऽस्य सङ्क्षेपमिमं शृणुध्वं महेश्वरः सर्वमिदं पुराणम् । स सर्गकाले च करोति सर्गं संहारकाले पुनराददीते'त्युक्तं प्रथमाध्याये । तदपि नारायणाख्यब्रह्मस्रष्टृत्वपरम् । यतः पञ्चमाध्याये षष्ठाध्याये च 'एकार्णवे तदा तस्मिन्नष्टे स्थावरजङ्गमे । तदा स भवति ब्रह्मा सहस्राक्षः सहस्रपात् । सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः । ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा । सत्त्वोद्रेकात्प्रबुद्धस्तु शून्यं लोकमवेक्ष्य च । इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति । आपो नाराख्यास्तनव इत्यपां नाम शुश्रुमः । आपूर्य नाभिं तत्रास्ते तेन नारायणः स्मृत' इति ब्रह्मणो जलस्थस्य प्रथमपुरुषस्य हिरण्यगर्भस्यैव नारायणत्वोक्त्या नारायणस्य रुक्मवर्णत्वोक्त्या च तत्स्रष्टृत्वमेव शिवे फलति। तच्च 'हिरण्यगर्भं पश्यति जायमान'मितिश्रुत्यनुरोध्येव। न तु तावतापि पूर्वोक्तरूपनिर्गुणविष्णुजनकत्वं सिध्यतीत्यत्रापि श्रीभागवताद्विरोध एव ।

एवमेव लैङ्गेऽपि द्रष्टव्यम् । तथाहि तत्र प्रथमेऽध्यायेऽस्य पुराणस्येशानकल्पानुसारित्वादिकम् । द्वितीये च निरूपयिष्यमाणानामर्थानामनुक्रमणीमुक्त्वा, तृतीये शास्त्रार्थं सगृह्णन्सूतः 'अलिङ्गो लिङ्गमूलं तु अव्यक्तं लिङ्गमुच्यते । अलिङ्गः शिव इत्युक्तो लिङ्गं शैवमिति स्मृत'मित्यादिना प्रधानप्राधानिकसृष्टिं सङ्क्षेपेणोक्त्वा, 'तस्माद्ब्रह्ममयं जग'दित्युपसंहृत्य, 'अलिङ्गी भगवान् बीजी स एव परमेश्वरः । बीजं योनिश्च निर्बीजं निर्बीजाद्बीजमुच्यत' इत्यनेनालिङ्गस्य भगवतो मूलरूपत्वं साधयित्वा 'बीजियोनिप्रधानानामात्माख्या वर्तते त्विह । परमात्मा मुनिर्ब्रह्मा शुद्धबुद्धस्वभावतः । विशुद्धो यस्ततो रुद्रः पुराणे शिव उच्यत' इत्यनेनालिङ्गस्य पूर्वोक्तभगवत एव शुद्धस्वभावत्वाद्विशुद्धत्वेन 'रुद्रः शिव' इति लिङ्गपुराणपरिभाषोक्तिपूर्वकं तस्मादेव सृष्टिमाह 'शिवेन दृष्टा प्रकृति'रित्यादिना । अतोऽत्रापि नाममात्रादेव भ्रमो भवति । वस्तुतस्त्वत्र प्रकृतिपुरुषजनकत्वाकथनादिहापि स एवार्थो यो ब्रह्माण्डपुराणप्रसङ्ग उक्तः ।

एवमेव शिवपुराणेऽपि शिवपदवाच्यः स एव ज्ञेयः । तादृशरूपप्रदर्शनं च तादृक्कल्पानुसारित्वादेवेत्युक्तम् । न चैवं सति सात्त्विकादिकल्पानुरोधाद्विष्णवादिरूपप्रदर्शनमिति न कोऽपि क्वापि विशेष इति वाच्यम्, इष्टापत्तेः । न चैवं सति पारमेश्वरस्य मुख्यरूपस्यानिश्चयाद्व्यर्थोऽयमाग्रह इति शङ्क्यं, कल्पस्वरूपविचारे श्रौतसरणिविचारे च तस्योपपादनीयत्वात् ।

अतः प्रकृतमनुसरामः । चतुर्थस्कन्धे दक्षाध्वरध्वंसोत्तरं ब्रह्मकृतशिवस्तुतौ पूर्वं 'जाने त्वामीश विश्वस्य जगतो योनिबीजयोः । शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तर'मिति परमशिवत्वमुक्त्वाऽग्रे तस्यामेव स्तुतौ 'भवाँस्तु पुंसः परमस्य मायया दुरन्तयास्पृष्टमतिः समस्तदृक् । तया हतात्मस्वनुकर्मचेतःस्वनुग्रहं कर्तुमिहार्हसि प्रभो' इति परमपुरुषमाययाऽस्पृष्टमतित्वमेवोक्तं न तु परमपुरुषत्वम् । अतः पुरुषोत्तमः परमशिवादधिक एव सर्वाकारो भक्तानुरोधेन नानामतप्रवृत्तये तत्तत्कल्पीयधर्मप्रवृत्तिदार्ढ्याय च तेन तेन रूपेण प्रकटीभवतीति सर्वेषु पुराणेष्वेतदविरुद्धमेव प्रतिपाद्यते । अत एव निर्णयसिन्धौ स्कान्दे 'स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचि'रिति । धर्मप्रवृत्तौ च 'अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् । शालग्रामस्य सम्पर्कात्सर्वं याति पवित्रता'मित्युक्तम् । अपरार्के मिताक्षरायां च प्रायश्चित्ताध्याये 'शैवान् पाशुपातान्दृष्ट्वा लोकायतिकनास्तिकान् । विकर्मस्थान् द्विजान् शूद्रान् सवासा जल-

माविशे'दित्युक्तम् । तदपि सङ्गच्छते । अतः श्रीभागवतोक्तप्रकारे सर्वथा न विवादलेशः । एवमेवान्यत्रापि ज्ञेयम् । तस्मात्पूर्वोक्त एव सिद्धान्तो निश्चितः ।

अथ भगवतो निर्गुणत्वप्रकृतिनियामकत्वस्वभावः प्रकाश्यते । स तु स्वशक्त्यनधीनत्वात्स्फुट एव । तथाहि चतुर्थस्कन्धसप्तमाध्याये ऋषिवाक्यम् 'अनन्वितं ते भगवन् विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे । विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्ततीं भवानि'ति । प्रथमस्कन्धे च 'वासुदेवपरा वेदा' इत्युपक्रम्य 'स एवेदं ससर्जाग्रे भगवानात्ममायया । सदसद्रूपया चासौ गुणमय्याऽगुणो विभु'रिति । द्वितीयस्कन्धे च 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थन्ते ममाहमिति दुर्धिय' इति । भगवद्गीतासु च 'त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययम् । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त' इति । महागारुडे च समासिदशायां ज्ञानामृते नारदं प्रति शिववाक्यम् । 'ऋतं सत्यं परं ज्ञेयं व्यक्ताव्यक्तं सनातनम् । निष्कलं विरजं विष्णुं सदा ध्यायन् विमुच्यते । अगृह्यमक्षरं नित्यं निर्गुणं तमसः परम् । सर्वदृक् शाश्वतं विष्णुं सदा ध्यायन् विमुच्यत' इति । एवमेव विष्णुवाराहविष्णुधर्मोत्तरादिषु स्फुटम् । अतोऽत्राप्यविरोधः ।

ननु 'पुराणैर्दशभिर्विप्राः प्रोक्तो रुद्रस्तथैव च । चतुर्भिर्भगवान् विष्णुर्द्वाभ्यामम्बा प्रकीर्तिता । अग्निरेकेन विप्रेन्द्रास्तथैकेन दिवाकरः । एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः । प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिष्वि'ति शिवमाहात्म्यखण्डीयाष्टमाध्यायवाक्ये विष्णोर्न्यूनत्वोक्तिविरोध इति चेत्,

न । एवं न्यूनत्वासिद्धेः । 'वेदे रामायणे पुण्ये पुराणे भारते तथा । आदावन्ते च मध्ये च हरिः सर्वत्र गीयते' इतिहरिवंशीयसमाप्तिस्थवाक्येन सर्वेषां भगवद्वाचकत्वसिद्धौ 'पुराणैर्दशभि'रितिवाक्योक्तपुराणानामुपपुराणत्वस्य तादृग्रूपमात्रपरतायाश्च स्फुटीभावात् । अन्यथा ब्रह्मपाद्मविष्णुवाराहब्रह्मवैवर्तश्रीभागवतेषु भगवद्वर्णनस्यैव स्फुटत्वेन प्रतीयमानत्वात् सङ्ख्याविरोधस्य दुष्परिहरत्वापत्तेः । अत एवाक्रूरस्तुतौ 'त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् । बह्वाचार्यविभेदेन भगवन् समुपासत' इत्युक्तम् । अग्रे च 'यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो । विशन्ति सर्वतः सिन्धुं तद्वत्त्वाङ्गतयोऽन्तत'इत्युक्तम् । भगवता च गीतायां 'येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वक'मित्युक्तम् ।

यत्तु अप्पयदीक्षितो रत्नत्रयपरीक्षायाम् 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। तमेव शरणं गच्छे'त्यत्रत्यमीश्वरपदं शिवपरत्वेन व्याख्यायास्य गुह्याद्गुह्यतरत्वकथनेन शिवभजनं गीतायामपि मुख्यत्वेन प्रतिपादितमित्याह;

तदतिकदर्थम्। एतदग्र एव 'सर्वगुह्यतमं भूयः शृणु मे परमं वच' इत्युपक्रम्य 'मन्मना भव मद्भक्त' इति, 'सर्वधर्मान्परित्यज्येति'श्लोकद्वयेन भगवच्छरणादेरेव मुख्यतयोपदेशादिति।

यत्तु कौर्मे ईश्वरगीतासु 'इदमेव भगवानर्जुनाय वक्ष्यती'ति कथनाच्छिवमाहात्म्यमेवात्रोच्यत इति कश्चिदाशशङ्के,

तदप्यबोधादेव। तत्रोपक्रमे नारायणाश्रमगतेभ्य ऋषिभ्यो ज्ञानोपदिदिक्षायामाविर्भूतं शिवं प्रति 'यदि प्रसन्नो भगवान्मुनीनां भावितात्मनाम्। सन्निधौ मम तज्ज्ञानं दिव्यं वक्तुमिहार्हसि। त्वं हि वेत्थ महात्मानं न ह्यन्यो विद्यते शिव। ततस्त्वमात्मानं मुनीन्द्रेभ्यः प्रदर्शये'त्युक्त्वा, 'प्रष्टुमर्हथ विश्वेशं प्रत्यक्षं पुरतः स्थितम्। ममैव सन्निधावेष यथावद्वक्तुमीश्वर' इति मुनीन् प्रत्युक्तम्। ततोऽन्तरिक्षादागतदिव्यसिंहासन उपविष्टयोः शिवनारायणयोर्नारायणं निरीक्ष्य शिवेन गीतोक्तेति कथास्ति। यदि शिवमहिमैव 'प्रतिपाद्यः स्यात्तदा 'त्वं हि वेत्थ महात्मान'मिति न वदेत्, 'स्वमात्मान'मिति च वदेत्। अत उत्तरार्धेऽपि आत्मानमित्यनेन वेदनकर्मभूत एवात्मा प्रदर्शनकर्मत्वेनानूद्यते, न तु प्रदर्शनकरणभूतः। 'ममैव सन्निधावेष'इत्यादिना स्वासन्निधाने तस्य कथनासामर्थ्यसूचनविरोधाघातात्। न च ममैव सन्निधावित्यस्य पूर्वेणान्वयो नाप्येवकारस्येश्वरपदेनान्वयश्च शक्यवचनः। 'मम सन्निधा'विति पुनःकथनस्य शिवकृतनारायणनिरीक्षणस्य च वैयर्थ्यापत्तेः। एवं सत्यग्रे यत्स्वात्मयोगपदं तत्रापि स्वपदेन मूलरूपं यदनारोपितं तदेव परामर्षणीयं, 'स्वमपीतो भवती'तिवत्, न तु वक्तृरूपम्, अनुपपत्तेरुक्तत्वात्। तेन यदग्रेतनं स्वस्य निर्दोषपूर्णगुणताप्रतिपादनं तत्सर्वं मूलरूपमहिमेति सिध्यति। अत एव वाराहे रुद्रगीतासु 'भैरवेण स्वरूपेण देवकार्ये यदा पुरा। नर्तितं तु मया सोऽयं सम्बन्धः पापकर्मणा। क्षयं निनीषता दैत्यानट्टहासो मया कृत'इति कौर्माद्युक्तनृत्यादेः स्वरूपमुक्तम्। अतोऽनुगमाधिकरणे मुख्यप्राणलिङ्गानामिव तेषामप्रयोजकत्वं बोध्यम्। उक्तविधोपक्रमेण एतां कृष्णोऽर्जुनाय वक्ष्यतीत्युपसंहारेण च मूलरूपपरत्वस्यैव सिद्ध्या विवादाभावात्। 'नमस्कृत्य जगद्योनिं कूर्मरूपधरं हरि'मिति पुराणोपक्रमात् 'यस्मात्सञ्जायते कृत्स्नं यत्र चैव प्रलीयते। नमस्तस्मै

सुरेशाय विष्णवे कूर्मरूपिण' इति पुराणोपसंहाराच्च, यदेतन्मध्ये माहात्म्यं प्रतिपादितं तत्सर्वं 'यतो वा इमानी'ति लक्षणकस्य तत्तद्रूपैस्तत्तत्कार्यं कुर्वतः परब्रह्मणो विष्णोरेवेति स्फुटति । द्वितीयाध्याये ' अहं नारायणो देवः पूर्वमासं न मे परमि'त्युक्त्वा 'यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भव' इति कथनाच्च तथेति । वस्तुतस्तु कौर्ममुत्सन्नकल्पमेव । 'इदं तु पञ्चदशमं पुराणं कौर्ममुत्तमम् । चतुर्धा संस्थितं पुण्यं संहितानां प्रभेदतः । ब्राह्मी भागवती सौरी वैष्णवी च प्रकीर्तिताः । चतस्रः संहिताः पुण्या धर्मकामार्थमोक्षदा' इति कथनादिदानीं च संहितात्रयालाभात् । कदाचित्कचिल्लाभेऽपि समासोक्त एवार्थो विस्तारेऽपि सेत्स्यतीति न विवादलेश इति दिक् ।

नच पाद्मे गीतामाहात्म्ये गीतायाः शिवरूपत्वकथनाच्छिवप्रतिपादकत्वं शङ्क्यं, शब्दार्थयोरैक्याभावात् । 'ज्योतिश्चरणाभिधाना'दित्यधिकरणे तथाप्रतिपादनात् । अत एव ' वेदः शिवः शिवो वेद' इति ' वेदैश्च सर्वैरहमेव वेद्य' इति ' हरिः सर्वत्र गीयत'इति वाक्यमप्यविरुद्धमिति दिक् ।

एवं सति वाराहे रुद्रगीतासु यदुक्तं, 'नारायणः शिवो विष्णुः शङ्करः परमेश्वरः । एतैस्तु नामभिर्ब्रह्म परं प्रोक्तं सनातन'मिति । यच्च कौर्मे 'अहं चैव महादेवो न भिन्नो परमार्थत' इति कूर्मवाक्यम् । तदपि सङ्गतं भवति । भगवत एकस्यैव तत्तत्कार्यार्थं तत्तद्रूपप्राकट्यात् । एवमैक्येऽपि यो विशेषो भगवद्रूपः स तूपपादित एवेति न क्वापि विरोधगन्धः । तेन चतुर्दशाध्याये कूर्मपुराणीये यच्छिवेन नारायणस्य स्वधर्मत्वमुक्तं तत्स्थितिकर्तुरेवेति सिध्यतीत्यदोषः ।

किञ्च मात्स्ये कल्पानुकीर्तनाध्याये चतुर्विधान्कल्पानुक्त्वा 'सङ्कीर्णेषु सरस्वत्याः पितॄणां सृष्टिरुच्यते । अग्नेः शिवस्य माहात्म्यं तामसेषूपवर्ण्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः । सात्त्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुच्यते । तत्रैव योगसंसिद्धा गमिष्यन्ति परां गतिमि'त्याद्युक्त्वाऽग्रे उच्यते, 'ब्राह्मसंवत्सरशतादेकाहः शिव उच्यते । शैववर्षशतादेकं निमेषं वैष्णवं विदुरि'ति । तेनापि तत्रैवाधिक्यं स्फुटीभवति । तेन भगवानेव गुणातिगो विष्ण्वाकारो नानाशब्दाभिधेयो मुख्य इति सिद्धम् ।

किञ्च पुराणसङ्ख्यानुक्रमणिकाध्याये च तथैवोच्यते । तेन तत्तत्कल्पानुसारिधर्मादिवक्तॄणां पुराणानामपि तथात्वमायाति । तत्र सर्वत्र यद्यपि तत्तद्धर्माचरणान्मुक्तिः फलमुच्यते, तथापि 'तत्रैव योगसंसिद्धा गमिष्यन्ति परां गतिं',

मिति मात्स्यस्य 'सात्त्विका मोक्षदाः प्रोक्ता राजसाः सुखदाः स्मृताः । तथैव तामसा देवि निरयप्राप्तिहेतवः' इति पाद्मोत्तरखण्डे द्विचत्वारिंशाध्याये उमा-महेश्वरसंवादस्थवाक्यस्य, 'पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः । तमसस्तु रजस्तस्मात्सत्त्वं यद्ब्रह्मदर्शन'मिति प्रथमस्कन्धद्वितीयाध्यायस्थवाक्यस्य च विचारे तामसराजसपुराणोक्तधर्माचरणात्तामसराजसावस्थात्यागरूपा क्रममुक्तिरेवायाति, न तु परमा, उक्तवाक्यविरोधात् । 'ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा'इति वाक्याच्च, उक्तप्रकारेण सर्वसामञ्जस्याच्च ।

अतो यैराग्रहवादेन पुराणेषु कल्पितत्वमुद्धोष्यते ते साहसिन इति ध्येयम् । व्यासपरितोषजनकत्वात्समाधिभाषात्वाच्च श्रीभागवतस्यैव सन्देहवारकत्वमस्मिन्विषय इति युक्तम् । इदं यथा तथा मया प्रपञ्चितं तत्त्वदीपावरणभङ्गे । अतो भगवद्धर्मा एव वैष्णवा शीघ्रनैर्गुण्यसम्पादकत्वान्मुख्याः ।

अत एव भारतेऽपि 'किञ्जपन्मुच्यते जन्तुर्जन्मसंसारबन्धना'दिति राज्ञा पृष्टेन भीष्मेण भगवत्सहस्रनामस्तोत्रं तथात्वेनोक्तम् । एवमेव भगवद्भक्तिरपि तत्र तत्र प्रशस्यते । तत्र तावच्छ्रीभागवते 'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवे'दिति गीतास्वपि 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पत' इति । गारुडेऽपि समासिदशायां, 'दृढा जनार्दने भक्तिर्यदैवाव्यभिचारिणी । तदा कियत्स्वर्गसुखं सैव निर्वाणहेतुकी । भ्राम्यतां तत्र संसारे नराणां धर्मदुर्गमे । हस्तावलम्बनं ह्येको भक्तितुष्टो जनार्दन' इति । एवमन्येष्वपि पुराणादिषु सहस्रशो वाक्यानि सन्ति ।

भक्ता अपि प्रशस्यन्ते । गीतासु ' महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्यय'मिति । गारुडे 'आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः । वैष्णवोऽस्मत्कुले जातः संसारात्तारयिष्यती'ति । ' ये नृशंसा दुरात्मानः पापाचाररतास्तथा । तेऽपि यान्ति परं स्थानं नारायणपरायणा ' इति । किञ्च, भगवत्सम्बन्ध एव निर्गुणमुक्तिहेतुः किमुत भक्तिः ? यथोक्तं श्रीभागवते ' कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा । नित्यं हरौ विदधतो यान्ति तन्मयतां हि त ' इति । गारुडेऽपि ' अज्ञानिनः सुरवरेशमधिक्षिपन्तस्तं पापिनोऽपि शिशुपालसुयोधनाद्याः । मुक्ति

गताः स्मरणमात्रविधूतपापाः कः संशयः परमभक्तिमतां जनानाम्’मिति। एवमन्यत्रापि वैष्णवादिपुराणेषु द्रष्टव्यानि। तस्माद्भक्त्यादिकमपि सर्वं भगवत्सम्बन्ध्येव मुख्यमित्यतोऽपि तत्रैवोत्कर्षः सिध्यतीति पुराणान्तरप्रतिपाद्यानां शिवादिरूपाणां तद्भक्त्यादीनामपि परम्परोपयोग इति नेहापि विरोधलेशः। इदमेवाभिसन्धाय ‘ आदिमूर्तिः कृष्ण एव सेव्यः सायुज्यकाम्यया। निर्गुणा मुक्तिरस्माद्धि सगुणा सान्यसेवये’ति श्रीमदाचार्यैरुक्तम्।

ननु ‘ ब्रह्मविष्णुमहेशानैरुपास्य’ इत्यादिषु सूतसंहितावचनेषु विष्णोरुपासकत्वमुक्तमिति कथं न विरोध इति चेद्,

उच्यते। तस्य विष्णोरन्यत्वान्न विरोधः। तस्यान्यत्वं तु महेश्वरसाहचर्येण निश्चीयते। अत एवाग्रेऽष्टमाध्याये ‘गुणेन तमसाच्छन्नो विष्णुः सत्त्वगुणं बुधाः। अधिष्ठाय भवेत्सर्वजगतः पालकः प्रभु’रिति। नवमाध्याये च ‘आसीदेकार्णवे घोर ’ इत्युपक्रम्य ‘सहस्रशीर्षा पुरुषो द्विजो नारायणाभिध’ इति। द्वादशाध्याये च ‘ अन्धकारावृते लोके विष्णोरंशो महाद्युतिः। सहस्रशीर्षा पुरुषो विष्णुर्नारायणाभिधः। ’ मुक्तिखण्डे ‘ विष्णुब्रह्ममहेशानैरुपास्यं गुणमूर्तिभि’रिति। ज्ञानयोगखण्डे विष्णुध्याने ‘शुद्धस्फटिकसङ्काश’मिति। क्वचिच्च ‘कुन्देन्दुसदृशप्रभ’मितिवाक्येषु गुणाधिष्ठातृत्वद्विजत्वविष्ण्वंशत्वगुणमूर्तित्वश्वेतवर्णानामुक्तिरपि सङ्गच्छते। एतेनैव स्कान्दब्रह्माण्डपुराणादिगोचरदेवेषु वर्णविभागादिके विष्णुशिवयोः क्षत्रत्वं द्विजत्वं, ‘कृष्णः स्त्रीसंज्ञको लोक’ इति हरिवंशाद्युक्तमुमाद्यवतारत्वं च व्याख्यातं ज्ञेयम्।

यत्तु काशीखण्डे ध्रुवं प्रति भगवद्वाक्यम् ‘ वैकुण्ठनगरात् काशीं नित्यं विश्वेशमर्चितुम्। अहमायामि नियमाज्जगदर्च्यां तदर्चिताम्। मयि या परमा शक्तिस्त्रिलोकीरक्षणक्षमा। तत्र हेतुर्महेशानः स सुदर्शनचक्रद’ इति, तदपि तस्य विष्णोरन्यत्वादेव युज्यते, रक्षकत्वेन सात्त्विकताबोधनात्। षड्विंशेऽध्याये आनन्दवने रममाणस्य स्वसर्वभारनिक्षेपेच्छया स्ववामाङ्गावलोकनेन जाते विष्णुनाम्नि पुंसि ‘तव निःश्वसितं वेदास्तेभ्यः सर्वमवैष्यसि। वेददृष्टेन मार्गेण कुरु सर्वं यथोचितम्। इत्युक्त्वा तं महेशानो बुद्धितत्त्वस्वरूपिण’मिति बुद्धितत्त्वात्मकत्वकथनाच्च।

न चैवं सति ‘ यदाहुः परमं ब्रह्म प्रधानपुरुषात्परम्। यन्मायया ततं सर्वं सर्वं दास्यति सोऽच्युत’ इति ध्रुवं प्रति पुलहवाक्ये ध्रुवाय तत्स्थानदातुः परब्र-

ह्मत्वकथनविरोध इति वाच्यम् । पुलहाद्युपदेशेन प्रवृत्तस्यापि तस्याहङ्कारात्प्रवृत्तत्त्वात्तदर्थं पूर्णब्रह्मण आविर्भावाभावात् । श्रीभागवते यो भगवदाविर्भावः स तु तत्कल्पीयध्रुवस्य सात्त्विकत्वाज्ज्ञेयः । अत एवतद्दत्त्वा साधनान्तरमनुपदिश्यैव ततो भगवतो गमनं गरुडस्य वेदात्मकत्वं ध्रुवस्यानुतापोऽपि सङ्गच्छते । इह तु तदभावादुभयं समञ्जसमेव । एतेनैव 'निशामय महाभाग त्वं मैत्रावरुणे मुने । पाराशर्यो मुनिवरो यथा मोहमुपैष्यती'त्यारभ्य स्कन्देनोक्तं, काशीस्थविश्वेशाग्रे विष्णुस्तुत्या व्यासभुजस्तम्भनादिकं श्रीभागवतदशमस्कन्धस्थभृगुकृतपरीक्षादिकं च व्याख्यातं ज्ञेयम् । अतः पुराणेषु तत्र तदधिकारानुसारेण फलार्थं नानारूपेण स एव सङ्कलीकृत्य प्रतिपाद्यत इति न कोऽपि क्वापि कदापि विरोधलेशः । अत एवाग्रे गङ्गामाहात्म्ये 'तदा भगीरथो राजा क्व क्व भागीरथी तदा । यदा विष्णुस्तपस्तेपे चक्रपुष्करिणीतट'इति देव्याः सन्देहे जाते 'सन्देहोऽत्र न कर्तव्यो विशालाक्षि सदामले । श्रुतौ स्मृतौ पुराणे च कालत्रयमुदीर्यते । भूतं भव्यं भवच्चापि संशयं मा वृथा कृथा' इति शिवेनोक्तम् । तेन पुराणेषु सङ्कलय्य कथनेऽपि तत्तल्लिङ्गात्तथातथा निश्चयम् । न तु विरुद्धोक्तिभिर्भेत्तव्यमिति दिक् ।

अत एव वाराहे प्रागितिहासे रुद्रगीतासु 'कस्मिन् प्रधानो भगवान् काले कस्मिन्नधोक्षजः । ब्रह्मा वा एतदाचक्ष्व मम देव त्रिलोचने'त्यगस्त्यप्रश्ने रुद्र आह, 'विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते । वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः । विश प्रवेशने धातुस्ततस्तु प्रत्ययादनु । विष्णुर्यः सर्वदेवेषु परमात्मा सनातन' इति । तदग्रिमाध्याये च भगवत्स्तुत्यनन्तरं च प्रार्थनार्थमाज्ञापने ततो 'अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु । मूर्तो भूत्वा भवानेव मामाराधय केशव । मां वहस्व सदैवेश वरं मत्तो गृहाण च । त्वामेवाराधयिष्यामि त्वं च मे वरदो भव । येनाहं सर्वदेवानां पूज्यात्पूज्यतरो भवे'तिप्रार्थने विष्णुरुवाच 'देवकार्यावतारेषु मानुषत्वमुपागतः । त्वामेवाराधयिष्यामि त्वं च मे वरदो भव । यत्त्वयोक्तं वहस्वेति देवदेव उमापते । सोऽहं वहामि त्वां देव मेघो भूत्वा शतं समा' इति वरदानोत्तरं रुद्र आह, 'एवमेष हरिर्देवः सर्वगः सर्वभावनः । वरदोऽभूत्पुरा मह्यं तेनाहं दैवतैर्वृतः । नारायणात्परो देवो न भूतो न भविष्यति । एतद्रहस्यं वेदानां पुराणानां च सत्तम । मया वः कीर्तितं सर्वं यथा विष्णुरिहेज्यते'इति ।

तथैव गारुडेऽपि द्वितीयाध्याये । अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरम् । सर्वदं सर्वगं सर्वं सर्वप्राणिहृदि स्थितम् । भस्मोद्धूलितदेहस्तु जटामण्डलमण्डितः । विष्णोराराधनार्थं मे व्रतचर्या पितामहे'त्युक्तम् । एवंसति यज्ञवैभवखण्डे या निन्दा 'विष्णवादीनां तु देवानां ध्यानं वा धर्ममिष्यत' इति 'महापापवतां पुंसां पूर्वजन्मसु सुव्रताः । विष्णुः सर्वाधिको भाति न साक्षात् परमेश्वरः । विष्णुः सर्वाधिको भाति नारकी स न संशयः । विष्णुः सर्वाधिको नान्य इति चिन्तयतां नृणाम् । नास्ति संसारविच्छित्तिः कल्पकोटिशतैरपी'त्यादिनोक्ता, सापि शिवधर्मखण्डोक्तशिवविभूतिरूपशिवभक्तविष्णुपरैव; ध्यानोपक्रमानुरोधात् । तत्र हि 'व्यष्टिभूतास्तु देवता' इत्युक्तत्वात् । न तु निर्गुणविष्णुपरा, सर्वशास्त्रविरोधकप्रसङ्गकत्वात् ।

वस्तुतस्तु सापि न विष्णुनिन्दनपरा, किन्तु कायिकादिभ्यो मानसयज्ञस्य श्रेष्ठत्वं प्रकृत्य 'ध्येयभेदेन सोऽप्येवमुत्तमाधमभेदतः । द्विविधस्तत्र देवस्य शिवस्य ध्यानमुत्तम'मित्युपक्रमाद् 'अतः शिवः सदा ध्येयः प्राधान्येन मनीषिभि'रित्यग्रेदर्शनाच्च तत्स्तुतिपरा ज्ञेया, सन्दंशपतितत्वात् । 'नहि निन्दा निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतु'मितिन्यायाच्च । अन्यथा 'तव द्रोहस्त्वदीयानां प्रद्वेषश्च जनार्दन । त्वदीयवधवाञ्छा च ज्ञानानुत्पत्तिकारण'मिति तत्रैवं शिवो न वदेत् । किञ्च 'विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः । तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दना'दित्याचारमाधवलिखितवाक्येन विष्णोः सर्वाधिकत्वं बोधयतो योगियाज्ञवल्क्यस्य, श्रीभागवतादिपुराणानि वदतः सूतस्य, तत्कर्तुर्व्यासस्य, कूर्मपुराणपूर्वभागसप्तदशाध्याये 'द्वैपायनाच्छुको जज्ञे भगवानेव शङ्करः । अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पद'मिति वाक्ये तु तस्य शुकस्यैवंविधस्यान्यस्य च मुक्तिर्दूरापेतैव स्यात् । किञ्च 'अविनयमपनय विष्णो'इति षट्पदीं वदतो वैशम्पायनादिसहस्रनाम व्याकुर्वतः शङ्कराचार्यस्य काचिद्गतिः परिचिन्त्यतां, ययैव भवदीप्सितसिद्धिः । अत ईदृशां वचसां तादृशाधिकारिपराणां स्वपक्षस्थापनापरत्वमेवेत्यलमुक्त्या ।

एतेनैवाग्रिमा स्तुतिरपि व्याख्याता । तत्र युक्तिस्तूक्तैव । ये त्वेवं न मन्वते, तेषामिदानीन्तनानां शिवभक्तत्वाभिमानिनां यज्ञवैभवखण्डीयतृतीयाध्यायस्थैः 'यानि लोके निषिद्धानि कर्माण्यविहितानि च । तानि शम्भोर्महापूजेत्येतज्ज्ञानं महामखः । यानि सर्वाणि कर्माणि निषिद्धानि श्रुतौ स्मृतौ । तानि चाराधनं शम्भोरिति ज्ञानं महामखः । ईश्वरार्थं धिया पापान्यपि

कर्माणि सुव्रताः । भवन्ति पूतान्यत्यन्तं सत्यमेव न संशयः । आर्द्रकाष्ठं महानग्निः शुष्कं कृत्वा दहेद्यथा । तथेश्वरधिया पापं शुद्धविज्ञानदं भवेदि'-त्यादिवाक्यैर्माहात्म्यश्रवणेनाग्रे च 'कायिकः कर्मयज्ञस्तु कथितः सङ्ग्रहेण तु । भवन्तोऽपि महायज्ञं कायिकं कुरुत द्विजा' इति विध्याभासेन चागम्यगमन-ब्रह्महिंसासुरापानादिकरणेऽपि को वारयितेति दिक् ।

इदमत्र पुराणपथमनुसृत्योक्तम् । श्रौते तु पथि विचार्यमाणे तैत्तिरी-याणां नारायणोपनिषदि 'सहस्रशीर्षं तं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पद'मित्युपक्रम्य, 'विश्वं नारायणं हरि'मित्यादिना सर्वरूपत्वाद्युक्त्वा, हृदयमध्ये या वह्निशिखा जीवकलारूपा तामप्युक्त्वा, 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः, स ब्रह्म स शिवः स हरिः सेन्द्रः-सोऽक्षरः परमः स्वराडि'त्युपसंहाराान्नारायणस्य परमात्मनः सर्वाण्येव रूपाणी-त्यवगम्यते । प्रत्युत शौनकीशाखीयमहोपनिषदि 'अथातो महोपनिषदमेत-दाहुरेको ह वै नारायण आसीन्न ब्रह्मा' ।

अत्र कश्चिदाह बृहदारण्यकादौ साधारण्येनोक्तं ब्रह्मोपासनं नारायणो-पनिषदि परमशिव उपसंह्रियते । तथा हि, अत्र ह्युपासनाविषयास्त्रयोऽनुवाकाः समाम्नायन्ते । तत्र प्रथमे रुद्ररूढमहेश्वरशब्दानुरोधाद्रुद्रस्यैवोपास्यत्वमिति द्वितीयानुवाकविहितस्य नारायणस्योपास्यत्वासम्भवः । यथा ह्यामिक्षाधिकर-णविषयवाक्योक्ते यागे उत्पत्तिशिष्टामिक्षाद्रव्यावरुद्धत्वादुत्पन्नशिष्टस्य वाजि-नगुणस्य न समावेशस्तथा महेश्वररूपदेवतावरुद्धत्वात्प्रकृतोपासनेऽपि देवता-न्तररूपस्य नारायणस्य न समावेश इति;

तत्तुच्छम् । रूढेरनिर्णायकत्वात् । तल्लिङ्गाद्यधिकरणविरोधात् । आमि-क्षान्यायस्यापि तन्त्रान्तरसिद्धत्वेन गुणोपसंहारन्यायबाध्यत्वेन चात्र प्रवृत्त्य-सामर्थ्यात् । नारायणोपासकतागमकस्यात्रानुपलम्भेन तदप्रसक्तेश्च 'त्रयोऽनु-वाका उपासन' इति त्वसङ्गतमेव । बहूनां तादृशां तत्र सत्त्वादिति ।

ननु शिवार्कमणिदीपिकायां तद्भ्रमकमत्र निरूपितम् । तथा हि, 'अनुप-पत्तेस्तु न शारीर' इत्यस्य विषयवाक्यं हि 'पतिं विश्वस्यात्मेश्वरं शाश्वतं शिव-मच्युतम् । नारायणं महाज्ञेय'मित्युपन्यस्य, तत्र विश्वपतित्वादिलक्षणो मूर्त्यात्मा नारायणः प्रतिपाद्यते उत परमेश्वरः ? इति सन्देहे 'सहस्रशीर्षं देव'-मित्यादिषु सहस्रशीर्षत्वादीनां विधेयविशेषणत्वेन नारायणस्यैव मूर्त्यात्मनो-ऽभ्यासात् । 'समुद्रेऽन्तं विश्वशम्भुव'मितिसमुद्रशायित्वलिङ्गाच्च । नारायणप-

र्यायवाचकाच्युतहर्यादिपदप्रयोगाच्च। नारायण एव मूर्त्यात्मत्वविश्वपतित्वादिधर्मवत्तया प्रतिपाद्यत इति पूर्वपक्षयित्वा अग्रे सिद्धान्तितं, नारायणात्मा परमेश्वर एव। कुतः? विश्वपतित्वादीनां परमेश्वरधर्माणां मूर्त्यात्मन्यर्थान्तरे नारायणानुपपत्तेः। 'पशूनां पतये वृक्षाणां पतये जगतां पतये' इत्यादिश्रुत्यन्तरेण परमशिव एव निखिलभुवनाधिपत्याभ्यासात्। 'एको रुद्रो न द्वितीयाय तस्थुर्य इमान् लोकानीशत' इति रुद्रव्यतिरिक्तजगदीश्वरनिषेधात्। 'विश्वाधिको रुद्रो महर्षि'रिति विश्वाधिकत्वश्रावणाच्च। तस्मान्नारायणान्तर्यामी परमशिव एवेति। नारायणान्तर्यामित्वं च परमशिवस्य 'कर्मकर्तृव्यपदेशाच्चे'ति सूत्रे व्यवस्थापितम्। तदर्थस्तु कर्तृत्वकर्मत्वयोर्व्यपदेशात्, कयोरिति चेत्, ध्यातृध्येययोः परमेश्वरनारायणयोः, कथमिति चेदित्थम्। 'पद्मकोशप्रतीकाश'मिति प्रकृतस्य नारायणस्यैव हृदयमुच्यते। 'परमात्मा व्यवस्थित' इति परमेश्वरस्तदन्तर्यामितया ध्येयत्वेनोच्यते। ततो ध्यातृत्वेन नारायणस्य कर्तृत्वं ध्येयत्वेन परमेश्वरस्य कर्मत्वं व्यपदिश्यत इत्यत्र नारायणोपासकतागमकोपलम्भ इति चेत्,

न। एतस्य विषयश्रुतिविरुद्धत्वात्। तथाहि, अत्र हि प्रथमानुवाकोपक्रमे 'अणोरणीयान्महतो महीयानि'त्यर्धेन सच्चिदानन्दरसस्य परमेश्वरस्य गुहावस्थानमुक्त्वा, तृतीयपादेन वीतशोकस्य दर्शनं वदन्, भगवत्प्रसादात्सपरिकरं पश्यतीत्याह 'महिमानमीश'मिति। परमेश्वरप्रसादात्तं तस्य महतो महीयसो महिमरूपमीशं पश्यतीत्यर्थः। ततस्तस्य महिमरूपत्वं स्फुटीकरोति 'सप्त प्राणा' इति द्वाभ्याम्। येन हेतुना एष भूतः स्वतःसिद्ध अन्तस्तिष्ठति तेन हेतुना तस्मादीशात्सप्त प्राणाः प्रभवन्तीत्यादि। तथा चेशस्यान्तः परमेश्वरस्थित्येत्यनेन तथासामर्थ्यं न स्वत इतीशः परमेश्वरस्य महिमरूप इत्यर्थः। ततः पुन'र्ब्रह्मा देवाना'मित्यादिभिर्महिमानं नानाविधं वदन् ब्रह्मादिभ्यो महिमभ्यस्तस्य पूर्ववर्तित्वमाह 'यो देवानां प्रथम'मिति मन्त्रेण। तथा च सर्वमहिमभ्यो मुख्यः परमेश्वरमहिमा। ईशः स रुद्र इति देवः, नः अस्मान् शुभया स्मृत्या परमेश्वरानुसन्धानरूपया संयुनक्तु।' परमेश्वरदर्शनं हि वीतशोकस्य। वीतशोकत्वं च शुभस्मृत्या, सा च रुद्राधीनेति तत्प्रार्थना। वेदभाष्ये सायणीये तु–'रुवैदिकः शब्दस्तं द्रवतीति, एतेन परमेश्वर एव व्याख्यातो न तु रूढः शिवः। एवमनेन महिमरूपं रुद्रं रूद्वा परमेश्वरं वा योगेन वेदप्रतिपाद्यतया प्रतिपाद्य निष्कृष्टं परमेश्वरमेव साक्षादाह 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न

ज्यायोऽस्ति कश्चि'दित्यादि । अत्र द्वितीयपादेऽणोरणीयस्त्वसिद्ध्या मन्त्रस्य परमेश्वरपरत्वम् । एवं परमेश्वरं सपरिकरं निरूप्य तदुपासकान् तेषां तत्प्राप्तिं तस्योपास्यत्वं च त्रिभिराह 'न कर्मणा ने'त्यादिभिः । ततो 'यो वेदादौ स्वर' इति मन्त्रेण तस्य नादनियामकत्वं वदन् परमेश्वरत्वमुपसंहरति, 'स महेश्वर' इति । अतोऽस्मिन्ननुवाके भवदभीप्सितस्य न सिद्धिः ।

एवं दशमानुवाके हृदयपुण्डरीके यः परमेश्वर उक्तस्तस्य गुणविशेषान् विस्तारेणैकादशानुवाक आह 'सहस्रशीर्षं देव'मित्यादिभिः । अत्र च 'सहस्रशीर्षे'त्यादिकं स्वरूपबोधनाय, नारायणपदस्य परमेश्वरेऽभ्यासो नामत्वबोधनाय, द्वितीया विभक्तिश्च ध्येयत्वेन कर्मत्वबोधनाय । एवं सार्धेन ध्येयमुक्त्वा ध्यातारं पुरुषमहार्धेन 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवती'ति; इदं परिदृश्यमानं विश्वमेव पुरुषो विराडात्मेत्यर्थः । स तत् पूर्वोक्तं विश्वं नारायणरूपमन्तर्यामिणमुपजीवत्यनुसरति, एतमेव ध्येयत्वेन दृढीकर्तुं पुनर्द्वितीयान्तेनाह 'पतिं विश्वस्ये'त्यादिना । 'आत्मेश्वर'मिति पूर्वोक्तपुरुषस्य स्वमहिमरूपस्य नियामकम् । तदेव दृढयति 'विश्वात्मानमि'ति । उपजीवकस्य विश्वपुरुषस्यात्मानं व्यापकमित्यर्थः । एतदेव दृढयति द्वाभ्यां पाठभेदेन सार्धद्वाभ्यां वा 'नारायणपरं 'ब्रह्मे'त्यारभ्य 'स्थित'इत्यन्ताभ्याम् । वस्तुपरिच्छेदनिरासाय ध्यातृध्यानयोरपि नारायणत्वबोधनं तैलङ्गपाठीयार्धेन स्फुटति । तेनात्र मूर्त्यात्मा नारायणो न प्रतिपाद्यते, अपि तु देशकालवस्तुपरिच्छेदरहितः परमेश्वरो नारायणः प्रतिपाद्यते । विश्वपुरुषान्तर्यामितया च मध्ये ध्येयत्वं तस्यैव वक्तुं 'अनन्तमव्यय'मित्यादिद्वितीयान्तानि पदान्युक्त्वा, तदधिष्ठेयां गुहां 'पद्मकोशे'त्यादिभिर्विवृत्याधिष्ठातारमाह 'तस्याः शिखामन्ये'इत्यनेन । एवं सत्यत्र कर्मत्वेनैव नारायणस्य प्रकृतत्वात् 'पद्मकोशे'त्यादिना हृदयं पूर्वोक्तस्योपजीवकपुरुषस्यैव परामृश्यते । अतः शिवार्कमणिदीपिका नारायणध्यातुस्तन्महिमरूपस्य शिवार्कस्य तेजसा हतदीधीतिरेवेति विभाव्य मदुक्त एवार्थो मुक्तलज्जैरादरणीयः । शौनकीशाखीयमहोपनिषदि 'सहस्रशीर्ष'मित्यारभ्य 'परमः स्वराडि'त्यन्तानां ध्येयनारायणपरतायाः स्फुटत्वाच्च ।

अथ प्रसङ्गादग्रिमानुवाकस्यापि प्रयोजनमुच्यते । भक्तिप्राप्यत्वादिप्रतिपादनाय परोक्षेण मुख्यस्वरूपकथनाय च स इति । तथाहि 'ऋतं सत्यं अनारोपितसत्यं, परं ब्रह्मतत्त्वपरं, पुरुषं पुरुषरूपं कृष्णपिङ्गलं पिङ्गं व्रजभक्तरूपस्वर्णगौरं लाति गृह्णाति स्वीकरोति पिङ्गलः, कृष्णः पिङ्गलश्च तं ऊर्ध्वरेतसं निष्कामत्वाद्

विरूपाक्षं विशिष्टं सुन्दरं रूपं निरुपमं ययोस्तादृशे अक्षिणी यस्य तादृशम् । नमाम इति शेषः । नमने प्रकारमाह–'विश्वरूपाय'रासादिलीलायामनेकरूपाय नमोनम इति इति । एतेन भगवति जीवैर्नमनमेव निरुपधिप्रेमविषये कर्तव्यमित्युक्तम् । इदमेव च स्वरूपं गोपालतापनीये प्रपञ्चितमिति दिक् ।

एवं च मन्त्रोपनिषदि'शृण्वन्तु विश्वे अमृतस्य पुत्रा'इत्याद्युक्त्वा, दहरोपासनं विधाय, 'यद्वेदादा'वित्यादिना प्रणवप्रतिपाद्यत्वं चोक्त्वा, कृष्णपिङ्गलादिकं यदुक्तं, तदप्येवम्परमेवेति न कोऽपि चोद्यावकाशः ।

एवं सति पूर्वोपन्यस्तवेदभाष्योक्तदिशा श्वेताश्वतरोपनिषदादावपि रुद्रशब्दो वेदप्रतिपाद्यपरब्रह्मपरो यौगिक एव, न रूढः, अनुपपत्तेरुक्तत्वात् ।

एवमेव रुद्राध्यायेऽपि निखिलाधिपत्यप्रतिपादनं तत्परमेव ज्ञेयम् । 'तस्कराणां पतय' इति नवनीतचौर्यादिलिङ्गाच्च ।

यच्च जाबालोपनिषदि 'अथ हैनं ब्रह्मचारिण ऊचुः । जप्येनामृतत्वं ब्रूहीति । स होवाच याज्ञवल्क्यः शतरुद्रियेणेति । अमृतस्य वा एतानि नामधेयानि एतैर्ह वा अमृतो भवती'ति निरूपितम् । तत्तथैव नान्यथा, परन्तु न तेषां मुख्यनामत्वम् । 'रुद्रजापिशतमेकमेकेनाथर्वशिरःशिखाध्यायकेन तत्सममथर्वशिरःशिखाध्यायशतमेकेन मन्त्रराजजापकेन तत्सम'मिति नृसिंहपूर्वतापनीयसमाप्तौ श्रुत्या रुद्रजापिनां न्यूनताकथनात् ।

नारायणोपनिषदि च 'य इमां महोपनिषदं ब्राह्मणोऽधीत' इत्युपक्रम्य 'इतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्तो'तिश्रवणाच्च । अतः पूर्वप्रतिपादित एवार्थः साधीयान् ।

यच्च कैवल्योपनिषदि हृत्पुण्डरीकं प्रस्तुत्य 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त'मिति स्वरूपमुक्तं, तदप्यस्माकं त्वभीष्टमेव, सर्वाकारत्वाद्भगवतः । तथात्वं चानुकृत्यधिकरणभाष्ये प्रतिपादितमाचार्यैः । अत्रोपनिषद्यपि नीलकण्ठत्वकथनेन शिवाकारे भगवति कर्पूरगौरतास्फुटीभावात्पूर्वविचारितासु पूर्वोक्त एवार्थः सुदृढतरः सम्पद्यते । एवं च केनोपनिषद्यपि'उमां हैमवती'मित्यस्य पुरःस्फूर्तिकार्थग्रहणेऽप्यदोषः ।

एतेनैवाथर्वशिरोऽपि व्याख्यातप्रायमेव । तत्रापि 'सहस्रपादेकमूर्धे'ति 'रूपकथनाद्भवदीप्सितस्यासिद्धेः । तथाथर्वशिखायामपि बोध्यम् ।

यत्तु हरदत्ताचार्याः 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः, जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णो'रितिमन्त्रेण,

उमया सह वर्तत इति सोमो रुद्रस्तथा च विश्वजनकरुद्रवाचकसोमशब्दवाच्यत्वगुणयोगेन सोमलता स्तूयत इत्यर्थतया विष्णोरपि जन्यत्वं सिद्धमित्युक्तवन्तः,

तदप्यबोधादाग्रहाद्वा । अत्र तृज्ज्ञापकाभावात् । लुटाप्यर्थसिद्धेः । मत्यादीनां विष्णवन्तानां सम्बन्धी जनिष्यते अतः 'सोमः पवत'इति तृजाग्रहेऽपि मत्यादिसमभिव्याहृतस्य देवनाविशेषरूपस्य तस्य जन्यतायामप्यहानेश्च । नामसाम्यमात्रेण पदार्थान्तरसामर्थ्यकल्पने छागस्यापि रुद्रगुणवत्त्वप्रसक्तेः । 'हरच्छागवस्तछलका'इतिकोशेन हरपदवाच्यत्वगुणयोगस्य तत्रापि सत्त्वात् । 'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदा शिवः । एते पञ्च महाप्रेताः पादमूले व्यवस्थिता'इत्यादिवाक्याच्छिवे प्रकृतिपादमूलस्थमहाप्रेतरूपताप्रसक्तेश्च । एतेनैव ध्येयनिर्धारोत्तरं 'ब्रह्मविष्णुरुद्रेन्द्राः सम्प्रसूयन्त'इत्यथर्वशिखोक्तं, 'विष्णुर्नाम महायोगी महामायो महातपा'इत्यादियोगशिखोक्तं, 'उत्तराह नुर्यज्ञोऽधरा विष्णु'रितितैत्तिरीयारण्यकस्थशिशुमारोपस्थानमन्त्रोक्तमेवम्प्रकारकमान्यत्रिकमपि व्याख्यातं बोध्यम् । विष्णुपदानेकार्थतायाः पूर्वमुपपादितत्वात् ।

एवं च स विष्णवाख्योऽधियज्ञोऽसौ 'कालः कलयतांवर'इति विष्णुत्वोक्तिपूर्वकं 'गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भया'दिति ब्रह्मविष्णुभयजनकतादिकथनमपि तृतीयस्कन्धस्थं सङ्गच्छते ।

एकादशस्कन्धे 'वृषपर्वा बलिर्बाणो मयश्चाथ विभीषण'इति शैवत्वेन प्रसिद्धयोर्बाणमययोर्भगवता स्वप्राप्तिकथनं च युज्यते । 'यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् । सह भूतेन्द्रियैः सर्वैः प्रथमं सम्प्रसूयत'इत्यादिजातीयकं शिवादिपुराणोक्तमपि तथेत्यलमुक्त्या ।

यत्तु गायत्र्यां भर्गःशब्दात् तत्रापि शिव एवोच्यत इत्युक्तं तत्तु न सङ्गतं, तत्र भर्गःशब्दस्य शान्तस्य वरेण्यविशेषणतया प्रविष्टस्याखिलाविद्याभर्जकवरणीयपरब्रह्मस्वरूपपरत्वात् । 'जन्माद्यस्य यत'इति श्रीभागवतारम्भे तथानिर्णयात् । ज्योतिश्चरणाधिकरणोक्तदिशा गायत्र्या अपि परब्रह्मैकपरत्वाच्च । तस्मादस्मदुपपादितेऽर्थे न कोऽपि सन्देहः ।

किञ्च गोपालोत्तरतापनीये 'स होवाचाब्जयोनिरवताराणां मध्ये श्रेष्ठोऽवतारः को भविते'ति ब्रह्मणः प्रश्ने 'स होवाच तं हि वै नारायणो देव'इत्यादिना कृष्णावतारस्यैव श्रेष्ठता ब्रह्मता च प्रतिपादिता । तेनावताररूपविचारेऽपि तस्यैव मुख्यता ज्ञेया ।

न च 'तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वा वाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणशंसितमसी'-तिच्छान्दोग्ये देवकीपुत्रस्य शिष्यत्वश्रावणात्पूर्णब्रह्मत्वं न साधीय इति शङ्क्यं; तदर्थानवगमात्। तथाहि, अत्र हि स्वदीर्घजीवनफलकं पुरुषयज्ञोपासनं मरणावभृथकं पूर्वमुक्तं, तदवगत्याग्रे 'मुक्तिप्रेप्सुर्घोरः कृष्णाय'तदेतदुपासनादि-स्वरूपमुक्त्वा वक्ष्यमाणं परोक्षवादेनोवाच, परोक्षप्रियत्वाद्भगवतः। 'स घोरः अपिपास एव बभूव',पूर्वोक्तयज्ञावभृथस्य ज्ञानात्तस्मादुपासनाद्वितृष्णो जातः। सोऽन्तवेलायां एतद्वक्ष्यमाणं 'अच्युतमसी'त्यादिमन्त्रत्रयं प्रतिपद्येतानुसन्द-ध्यादिति। तथा च वक्ष्यमाणगृह्यप्रकाश्यमन्त्रार्थरूपस्त्वमसीत्यन्तसमये 'प्रत्य-क्षीभूतं त्वामेवमनुसन्दध्या'दिति ऋगुक्तब्रह्मज्योतिःप्राप्त्यर्थैषा प्रार्थनेति अस्याः श्रुतेः पूर्वोक्तार्थबाधकत्वात्। शिष्यत्वगमकानुपलम्भेन तथाव्याख्यान-स्यासाधुत्वाच्चेति दिक्।

किञ्च, शौनकीशाखीयमहोपनिषदि 'अथातो महोपनिषदमेतदाहुरेको ह वै नारायण आसीन्न ब्रह्मा न ईशान' इत्युपक्रम्याग्रे दशेन्द्रियादीनां सृष्टिमुक्त्वा पठ्यते, 'अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाध्यायत तस्याध्यानान्तः-स्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत बिभ्रच्छ्रियं सत्यं ब्रह्मचर्य'-मित्यादि। सा च त्र्यक्षःशूलपाणित्वलिङ्गाच्छिवस्यैवोत्पत्तिं वक्ति। ऋग्वेदे देवीसूक्ते च 'अहं रुद्राय धनुरातनोमी'तिमन्त्रात्पूर्वं पठ्यते 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः। यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधा'मिति। तस्यैवोत्तरं च, 'अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे, ततो वितिष्ठे भुवनानि विश्वोतामूं द्यां वर्षणोपस्पृ-शामी'ति। तेन रुद्रब्रह्मादीनां देवीत उत्पत्तिस्तस्याश्च समुद्रस्थाद्विष्णो-रिति दृश्यते।

आथर्वणनारायणोपनिषदि तु कण्ठत एव नारायणाद्रुद्रोत्पत्तिरुक्ता। 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रोऽजायत' इति। अग्रे च 'नारायणात्प्रजा-यन्ते नारायणात्प्रतीयन्ते नारायणे प्रलीयन्त' इति च। तेनापि देवतान्तररू-पस्य गुणाधिष्ठातुरेव च सा ज्ञेया, न तु गुणातीतस्य। अत एवाग्रे 'अथ ब्रह्मा नारायणः शिवश्च नारायणो रुद्रश्च नारायणः प्रजापतिश्च नारायण'इत्यारभ्य 'कालादित्योर्ध्वाधोऽन्तर्बहिरिदं सर्वं यद्भूतं यच्च भव्यं भविष्य'मित्युक्त्वा, सर्वस्य नारायणत्वं प्रतिपाद्य, 'अथ निष्कलो निर्विकल्पो निराख्यातः शुद्धो

देव एको नारायणोऽस्ति न द्वितीयोऽस्ति कश्चन य एवं वेद स विष्णुरेव भवती'त्युक्तम् । तेनापि सर्वं नारायणाभिन्नं तज्ज्ञश्च निर्गुणो विष्णुर्भवतीति स्फुटति । तेनापि भगवतः सर्वाकारत्वरूपस्तदीयस्य निर्गुणत्वरूपश्च पूर्वोक्त एव सिद्धान्तो दृढीभवति ।

इदं च यथा तथा ब्रह्मसूत्रसुबोधिनीनिबन्धविद्वन्मण्डनेषु महता प्रपञ्चेन प्रतिपादितम् ।

या तु शिवसङ्कल्पसूक्ते 'परात्परतरो ब्रह्मा तत्परतरो हरिः तत्परात्परतरो ह्येष तन्मे मनः शिवसङ्कल्पमस्त्वि'तिखिलश्रुतिः, सापि 'येनेदं भूतं भुवनं भविष्यत्परिगृहीतेन सर्वम् । येन यज्ञस्तायते सप्त होता तन्मे मनः शिवे'ति-सूक्तोपक्रमे मनसो ब्रह्मरूपस्योल्लेखात्तत्परा । मनसो वशे सर्वरूपत्वेऽपि कृष्णस्वरूपस्य मुख्यरूपता त्वथर्वशिरआदीनां गौणरूपनिरूपकतोपपादनादिनैवोपपादितेत्युपरम्यते ।

ननु भवत्वेवमवतारश्रेष्ठत्वं तथापि यदुवंशेऽवतीर्णस्य तु कलात्वमेव सिध्यति 'ताविमौ वै भगवतो हरेरंशाविहागता'वित्यादिवाक्येभ्यः । तथासति न पूर्णत्वं, अंशत्वपूर्णत्वयोर्विरोधात् । अतस्तत्रादिमूर्तित्वमनुपपन्नमिति चेत्,

'अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान् स्वय'मितिवाक्यात् 'कृष्णद्युमणिनिम्लोच'इतिवाक्ये द्युमणित्वेनावतारदशायामपि निजधामस्थताव्यवस्थापनात् । 'स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा । परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्नि'रिति विदुरं प्रत्युद्धववाक्येऽग्निदृष्टान्तेन व्यापकस्यैव प्रादुर्भावबोधनाच्च पूर्णत्वे पूर्वोक्तवाक्यादंशत्वे च सिद्धे कार्यार्थं ते ते कलांशादयोऽपि तत्र सन्तीति तत्र तत्र कार्ये तेन तेनांशेनैव प्रकटीभवतीत्यविरुद्धत्वादुभयसिद्धेस्तत्रादिमूर्तित्वहान्यभावात् । अत एव 'न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् । पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च य'इत्यादिना शुकोक्तं व्यापकत्वं दामोदरजृम्भामृत्स्नाभक्षणलीलादौ प्रकटितं सङ्गच्छते । अनन्तमूर्तित्वं पञ्चाध्याय्यां नारदकृतपरीक्षायां च स्फुटमेव । तदेव तैत्तिरीयोपनिषदि प्रतिपादितं–'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दिति । अतो न दोषः ।

अत एव ब्रह्मवैवर्ते प्रकृतिखण्डे एकोनपञ्चाशत्तमाध्याये हरगौरीसंवादे 'यन्मायया मोहिताश्च ब्रह्मविष्णुशिवादयः । वैष्णवास्तां महालक्ष्मीं परां राधां वदन्ति ते । यदर्धाङ्गा महालक्ष्मीः प्रिया नारायणस्य च । प्राणाधिष्ठातृ-

देवीं च प्रेम्णा प्राणाधिकां वराम् । शश्वत्प्रेममयीं शक्तिं निर्गुणां निर्गुणस्य च । नारायणश्च शम्भुश्च संहृत्य स्वगुणान् बहून् । शुद्धसत्त्वस्वरूपी च कृष्णे लीनश्च निर्गुणे । गोपा गोप्यश्च गावश्च तथान्ये च नराधिपाः । सर्वे लीनाः प्रकृत्यां च प्रकृतिः प्रकृतीश्वरे । महद्विष्णौ विलीनाश्च ते सर्वे क्षुद्रविष्णवः । महाविष्णुः प्रकृत्यां च सा चैवं परमात्मनि । प्रकृतिर्योगनिद्रा च श्रीकृष्णे नेत्रपद्मयोः । अधिष्ठानं चकारैवं मायया चेश्वरेच्छया । प्रकृतेर्वासरं यावन्मितं कालं प्रकीर्तितम् । तावद्वृन्दावने निद्रा कृष्णस्य परमात्मनः । पुनः प्रजागरे तस्थुः पुनः सृष्टिर्भवेत्पुनः । एवं सर्वे प्राकृताश्च श्रीकृष्णं निर्गुणं विने'त्युक्तम् । तदप्येवमेव सङ्गच्छते नान्यथा ।

ननु भवत्वेवं मूलरूपे, तथापि भारतादौ 'भगवता शिवः पूजित'इति स्मर्यते । सूतसंहितायां चाग्रे 'भगवान् देवकीसूनुः सर्वभूतहिते रतः । महादेवप्रसादार्थमिदं पठति नित्यश'इति । तथासत्यवतारस्यास्य न शिवाच्छ्रैष्ठ्यमित्यायाति । एवमेव तदग्रे सेतुमाहात्म्यकथने च राघवमुपक्रम्य 'राक्षसेशवधोत्पन्नां ब्रह्महत्यां विधाय सः । प्रतिष्ठाप्य महादेवं श्रीमद्रामेश्वराभिध'मिति कथ्यते, अतस्तत्रापि तथेति चेद्,

उच्यते । लोकसङ्ग्रहार्थमियं भगवल्लीलेति तद्बोधकत्वेनैषां सङ्गतिरिति न शिवाच्छ्रैष्ठ्यहानिरिति जानीहि । तदुक्तं भगवता 'सक्ताः कर्मण्यविद्वांस' इत्यादिना, 'न मे पार्थास्ति कर्तव्य'मित्यादिना च तामसानां विमोहार्थं चेदम् । तदग्रे वक्ष्यते । अथैवं न मनुषे, तदा भवतापि शिवस्य कपालित्वे का वा सङ्गतिर्वाच्या ? न चेदमप्रमाणम्, मात्स्येऽविमुक्तमाहात्म्ये दर्शनात् । यथोक्तं देवीं प्रतीश्वरेण 'आसीत्पूर्वं वरारोहे ब्रह्मणस्तु शिरोऽपर'मित्युपक्रम्य 'स एवमब्रवीद्देवि जन्म जानामि ते ह्यहम् । ततः क्रोधपरीतेन संरक्तनयनेन च । वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया । ब्रह्मोवाच । यस्मादनपराधस्य शिरः छिन्नं त्वया मम । तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि । ब्रह्महाकुलितो गत्वा चरंस्तीर्थानि भूतले' । ततो हिमवति गत्वा नारायणाद्भिक्षायाचने, ततो नारायणेन स्ववामपार्श्वरुधिरदाने, तेन कपालपूरणाभावे ततो हि विष्णुप्रेरणेनाविमुक्तगमने, 'विष्णुप्रसादात्सुश्रोणि कपालं तत्सहस्रधा । स्फुटितं बहुधायातं स्वप्नलब्धं वचो यथे'ति ।

एवमेव पाद्मोत्तरखण्डे सप्तपञ्चाशत्तमेऽध्याये सुबाहुं प्रति वसिष्ठवाक्येऽपि, 'छिन्नं हरेण सहसा क्रोधाविष्टेन वै शिरः । ब्रह्मणस्तत्तु संलग्नं महा-

रुद्रं दुरासदम् । ब्रह्महत्यायुतो रुद्रो रुरोदातीव दीनधीः । नोमा तमर्हयामास रक्तस्राविणमीश्वरम् । दशवर्षसहस्राणि जग्मू रुद्रस्य दुःखतः । उमा विश्वेश्वरं विष्णुं वरेण्यं वरदं प्रभुम् । जजाप भर्तृदुःखार्ता ब्रह्महत्याविमुक्तये । वासुदेवं परम्ब्रह्म परमात्मा परात्परः । परं धाम परञ्ज्योतिः परं तत्त्वं परं पदम् । पूर्वोक्तं शङ्करेणेदं प्रियायै रहसि प्रियम् । तज्जपं परया भक्त्या पूर्णानन्दः सह श्रिया । प्रत्यक्षीभूय तां गौरीमुवाच जगदीश्वरः । विष्णुरुवाच । मा दुःखं कुरु सर्वेशे जगदम्बे भवप्रिये । त्रिस्पृशा कार्तिके मासि शुक्लपक्षे मम प्रिया । एकादशीव्रतं कार्यं त्वया मृडसुखाप्तये । नेदृशं पावनं किञ्चित्त्रैलोक्ये भवभामिनि । एव मस्त्विति सा नत्वा पूजयामास तावुभौ । तामाश्वास्य जगन्नाथो ययौ स्वस्थानमीश्वरः । उमा व्रतं त्रिस्पृशाया एकादश्या विधानकम् । नारदस्योपदेशेन कृत्वा पुण्यमघापहम् । ददौ रुद्राय महते शिवोऽभूत्तत्क्षणान्नृप । कपालहरमुत्सृज्य स्थितं दूरतरं गत'मिति कपालमोचनमाहात्म्याज्ज्ञेयम् ।

अगस्त्यसंहितायां चारम्भे सुतीक्ष्णेन पृष्टोऽगस्त्यो 'अस्ति वक्ष्यामि तं सर्वं रहस्यं वृषभध्वज । यत्प्रत्यपादयत्पूर्वं पार्वत्यै कृपयान्वित' इति संवादमुपक्षिप्येश्वरोक्तिमुखेन रामोपासनं हिरण्यगर्भसिद्धान्तश्रवणेन पार्वतीप्रपत्तिं शिवयोर्जगद्योनिबीजत्वेन तस्या वैराग्ये प्रपञ्चोच्छित्तिं ततः शिवेन बोधनं पूजाकारणादिकं च यदुक्तं तदप्येवमेव सङ्गतं स्यान्नेतरथा ।

किञ्च शिवपूजायां बीजं वाराहपुराणोक्तं पूर्वमुक्तमेव । तथा पाद्मसहस्रनामारम्भे च भगवता 'त्वामाराध्य तथा शम्भो गृहीष्यामि वरं सदा । द्वापरादौ युगे भूत्वा कलया मानुषादिष्वि'ति । पाद्मोत्तरखण्डे पञ्चदशाध्याये च 'अहमप्यवतारेषु त्वां च रुद्र महाबल । तमोवतां विमोहाय पूजयामि युगे युग' इति भगवतोक्तं तत्सर्वं शिवेनैवोमां प्रत्युक्तमतो मदुक्तमेव सुकलज्जैरादरणीयम् ।

यत्तु कश्चिद्भगवति बहुनायकत्वश्रवणाद् रुद्रे चैकपत्नीकत्वप्रसिद्धेरन्यथा शशङ्के, तदपि भ्रान्त्यैव । मात्स्ये देवीतपोवनगमने 'कृष्णेत्युक्त्वा हरेणाहं स्तम्भितं मे मनः सदा । साहं तपःकरिष्यामि यथा गौरीत्वमाप्नुयाम् । एष स्त्रीलम्पटो देवो यातायां मय्यनन्तरम् । द्वाररक्षा त्वया कार्या नित्यरन्ध्रानुपेक्षणात् । यथा न काचित्प्रविशेद्योषिदन्या हरान्तिक'मिति वीरकं प्रति देवीवचनात् । तदग्रिमाध्याये पर्वतदेवतां प्रति तथावचनाच्च । रत्नत्रयपरीक्षायां सनत्कुमारसंहितादिवचनान्युपन्यस्याप्यैय्यदीक्षितेनापि तथाप्रतिपादनाच्चेति दिक् । एवंसति 'ताविमौ वै भगवतो हरेरंशाविहागतौ । भारव्ययाय च भुवः कृष्णौ

यदुकुलद्वहा'विति चतुर्थस्कन्धीयं सितकृष्णकेशमुपक्रम्य 'तयोरेको बलभद्रो बभूवे'ति भारतीयमेवञ्जातीयकं हरिवंशीयं च सङ्गतं भवति। एवंसति द्विजपुत्रानयनार्थं लोकालोकपरस्थानं गत्वा तत्रत्यप्रभवे नमस्कारवल्लोकसङ्ग्रहार्थं सूर्योपस्थानादिवच्च शिवपूजनमपि तादृशेनैव रूपेण क्रियत इति ततो वरादिकं च गृह्यत इति आरण्यकसौप्तिकद्रोणपर्वादिवाक्येष्वपि न काप्यनुपपत्तिः। अत एव आश्वमेधिके 'यत्राहं देवयोनिं च वर्तामि भृगुनन्दन। तदाहं देववत्सर्वमाचरामि न संशयः। मनुष्ये वर्तमानेन कृपणं याचितं मये'ति लोकानुकरणकथनं गीतास्वपि 'वृष्णीनां वासुदेवोऽस्मी'ति विभूतित्वकथनमपि सङ्गच्छते। एवं च मौसले कालिकापुराणादौ च या देहत्यागाद्युक्तिर्या च मात्स्यादौ जरासुतयुद्धे च पलायनाद्युक्तिर्या च पाद्मभूखण्डादौ भृगुशापाद्युक्तिः, सापि नाट्येन मर्यादारक्षार्थं शापाच्छिवस्य पैशाच्योक्तिवदासुरव्यामोहाय चेति न ताभिरपि भगवति दोषसञ्चारः। 'अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा। तथा प्राकृतदेहत्वं देहत्यागादिकं तथा। असुराणां विमोहार्थं दोषा विष्णोर्न कर्हिचि'दिति ब्रह्माण्डपुराणात्। अत एव बाणबाहुच्छेदे शिवेन 'त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृक्हेतुरहेतुरीश'इत्युक्तम्। किम्बहुना ?

'वाराहपाद्मादिषु गारुडादौ प्रदृश्यमानानि वदन् वचांसि।

ये तद्विरुद्धं प्रलपन्ति तेषां कृणोति नासाः खलु कृत्तिवासाः'। इति दिक्।

अथेदं विचार्यते। भगवत आकारः स्वतो वा मायात एव वेति। तत्राद्य एव पक्षः साधीयानिति वदामः। कुतः? आकारोक्तौ मायानुल्लेखादिच्छामात्रस्य कारणत्वोल्लेखान्निषेधस्य विरुद्धधर्माश्रयतो बोधकत्वादेवं सकलश्रुत्यविरोधात्प्राचामाचार्याणां तथा सम्प्रदायप्राप्तत्वाच्चेति। तथाहि 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पा'दित्यादिवाक्येषु 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ सहस्रपादेकमूर्धा सर्वतः पाणिपादं तदि'त्यादिषु च वाक्येषु पठ्यमानेषु महानारायणमुण्डकाथर्वशिरःश्वेताश्वतराद्युपनिषत्सु वाक्यात्पूर्वं पश्चाच्च मायापदादर्शनात्।

ननु 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयत'इत्यत्रास्ति मायापदमिति चेत्,

किमेतावता ? एतस्य पुरुरूपज्ञानकरणतयोल्लेखात्। अन्यथा पूर्वार्धे एव 'मायया बभूवे'त्येव वदेत्। अनुवादे च पुरोवादवैलक्षण्यानौचित्यात्।

न च 'यद्वाचानभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत'इत्यादिषु तलवकारमन्त्रेषूपास्यस्याब्रह्मत्वोक्तेराकारस्य मायि-

कत्वमिति वाच्यम् । तत्र हि 'केनेषित'मित्यनेन मनआदिप्रेरकं जिज्ञास्यत्वेनोपक्षिप्य, 'श्रोत्रस्य श्रोत्र'मित्यादिना सर्वाधिदैविकत्वादिकं तल्लक्षणं च वदन् कार्यादिद्वारा च परिचाययन्नाह 'यद्वाचे'त्यादि । तथा च यद्वागाद्यगम्यं तत्प्रेरयितृ तदेव ब्रह्म त्वं विद्धि । नेदं वागादि न विद्धि, मनआदिप्रेरकं हि अपरं ब्रह्म न त्वेतदेव, प्रेर्यत्वात् । कीदृशं तदित्यत आह यदिदं श्रुतिप्रसिद्धं उपासते वैदिकोपासका इति वाक्यशेषः । यद्युपास्यस्याब्रह्मत्वमभिप्रेयादिदङ्कारं पुनर्न ब्रूयात् । 'नेदं यदुपासत'इत्येतावतैवाब्रह्मत्वसिद्धेः। अतस्तत्स्वरूपपरिचायनार्थमेवेदमिति नानेनाप्याकारस्य मायिकत्वसिद्धिः । 'वाचारम्भणवाक्यं तु ब्रह्माभिन्नत्वबोधक'मिति तदनन्यत्वाधिकरणादेवावगम्यते । 'अनृतं वै वाचा वदति अनृतं मनसा ध्यायती'त्यादि तु प्रपञ्चबोधकम् । प्रपञ्चसत्यत्वं तु 'सत्यं चानृतं च तत्सत्यमभव'दिति श्रुत्यैव प्रतिपादितम् । उपपादितं च भाष्यादिष्विति न किञ्चिदेतत् । एवं च सिद्धे नैसर्गिक आकारे ततो मायातोऽप्यबाधान्मायिकोऽप्यस्तु पुरुषप्रतिबिम्बादिवत् ।

न च नृसिंहोत्तरतापनीये 'जीवेशावाभासेन करोति माया वा विद्या च स्वयमेव भवती'त्युक्त्वा ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमपी'तिकथनादस्ति मायिक एवाकार इति वाच्यम् ।

तदर्थानवबोधात् । तथा हि तत्र हि पूर्वव्याख्यातस्य प्रणवप्रतिपाद्यात्मनः पुनरुपदेशार्थं देवैर्विज्ञापने प्रजापतिस्तथेत्यङ्गीकृत्य, 'उपद्रष्टे'त्यादिनोपदिश्य 'न्नात्मैव सिद्धो द्वितीय'इति प्रतिज्ञाय, 'मायया ह्यन्यदिव स एष आत्मा पर एवे'त्यनेनात्मनि पराभिन्नत्वं प्रतिपादयंस्तत्प्रतीतिप्रतिबन्धकमायास्वरूपं एषैव सर्व'मित्यादिना सदृष्टान्तं निरूप्य, महाबलां सकार्यां सभेदां तां परिचाययिष्यन् 'आत्मा परमात्मैवे'त्यादिनोक्तरूपस्याप्यस्य निर्बलत्वाय शारीरस्य मुग्धत्वमनुभाव्य तमोरूपतां च तस्या अनुभाव्य, 'तदेतज्जडमोहात्मके'त्यादिनोक्तरूपस्य प्रपञ्चाख्यरूपस्य व्यञ्जकत्वं परमात्मनः सकाशान्निवृत्तत्वं पूर्वोक्तमूढैरात्मवद् दृष्टत्वं च प्रतिपाद्य, प्रपञ्चसत्त्वासत्त्वदर्शकत्वं तस्या उक्त्वा 'वटे'त्यादिना तद्व्याकुर्वन्, 'वटबीजे'त्यनेनोक्तमस्या एकत्वदृष्टान्तं 'तद्यथे'त्यादिना 'सन्तिष्ठती'त्यन्तेन व्याकृत्य 'एवमेषे'त्यादिना दार्ष्टान्तिके विशेषमाह 'वटबीजं तु वटानुत्पाद्य सर्ववटेषु पूर्णं तिष्ठति, इयं तत्पादनासमर्था तत्रस्था नासमर्था चातः क्षेत्राणि दर्शयित्वा जीवेशाभासेन करोती'–त्यादि । तत्र कानि क्षेत्राणि दर्शयतीत्याकाङ्क्षायामाह 'सैषे'त्यादि

दीप्ते'त्यन्तम्। तेन त्वियं नानाविधेति 'नानाविधान्दर्शयती'त्युक्तम्। तत्र दर्शनीय आकाराभावे दर्शनासम्भवाद्दर्शनीयस्वरूपमाह 'तस्मा'दित्यारभ्य 'योनित्वमपी'त्यन्तम्। तथा च यद्यात्मा न स्याद्ब्रह्मादिरूपेण मायायां नाभासेत। यदि च योनिरात्मा न स्यात्तथा क्षेत्राणि न स्युः, यदि न स्युः प्रकृतौ न दृश्येयुरत आत्मन एव त्रैविध्यं योनित्वमपीति। एवंसति 'एषैव सैषाविद्या जगत्सर्वं तदेतज्जडमोहे'त्यादिना पूर्वं यज्जगतो मायिकत्वादिकमुक्तं तत्तावदेतद्दर्शितस्यान्तरालिकसृष्टिरूपस्यैव सिध्यति, तु भगवदात्मकस्येति दर्शकत्वमेवास्यास्तेनापि पुष्यतीति ज्ञेयम्। एवं दर्शकत्वं तस्याः सामर्थ्यं चोक्त्वा, यावाभासेन करोति तयोर्जीवेशयोः स्वरूपलक्षणमाह 'अभिमन्ता जीवो नियन्तेश्वर' इति। एवं सामान्यत उक्त्वा तौ परिचाययति 'सर्वाहम्मानी'त्यादि 'व्यक्तचैतन्य' इत्यन्तम्। ईश्वरं च परिचाययति 'सर्वगो ही'त्यादिनात्मे'त्यन्तम्। तथा च प्रणवप्रतिपाद्यात्मनो द्वितीयतृतीयपादरूपौ यावुक्तौ ताविमाभासेन करोतीत्यर्थः सम्पद्यते। आभासेन करणं 'चैकधा बहुधा चैव दृश्यते जलचन्द्रव'दिति श्रुत्यन्तरेंऽशानुप्रवेशेऽपि पूर्णत्वप्रत्यायनात्स्पष्टम्। तदुपपादितं मया तत्त्वदीपविवृतिप्रकाशे। एवं सति 'विष्णुब्रह्मशिवरूपिणी'तिमतुबर्थे निप्रत्ययेन तस्यां मायिकाकारसिद्धिर्न तु मायिक एव भगवत्याकारः। स्वतस्तदभावे प्रतिभासेऽप्याकारो न स्यात्। द्विचन्द्रादौ तथानिश्चयात्। तदेतद्धृदिकृत्य तस्याः प्रयोजनमाह 'सर्वं सर्वमय'मित्यारभ्य 'व्यवहरन्नास्ते माययै'वेत्यन्तम्। तथा चैतादृशत्वेऽपि जीवानामल्पत्वान्मोहो भगवतस्तु प्रविश्यामूढत्वेऽपि मूढवद्व्यवहारस्तत्प्रयोजनमित्यर्थः। एवं तदुपयोगमुक्त्वा फलितमाह 'तस्मादित्यारभ्यावगत'इत्यन्तम्। तत्र सत्तामात्रत्वं निगमयति 'सत्तामात्रे'त्यारभ्यास'दित्यन्तम्। ततः सत्यत्वं व्युत्पादयति 'सत्यं हीत्थमित्यारभ्य स विष्णुरीशानो ब्रह्मान्यदपि सर्वं सर्वगं सर्वे'मित्यन्तम्। एवमग्रेऽपि बोध्यम्। तद्व्याख्यानं च तद्दीपिकायां मया दर्शितम्। इह तु तदर्थमप्रवृत्तत्वादिदानीं न प्रदर्श्यते। एवं सति तुरीयपादनिरूपणे 'यत्तुरीयस्येश्वरग्रासः स्वराट् स्वयमीश्वरः स्वप्रकाश'इति माहात्म्यमुक्तं तदपि सङ्गच्छते। स च प्रकरणान्नृकेसर्यात्मेति स एवैवंविधनानाकारः फलतीति नानयापि श्रुत्या केवलमायिकाकारसिद्धिः।

अत एव भगवान् बादरायणो विविधमतजालकलितनिगमकल्पशालपशिपालनालवालभूतमपि संराधनोभयव्यपदेशाख्यमधिकरणद्वयं प्रणिनाय। तत्र हि प्रथमे 'न चक्षुषा गृह्यते, कश्चिद्धीरः प्रत्यगात्मानमैक्षत्, नापि वाचा, सर्वे

वेदा यत्पदमामनन्ति, तं त्वौपनिषदं पुरुषम्, अप्राप्य मनसा सह मनसैवाप्तव्यम्, अस्पर्शमगन्धमरसं, सर्वगन्धः सर्वरसः, अपाणिपादः, विश्वतश्चक्षुः, निर्गुणः सर्वज्ञः सर्ववित् परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी'त्यादिष्वितरेतरविरुद्धवाक्येषु प्रत्याय्यमानस्यैकस्य वस्तुनो द्विरूपत्वासम्भवात्प्रमाणान्तरेण दृश्यादर्शनेन तदनुग्राहिकया 'नेति नेति, अगृह्यो नहि गृह्यत'इत्यादिकया श्रुत्या च धर्मवाचकश्रुतीनामुपचरितार्थत्वं 'तदव्यक्तमाह ही'त्यनेनाशङ्क्य 'अपि संराधने प्रत्यक्षानुमानाभ्या'मित्यनेन समाहितम्। तत्र 'अपिः' पूर्वपक्षिगर्हायां, मूर्खः पूर्वपक्षीति। यतः संराधने सम्यगाराधने सेवायां तोषे जाते दृश्यते 'श्रद्धाभक्तिज्ञानयोगादवैहि, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा'मिति । तदनुगृहीतया 'भक्त्या त्वनन्यये'त्यादिस्मृत्या । 'सुदुर्दर्शमिदं रूपं द्रष्टवानसी'ति स्मृत्यनूक्तेन संराधकदर्शनेन चैवमवसीयते। अतो न तासामुपचरितार्थत्वं नाप्यन्यासाम् । 'ततस्तु तं पश्यते निष्कलं ध्यायमानः, अनेकबाहूदरवक्त्रनेत्रं पश्यामी'तिद्विधाप्यनुभवोक्तेः । ध्रुवादीनां चानुभापकत्वम्। तथा च तादृशप्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां वा साकारमनन्तगुणपूर्णं ब्रह्म न त्वव्यक्तमेवेति । एवमेवाग्रिमेऽधिकरणे स्वरूपविरोधे श्रुतिप्रत्यक्षाभ्यां निर्णयानौचित्यं सूत्रद्वयेनाशङ्क्य, 'उभयव्यपदेशात्त्वहिकुण्डलव'दिति सूत्रे द्विविधश्रुत्यनुरोधेनाहिकुण्डलन्याय आदृतः । यथा सर्पः ऋजुरनेकाकारकुण्डलश्च भवति तथा ब्रह्म स्वेच्छया सर्वाकारं भवतीति । तथासति कल्पनाशास्त्रोक्तानि बाधकानि श्रुत्येकसमधिगम्ये प्रवेशमपि न लभन्त इति निर्णीतम् । 'शब्दादेव प्रमितः' 'श्रुतेस्तु शब्दमूलत्वा'दित्यादिभिश्च श्रुत्येकसमधिगम्यत्वं तत्र तत्र प्रकटीकृतमेवाचार्येण । युक्तयो विविधन्यायाश्च तथा बुद्धिरहितानामेवार्थे प्रदृश्यन्ते । धर्माणां ब्रह्मणः सकाशाद्भेदोऽभेदो वेत्याद्याशङ्क्य च प्रकाशाश्रयाधिकरणेन तदग्रिमेण च स्वमतैकदेशिमताभ्यां निराक्रियत इति न काचिदनुपपत्तिः ।

एतेनैव रामतापनीये 'चिन्मयस्याद्वितीयस्य निष्कलस्याविकारिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने'त्यत्रोक्तः कल्पिताकारोऽपि पूर्वोक्तादविरुद्धः । लौकिकाकाररहितस्य यल्लौकिकाकारग्रहणं तस्य कल्पितताया औचित्यात् ।

अत एवागस्त्यसंहितायां 'स्त्रीपुन्नपुंसकाकाररहितः पुरुषोत्तमः । सर्वेश्वरः सर्वरूपः सर्वदेवमयो हरिः । सत्यज्ञानमयोऽनन्तोऽनादिरानन्द उच्यते' इति द्वितीयस्वरूपमुक्त्वा, तृतीयाध्याये, 'सर्वेश्वरः सर्वमयः सर्वभूतहिते रतः । सर्वे-

षामुपकाराय साकारोऽभून्निराकृतिरि'त्युक्तम्। परमुभयत्रापि मायानुल्लेखादिच्छयैव स आकारो ज्ञायते। 'सोऽकामयते'तिश्रुत्यनुरोधादभिध्योपदेशसूत्राच्च।

एवं च 'गोपरूपो हरिः साक्षान्मायाविग्रहधारिण'इति कृष्णोपनिषद्यपि। मायया कृतोऽयं विग्रहः परस्परं गुणविरोधस्तद्वत्तेत्यर्थो ज्ञेयः। 'गोपरूपो हरिः साक्षा'दित्युक्त्वा मायाविग्रहस्योक्तत्वात्। अन्यथा 'मायया गोपविग्रह' इति वदेत्।

ननु 'स्वयमेवात्मनात्मानं'मितिवाक्येन भगवत एव स्वस्वरूपवेत्तृत्वात्स्वयं च 'प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायये'तिकथनात्कृष्णस्वरूपं मायिकमिति चेत्,

न। एतस्य वाक्यस्य 'बहूनि मे व्यतीतानी'तिसन्दर्भप्रविष्टत्वेन तत्रत्योत्तमपुरुषगम्यास्मच्छब्दस्य 'आदित्यानामहं विष्णु'रित्यादिष्विव विभूतिपरतया तज्जन्मबोधकत्वेन भगवत्स्वरूपतथात्वाबोधकत्वात्। अतएव 'अव्यक्तं व्यक्तिमापन्न'मितिसन्दर्भे अबुद्धिज्ञानप्रकारमुक्त्वा, स्वाज्ञाने हेतुं चोक्त्वा, तदज्ञातं स्वस्वरूपमुक्तं 'मामजमव्यय'मिति। 'योगमायासमावृत' इत्यस्य भगवद्विशेषणत्वाङ्गीकारेऽपि तस्या आवरकत्वान्नाकारसमर्पणहेतुत्वमित्याकारोऽत्र ब्रह्मात्मक एक एव। एतदेव 'प्रकृतिं स्वा'मित्यस्य पूर्वार्धेऽपि 'अजोऽपि स'न्नित्यादिना परामृष्टम्। तेनात्रापि अनन्यभक्त्यैकदृश्यस्य परमेश्वरस्य स्वाभिन्नानन्दमात्रकरपादमुखोदरादे'रानन्दरूपममृतं यद्विभाती'त्यादिश्रुतिसिद्धस्यैव सिद्धौ सम्भवस्यैव मायाकरणकत्वकथनाद् 'देवकीजन्मवाद' इति जन्मनो वादमात्रत्वकथनाच्च जन्मन एव मायिकत्वमिति ज्ञेयम्।

न च 'भगवानात्ममायया' 'पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशु'रिति, 'यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः। भूभारः क्षपितो येन जहौ तच्च कलेवर'मिति प्राकृतशिशुभवनशरीरत्यागयोः कथनात्स्वरूपस्यापि मायिकत्वं दुर्वारमिति वाच्यम्।

तदर्थानवबोधात्। 'प्राकृतशिशु'रित्यस्य वसुदेवादिभावकथनमात्रपरत्वात्। न चात्र मानाभावः, प्रथमस्कन्धीयेन नटदृष्टान्तेन तथानिश्चयात्। तथाहि नटो हि सामाजिकव्यामोहार्थं बाह्यवेशादिभिः स्वस्वरूपमेव मत्स्यादिरूपेण प्रदर्शयति, न तु तदर्थं शरीरान्तरं गृह्णाति, जहाति वा; तथा भगवानपि भूभारक्षपणाय मातृप्रार्थनया कंसादिनिवृत्त्यर्थं च यद्रूपान्तरं वेशवद्गृहीतवांस्तदेव जहौ। तत्रापि यथा सिसृक्षया स्वात्मरूपस्य जगतो बहिर्भावः

